**नवेति**। नव नन्दान् नन्दं च तत्पुत्रांश्चेत्येवं नव। प्रपन्नान्[1] विश्वस्तान्विख्यातान्वा। द्विजः कौटिल्यवात्स्यायनादि पर्यायश्चाणक्य उद्धरिष्यति उन्मूलयिष्यति तेषामभावे[2] मौर्या[3]:मौर्यसंज्ञा[3]: ॥१२॥

**वीर०** ततः प्रद्योतनेभ्यः शिशुनागो भविता तत्सुतः शिशुनागसुतः काकवर्णः तस्य काकवर्णस्य सुतः क्षेमधर्मा तस्माज्जातस्तु क्षेत्रज्ञः ॥५॥

**विधिसार** इति तस्य क्षेत्रज्ञस्य अजातशत्रुरित्यस्य विधिसारादित्यादिः, तत्सुतः अजातशत्रुसुतः ॥६॥

**नन्दिवर्द्धन** इति। आजेयः अजयस्यात्मजः तत्सुतः नन्दिवर्द्धनसुत ॥७॥

कुरुश्रेष्ठेति सम्बोधनम्। महानन्दिसुत इति। हे राजन्!॥८॥

**महापद्मपतिरिति**। अन्वर्थं नाम महापद्मसङ्ख्यायाः सेनाया धनस्य वा पतिरिति, स च (शूद्रा) शूद्रीगर्भोद्भवः, बली अधिकबलयुक्तश्च क्षत्रकुलविनाशकृच्च। नन्द इति तस्यैव नामान्तरं यतोऽयं शूद्रीगर्भोद्भव अत एव तत आरभ्य नृपाः शूद्रप्रायाः अधार्मिकाश्च भविष्यन्ति ॥९॥

**स** इति। महापद्म इति नामैकदेशग्रहण महापद्मपतिः अनुल्लङ्घितशासनः प्रजाभिरनुल्लङ्घितमात्मशासनं यस्य सः। एकमेव छत्रं यस्यां तथाभूतां पृथ्वीं शासिष्यति पालयिष्यति। द्वितीयो भार्गवः परशुराम इव ॥१०॥

**तस्येति**। तस्य महापद्मपतेः सुतान्विशिनष्टि य इति। सहस्रं संवत्सरान् ॥११॥

**नव नन्दानिति**। नन्दशब्दस्तत्सुतपरश्च। 'आत्मा वै पुत्र' (कौ.षी. 3. 2-11- ) इति श्रुत्यनुरोधात्। अत एव नन्दानिति बहुवचनम्। नवेति विशेषणं च तान् प्रपन्नान् विश्वस्तान् कश्चिद्विश्वस्तघातुकः कौटिल्यवात्स्यायनाख्यो द्विज उद्धरिष्यति उन्मूलयिष्यति नाशयिष्यति यावत्, ततस्तेषां सपितृकाणां सुमाल्यप्रमुखानामभावे तेष्वतिक्रान्तेषु इत्यर्थः। एवं सोमवंशे समाप्ते मौर्यसंज्ञा भोक्ष्यन्ति॥१२॥

**विज०** महानन्दिं विशिनष्टि - महानन्दिरिति ॥५-८॥

महानन्दिवंशभव क इति। कश्चिदिति महापद्मसङ्ख्यया सङ्ख्याता सेना महापद्मा तस्याः पतिः कुलक्षत्रविनाशकृत् ततः कुलक्षत्राभावात् ॥९॥

---

1 B adds शरणागतान्. 2 A B J omit तेषामभावे 3-3 मौर्य्यामौर्य्य

**स महापद्मो नाम्ना नन्दः ॥१०-११॥**

नन्देन सह नवसङ्ख्यान् नन्दान् नन्दवंशजानुद्धरिष्यत्यापद इति शेषः । मौर्या मुरवंशजाः हीनजातयः कैवर्ताः ॥१२॥

**स एव[1] चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति ।**
**तत्सुतो[2] वारिसारस्तु ततश्चाशोकवर्धनः ॥१३॥**

**सुयशा भविता तस्य सङ्गतः[3] सुयशः सुतः ।**
**शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति ॥१४॥**

**शतधन्वा ततस्तस्य भविता तद्[4] बृहद्रथः ।**
**मौर्या[5] ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम्[6] ॥१५॥**

**समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह ।**
**[7] (हत्वा बृहद्रथं मौर्यं[8] तस्य सेनापतिः कलौ ।**
**पुष्यमित्रस्तु[9] शुङ्गाह्वः स्वयं राज्यं करिष्यति) ।**
**अग्निमित्रस्ततस्तस्मात् सुज्येष्ठो[10] भविता ततः[10] ॥१६॥**

**श्रीध०** कथं भ. ग्नति तद्  । **स एवेति** । चन्द्रगुप्तं मौर्यप्रथमम्[11] ॥१३,१४॥

तेषां चरमो[12] दशरथः पराशरादिभिरुक्तोऽत्राप्यनुसंधेयः[13] तेन चरमेण दशरथेन सह एते[14] मौर्या दश सप्तत्रिंशच्छतोत्तरं सप्तत्रिंशदुत्तरं शतं समाः बृहद्रथस्य सेनापतिः पुष्यमित्रो[15] नाम स्वामिनं बृहद्रथं[16] हत्वा राज्यं करिष्यति स च शुङ्गानां प्रथमः ॥१५,१६॥

**वीर०** के पुनस्ते मौर्याः कथं च भोक्ष्यन्ति?तदाह **स एवेति** त्रिभिः, यस्तेषां नवानामुद्धर्ता द्विजः स एव मौर्यसंज्ञं प्रथमं चन्द्रगुप्तसंज्ञं नाम स्वसुतं राज्येऽभिषेऽक्ष्यति, तत्सुतः चन्द्रगुप्तसुतः ततः वारिसारानन्तरं तत्सुतोऽशोकवर्द्धनसुतः ॥१३॥

तस्याऽशोकवर्द्धनस्य ॥१४॥

---

1 MMa इन्द्र 2 MMa राजस्तु 3 H V सम्यत 4 H V ताऽथांवृ MMa ता तु बृ 5 H V मौर्व्या 6 W तात्परम् 7 H V द्भव These Two hall verses ware not found in w edition 8 H V मौर्व्यं 9 A B G J पुष्प 10 ABGJ सुयोष्टोथ भविष्यति MMa सुदेष्टो भविता तत H V मौर्व्यं प्र 12 A पश्चमा B J प्रथमो 13- -13 A B J omit 14 A B J omit एते 15 A B J पुष्प 16 H V omit बृहद्रथ

तततः मौर्या इति यद्यपि चन्द्रगुप्तादयो नवैव तथापि पराशरादिभिश्चन्द्रगुप्तादिषु दशरथ एक उक्तः तदभिप्रायेण एते दशेत्युक्तम्। यद्वा, चन्द्रगुप्तस्य यः पिता तेन सह दशैत इत्युक्तम्। सप्तत्रिंशच्छतात्परं सप्तत्रिंशदुत्तरशतं समा इत्यर्थः। कुरुकुलोद्वहेति सम्बोधनम् ॥१५॥

**अग्निमित्र** इति। मौर्यसंज्ञकस्य बृहद्रथस्य सेनानी[1] पुष्यमित्रो नाम स्वामिनं हत्वा राज्यं करिष्यति अग्निमित्रादयो नव तद्वंश्याः दशैते शुङ्गसञ्ज्ञाः वर्षशताधिक द्वादशाधिकं वर्षशतं भोक्ष्यन्ति इति सम्बन्ध ॥१६॥

**विज०** कथं भोक्ष्यन्तीत्यत आह - **स एवेति**। स एव नवनन्दाचार्य ॥१३-१४॥

मौर्यसंज्ञा अपि मौर्याः ॥१५॥

वंशव्यत्यासं कथयति - **हत्वेति**। पुष्यमित्र इत्यादि जातिप्रयुक्तं नाम, शुङ्ग इत्यादि विशेषनाम ॥१६॥

**वसुमित्रो भद्रकश्च पुलिन्दो भविता ततः।**
**ततो घोषः सुतस्तस्माद् वज्रमित्रो भविष्यति ॥१७॥**

**ततो भागवतस्तस्माद् देवभूतिः कुरूद्वहः।**
**शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ॥१८॥**

**ततः कण्वानियं भूमिर्यास्यत्यल्पगुणान् नृप!।**
**शुङ्गं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामिनम् ॥१९॥**

**स्वयं करिष्यते राज्यं वसुदेवो महामतिः।**
**तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः।**
***नारायणस्य भविता सुशर्मा नाम विश्रुतः ॥२०॥**

**काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च।**
**शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे ॥२१॥**

---

1 AB पुष्य 2 A omits दशैत 3 A पुष्य 4 HV क. 5 HV याग 6 HV भ्रात 7 HV हृति 8 ABGJ इति श्रुत 9 HV महीं. 10 W का 11 MMa पान् 12 HV हृति 13 HMMa v ननी * This half verse is not fond in HTVW edns 14--14 MMa सुशर्माख्योऽथ नृपति कण्वाना भविनानत 15 HV क.

**हत्वा काण्वं सुशर्माणं तद्भृत्यो वृषलो बली ।**
**गां भोक्ष्यत्यन्ध्रजातीयः कञ्चित् कालमसत्तमः ॥२२॥**

**कृष्णनामाऽथ तद्भ्राता भवि ा पृथिवीपतिः ।**
**श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ॥२३॥**

**लम्बोदरस्तु तत्पुत्रस्तस्माच्छिबिलको नृपः ।**
**मेघस्वाति श्रिबिलकादटमानस्तु तत्सुतः ॥२४॥**

**श्रीध० तत** इति। ततोऽग्निमित्रादयो नवेत्येवं शुंगा दश [illegible] शुंगा इति च पाठान्तरम् वर्षशतम् ॥१८॥

**तत** इति। कथं कण्वान्यास्यति तदाह। शुंगमिति। परस्त्रीकामिनं देवभूतिनामानं शुंगं हत्वा तदमात्यो वसुदेवनामा कण्वो राज्यं करिष्यति ॥१९॥

**स्वयमिति**। कण्वानां चतुर्थः सुशर्मा ज्ञेयः ॥२०॥

**काण्वायना** इति। इमे वसुदेवादयः काण्वायना वर्षाणां त्रीणि शतानि पंच चत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यन्ति ॥२१॥

**हत्वेति**। कण्वानामन्तिमं सुशर्माणं हत्वा बली बलिनामा तद्भृत्यो गां भोक्ष्यति ॥२२-२४॥

**वीर० ततः का ानिनि** हे नृप! अल्पगुणान् गुणहीनान् काण्वसंज्ञान् यास्यति तदधीना भविष्यति तैः पालिता भविष्यतीति यावत्। के पुनस्ते काण्वाः? कथं च तान्यास्यतीत्यत्राह - **शुङ्गमिति सार्द्धद्वयेन**। यः शुंगसंज्ञो देवभूतिस्तं कामिनं स्त्रीलालसं हत्वा तदमात्यः काण्वः वसुदेवो नाम स्वयमेव करिष्यति। महामत इति पाठे सम्बोधनं तस्येति इमे वसुदेवादयः काण्वायनसंज्ञाः पञ्चचत्वारिंशदधिक शतत्रयं समाः भोक्ष्यन्तीत्यर्थः। अत्र नारायणस्य सुतः सुशर्मनामा द्रष्टव्यः "हत्वा **काण्वं** सुशर्माणं" इत्युत्तरग्रन्थानुरोधात् ॥१७-२०॥

तद्भृत्यः सुशर्मणो भृत्यः, बली बलीकनामा, गां पृथिवीं, कञ्चित्कालमिति अत्यल्पत्वात् भोगकालस्यानादरेण सङ्ख्या न कृता ॥११॥

**कृष्णनामेति**। तद्भ्राता बलीकभ्राता ॥२३, २४॥

1 MMa क°. 2 W °षभो. 3 W क्ष्मां. 4 HV °त्या°. 5 MMa मा च. 6 HV °त°. 7 ABGJ च्चबि. W च्यिबि°. 8 MMa W नृप°. 9 MMa स्वनं. 10 W °च्विवि°. 11 HV दण्डमान. 12 ABGJMMa तस्य च. 13 ABJ add द्वादशाधिक. 14--14 ABJ omit. 15 HV omit ज्ञेय. 16 HV क°. 17 ABJ omit बली

**विज०** शुङ्गाः शुङ्गवंशजाः ॥१७-१९॥

कण्वाः कण्ववंशजाः, तान्नृपान् यास्यति अल्पगुणाः ओषध्यादि गुणसम्पत्तिरहिता कथं कण्वान् यास्यतीत्यत आह - शुङ्गमिति। शुङ्गं शुङ्गाख्यं राजानं देवभूतिं हत्वा नाम्ना वसुदेवः कण्वः तस्य शुंगस्यामात्यः, कामिनं ग्राम्यकर्मासक्तम् ॥२०॥

काण्वायनाः कण्ववंशभवाः कण्वानां चतुर्थः सुशर्मा इमे च वसुदेवादयः काण्वायनाः वर्षाणां त्रीणि शतानि पञ्चचत्वारिंशद्वर्षाणि भूमिं भोक्ष्यन्ति, तस्य सुशर्मणो भृत्यः ॥२१-२२॥

तस्य वृषलस्य भ्राता ॥२३,२४॥

**[1]अनिष्टकर्मा [2]हालेयस्तलकस्तस्य चात्मजः।**
**[3]पुरीषभीरुस्तत्पुत्र स्ततो राजा [4]सुनन्दनः ॥२५॥**

**[5]चकोर श्चरमो यत्र शिवस्वातिररिन्दमः।[6]**
**तस्यापि गोमतिः[7] पुत्रः पुरीमान् भविता ततः ॥२६॥**

**[8]मेदशिराः [9]शिवस्कन्दो [10]यज्ञश्रीस्तत्सुतस्त[10]तः ।***
**विजयस्तत्सुतो भाव्य[11]श्चन्द्रविज्ञः [12]सलोमधीः ॥२७॥**

**एते त्रिंशन्नृपतयः चत्वार्यब्दशतानि च।**
**षट् पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दनः ॥२८॥**

**सप्ताभीरा आवभृत्या दश गर्दभिनो नृपाः ।**
**कङ्काः षोडशभूपाला भविष्यन्त्यातिलोलुपाः[13] ॥२९॥**

**ततोऽष्टौ यवना भाव्या [14]श्चतुर्दश तुरुष्ककाः।**
**[15]त्रयोदश [16]मुरुण्डाश्च मौना एकादशैव तु ॥३०॥**

**एते भोक्ष्मन्ति पृथिवीं दशवर्षशतानि च ।**
**नवाधिकां च नवतिं मौना एकादश क्षितिम् ॥३१॥**

---

1 H.V अरि°, 2 H V °स्तिल°, 3 H V सेतु . W भानु°. 4 H V सुदर्शन . 5 A B G J M Ma °रो बाहवो. 6 W °मा°, 7 A B G.J.M Ma °मती, 8 H V वीरो वेदः . A B.G.J मेदःशिराः, 9 W °स्कन्धो; 10- -10 यज्ञशीलस्तु तत्सुत . * The following extra half verse is found in H.V eiditions only सितोऽसित श्रुतस्कन्धो यज्ञशातु स्तदात्मजः।, 11 H V बीजः सु, 12 A B G J M Ma °मधि .13 W °न्ति च, 14 H V च बर्बराः, 15 A.B.G.J.M.Ma भू 16. A.B G.J.M.Ma गुरु°

**भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि तै:[1] संस्थिते तत: ।**

**[2]किर्लिकिलायां नृपतयो भूतनन्दो[3]ऽयवं हर: ।।३२।।**

**श्रीध० चकोर** इति। यत्र येषु बहुसंज्ञेसु चरम: शिव ष्वष्टसु स्वाति नामा भविता ।।२५-१८।।

**सप्तेति**। आवभृत्या अवभृति र्नाम नगरी तद्राजान: ।।२९,३०।।

**एते** इति। एते आर्भागादयो मौनव्यतिरिक्ता:[4] पञ्च षष्टि नृपा एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यन्ति। तत: पूर्वोक्ता एवैकादश मौनास्त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्तीति ।।३१।।

**भोक्ष्यन्तीति** तै: संस्थिते तेषु [5]मौनेषु मृतेषु [6]किर्लिकिलायां पुर्यां नृपतयो भविष्यन्तीत्युत्तरेणान्वय:।[7]किल्किलायां इति च पाठान्तरम् ।।३२।।

**वीर० अनिष्टकर्मेति**। तस्याटमानस्यानिष्टकर्मा सुत इति पूर्वेण सम्बन्ध:। हालेयोऽनिष्टकर्मण: सुत इति ।।२५।।

**चकोर** इति। यत्र येषु बलीकसंज्ञेषु शिवस्वातिर्नाम चरमो भविता इत्यर्थ:। अरिन्दमेति सम्बोधनम्। सविसर्ग पाठे शिवस्वातेर्विशेषणम् ।।२६,२७।।

**एत** इति। एते बलीकनामान: पञ्चविंशतिनृपतय: पृथिवीं भोक्ष्यन्तीति सम्बन्ध:। वर्षसङ्ख्यामाह - त्रिंशच्चत्वार्यब्दशतानि षट्पञ्चाशच्चेति षडशीत्युत्तरचतुश्शतं वर्षाणीत्यर्थ: ।।२८।।

**सप्तेति**। तत:सप्ताभीरसंज्ञा भाव्या इत्युत्तरेणान्वय:। तान् विशिष्टि - **आवभृत्या**: अवभृतिर्नगरी तस्या राजान:। यद्वा, आवभृत्यसंज्ञा वा सप्त भाव्या। तान् विशिनष्टि - आभीरा: आभीरजातीया:। ततो दशगर्दभिन: तत्सञ्ज्ञा, एवमग्रेऽपि योज्यम्। लोलुपा: कामिन: ।।२९,३०।।

**एते भोक्ष्यन्तीति**। मौना एकादश क्षितिम् इति मौनानां कालावधे: पृथगेव वक्ष्यमाणत्वादेत इत्यनेन तेभ्योऽन्ये परामृश्यन्ते। दशवर्षशतानि नवाधिकाश्च नवतिं इत्येकोनैकादशशतवर्षाणि इत्यर्थ: ।।३१।।

**अङ्ग**! हे राजन्! संस्थिते इति भावे क्त:। **तैर्मौनै**: संस्थिते तत्कर्तृके मरणे तेषु मृतेषु तेष्विति यावत् किर्लि किलायामिति। किर्लिकिलाख्या पुरी तस्यां भूतनन्द इत्यादयो नृपतय:। भूतनन्दाख्या षडुत्तरशतं वर्षाणि भोक्ष्यमाणा भविष्यन्ति [8]इत्यर्थ: ।।३२।।

1. H.V तेषु च।, 2 A B G.J.M Ma किलि, 3 A B G J M.Ma ०ऽथ वङ्गिरि ।, 4 H V अष्ट, 5 A B J omit मौनेषु, 6 A B J किलि, 7--7 A B J omit; 8. A.B.omit इत्यर्थ:

**विज०** हालेयः हलान्मेयः ॥२५-३०॥

एते आभीरादयो मौनव्यतिरिक्ताः। पञ्चषष्टिनृपाः एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यन्ति। ततः पूर्वोक्ता एव एकादश मौनाः त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्ति। मौनाः मौनकुले जाताः। एकादश त्रीणि अब्दशतानि ॥३१॥

कुले मौनकुले, संस्थिते नष्टे, किलिंकिलायां नगर्यां तस्य शिशुनन्दे भ्राता भूतवंशोपवंशैर्युक्ताः षट् षट् वर्षाण्यधिकानि ॥३२॥

**शिशु[1]नन्दिश्च तद्भ्राता यशोनन्दिः प्रवीरकः।**
**[2]इत्येते वै वर्षशतं भविष्यन्त्यधिकानि षट् ॥३३॥**

**तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः।**
**[3]पुष्यमित्रोऽथ राजन्यो दु[4]र्मित्रोऽस्य तथैव च ॥३४॥**

**एककाला इमे भूपाः सप्तान्ध्राः सप्त [5]कोसलाः।**
**[6]विदूरपतयो भाव्याः निषधास्तत [7]एव हि ॥३५॥**

**मागधानां तु भविता विश्व[8]स्फूर्जिः पुरञ्ज[9]यः।**
**करिष्य[10]त्यपरो वर्णान् पुलिन्दयदुमद्रकान् ॥३६॥**

**प्रजाश्चा ब्रह्म भूयिष्ठाः स्थापयिष्यति दुर्मतिः।**
**वीर्यवान् क्षत्र मुत्साद्य पद्मवत्यां स वै पुरि।**
**अनुगङ्गामाप्रयागं गुप्तां भोक्ष्यति मेदिनीम् ॥३७॥**

**सौरा[11]ष्ट्रावन्त्याभीरा[12]श्च शूद्रा अर्बुदमालवाः।**
**व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः ॥३८॥**

**सिन्धोस्तटं चन्द्रभागां [13]कौन्तीं काश्मीरमण्डलम्।**
**भोक्ष्यन्ति शूद्रा [14]व्रात्याद्याः म्लेच्छा [15]श्चाब्रह्मवर्चसः ॥३९॥**

---

1 TW नन्द° 2 HV युक्ता एते 3 A B G J M Ma पुष्प° 4 HV °स्तस्य चात्मज 5 M Ma कौशला 6 HV वैडूर्य TW वैदूर 7 HV नैषधा° 8 HV स्फूर्ज 9 TW °यात् 10 TW °ति पर्रा 11 HV °न्त्यकाभीग W न्त्य भीगाश्च 12 A B G J M Ma शूग 13 HV काशी° 14 TW °त्यार्याः 15 HV अब्रह्म

**तुल्यकाला इमे राजन्! म्लेच्छप्रायाश्च भूभृतः।**

**एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः ॥४०॥**

**श्रीध० शिशुनन्दिश्चेति।** अधिकानि च षड्वर्षाणि ॥३३॥

**तेषामिति।** तेषां भूतनन्दादीनां यथायथं बाह्लिकाः[1] तन्नामानस्त्रयोदश सुता भविष्यन्ति।अथ पुष्यमित्रो[2] नामान्यो राजन्यः अस्य[3] च दुर्मित्रो नाम पुत्रः ॥३४॥

**एककाला** इति। तथा आंध्राः[4] कोसलाः विदूरपतयो[5] निषधाश्च[6]। एते च तत्तद्देशनामभिः प्रख्यातास्तुल्यकालाः। खण्डमण्डलेषु भूपास्तत एव तेभ्यो बाह्लिकेभ्यः एव भाव्या भविष्यन्ति ॥३५॥

**मागधानामिति।** ततश्च मागधानां तु राजा विश्वस्फूर्जिर्नाम[7] भविता तस्यैव[8] विश्वमूर्तिरिति च नामान्तरम्[8]। स च पूर्वोक्तात्पुरं जयादपरः पुरंजय इति प्रसिद्धः सन् वर्णान्ब्राह्मणादीन्पुलिन्द यदुमद्रक[9]संज्ञान्[10]म्लेच्छप्रायान्करिष्यति। अपरानिति पाठे अन्यान्पुलिंदादिसंज्ञान्वर्णान्करिष्यतीत्यर्थः ॥३६॥

किञ्च - **प्रजा** इति। स चैवं कृत्वाऽब्रह्मभूयिष्ठा अत्रैवर्ण्यप्रचुराः सतीः प्रजाः स्थापयिष्यति पालयिष्यति। स च पद्मवत्यां पुरि पुर्यां[11] वसन् अनुगंगां गंगाद्वारमारभ्य आप्रयागं[12] प्रयागपर्यन्तं गुप्तां पालितां मेदिनीं भोक्ष्यति ॥३७॥

**सौराष्ट्रेति।** तदनंन्तरं च सौराष्ट्रादिदेशवर्तिनो नृपाः[13] शूद्रपा याः[13] द्विजा व्रात्या उपनयनरहिता भविष्यन्ति ॥३८॥

**सिन्धोरिति।** अब्रह्मवर्चसः वेदाचारशून्याः ॥३९॥

**तुल्येति।** इमे च म्लेच्छप्राया भूभृतस्तुल्यकालाः भविष्यन्ति। किं च एते सर्वेऽधर्मानृतपरा अधर्मेऽनृते च परिनिष्ठिताः फल्गुदा अल्पदातारः ॥४०॥

**वीर०** तेषां भूतनन्दादीनां बाह्लीकसञ्ज्ञास्त्रयोदशसुताः, भवितारो भविष्यन्ति इति तथा पुष्यमित्रो[14] नामाऽन्यो राजन्यः अस्य दुर्मित्रनामा पुत्रः ॥३३, ३४॥

तथाऽन्ध्राः कोसलाः वैदूरपतयः निषधाश्च तत्तद्देशनामभिः प्रख्याताः। रवण्डमण्डलेषु भूपास्तत एव बाह्लीकेभ्यः एव भविष्यन्ति तेभ्यो जनिष्यन्ते इत्यर्थः ॥३५॥

1 A.B.J 'कनामा', 2. A.B J पुष्प, 3 H V तस्य, 4 H V अ', 5 H V वैडूर्य', 6 H V नै', 7 H V स्फूर्ज, 8- -8 A B J omit, 9 A B J omit क, 10 A.B J 'ज्ञान्, 11 A B.J omit पुर्यां, 12 A B J omit आप्रयागं, 13- -13 A B J omit, 14 A पुष्प'

**मागधानामिति**। ततस्तु मागधानां राजा विश्वस्फूर्जिर्नाम भविता, स च पूर्वोक्तात्पुरञ्जयात् परः पुरञ्जयादति प्रसिद्धस्सन् वर्णान् ब्राह्मणादीन् पुलिन्दयदुमद्रकसञ्ज्ञान् म्लेच्छप्रायान् करिष्यति। अपरानिति पाठे अन्यान् पुलिन्दसञ्ज्ञान् करिष्यतीत्यर्थः ॥३६॥

स चैवं कृत्वा प्रजाः अब्रह्मभूयिष्ठाः अत्रैवर्ण्यप्रचुरान् स्थापयिष्यति पालयिष्यति। किञ्च, वीर्यवानिति। स वै विश्वस्फूर्जिः क्षत्रमुत्साद्य निर्मूल्य पद्मवत्यां पुरि, वसन्निति शेषः। अनुगङ्गां गङ्गाद्वारमारभ्य प्रयागपर्यन्तां गुप्तां मेदिनीं भोक्ष्यति। तदनन्तरं च सौराष्ट्रादिदेशवर्तिनो द्विजा व्रात्याः उपनयनादिसंस्काररहिताः अत एव शूद्रप्राया भविष्यन्ति। जनाधिपेति सम्बोधनम्। जनाधिपा इति पाठे ते शूद्रप्रायाः शूद्रप्रचुरा भविष्यन्तीत्यर्थः ॥३७,३८॥

**सिन्धोरिति**। व्रात्याद्या व्रात्या ब्राह्मणा येषां ते शूद्रा म्लेच्छाश्च, अब्रह्मवर्चस इति असामर्थ्येऽप्युचितत्वाद् व्रात्यविशेषणम्। चन्द्रभागानदी तथा तत्तीरं लक्ष्यते, कौन्तीन्। देशान्, कौन्तीमिति पाठे कुन्तिदेशेषु भवां कौन्तीमिति चन्द्रभागाविशेषणम् ॥३९॥

**तुल्यकाला** इति। एते म्लेच्छप्रायाः भूभृतस्तुल्यकाला भविष्यन्तीत्यर्थः। किञ्च, एते इति अधर्मे अनृते च परिनिष्ठिताः। फल्गुदाः अल्पदातारः, तीव्रः उग्रो मन्युर्येषां ते। स्त्रीबालेति परदारधनयोरादृता आदरयुक्ताः तद्ग्रहणशीला इत्यर्थः। उदिता - स्तमितप्राया उदितप्रायाश्चास्तमितप्रायाः। क्षणे तुष्टाः क्षणे रुष्टाः चेत्यर्थः। अल्पसत्त्वा अल्पबला अल्पायुषश्च। असंस्कृताः गर्भाधानादिसंस्काररहिताः प्रजा इति। एवंविधा ते प्रजाः भक्षयिष्यन्ति पीडयिष्यन्ति ॥४०॥

**विज०** बाह्लीकाः बाह्लीकदेशपतयः ॥३३,३४॥

तथा आन्ध्रा आन्ध्रदेशपतयः, कोसलाः कोसलविषयपतयः, वैदूरयः विदूरगव्यनगरपतयो निषधाश्च एते तत्तद्देशनामभिः प्रख्याताः। तुल्यकालाः खण्डमण्डलेषु भूपाः तत एव तेभ्यो बाह्लीकेभ्यः एव भाव्या भविष्यन्ति ॥३५॥

ततश्च नैषधानां विषयाणां राजा पुरञ्जयः, शत्रूणामिति शेषः। स पुलिन्द यदुमद्रकानवरान्नीचान् वर्णान् करिष्यति। किं बहुना? सर्वाः प्रजाश्चाऽपि विवक्षिताः ॥३६॥

ब्रह्मभूयिष्ठाः बहुलवेदविदः स्थापयिष्यति स्थिरीकरिष्यति। अनुगङ्गं गङ्गासमीपे, आप्रयागं प्रयागाख्यक्षेत्रपर्यन्तं दीर्घां मेदिनीं पद्मवत्यां पुरि स्थितिं कृत्वा आप्रयागं गुप्तां पालिताम् ॥३७॥

W र्यां, 2 W omits इत्यर्थ 3-3 W omits 4 W omits ते

तदनन्तरं सौराष्ट्राश्च आवन्त्याश्च आभीराश्च शूद्राश्च अर्बुदाश्च मालवाश्च व्रात्याः संस्काररहीनाः द्विजाः शूद्रप्रायाः जनाधिपतयो भविष्यन्ति ॥३८,३९॥

किञ्च, एते सर्वे अधर्मानृतपराः अधर्मे अनृते च परिनिष्ठिताः, फल्गुदाः अल्पदातारः ॥४०॥

**स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः ।**
**उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः ॥४१॥**

**असंस्कृताः क्रियाहीनाः रजसा तमसाऽऽवृताः ।**
**प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः ॥४२॥**

**तन्नाथास्ते[1] जनपदास्तच्छीलाचारवादिनः ।**
**अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः ॥४३॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे प्रथमोऽध्यायः ॥१॥

**श्रीध० स्त्रीति।** उदितास्तमितप्राया हर्षशोकादिबहुलाः ॥४१॥

**असंस्कृता इति।** असंस्कृता गर्भाधानदिसंस्काररहिताः प्रजा भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति ॥४२॥

किं च **तदिति।** तन्नाथाः ते नाथा येषां ते जानपदा[2] देशवर्तिनो मनुष्याः तच्छीलाचारवादिनः तेषामिव शीलमाचारो वादश्च तद्वन्तः ॥४३॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां प्रथमोऽध्यायः ॥१॥

**वीर० तन्नाथा** इति । ते म्लेच्छा नाथा येषां ते। जनपदा देशवर्तिनः तेषामेवं शीलं स्वभावः आचारो वादश्च येषां सन्तीति तथाऽन्योन्यतः राजतः राजभिश्च पीडिताः नाशं यास्यन्ति ॥४१-४३॥

1 HV जान°, 2 ABJ जन

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां प्रथमोऽध्यायः ॥ १ ॥

**विज०** उदितास्तमितप्राया: बहुलं सूर्येदयमस्तमत मेव जानन्ति नापरं अल्पकालावस्थायिनो वा ॥४१॥

असंस्कृता गर्भाधानादिसंस्कारहीना प्रजा: भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति ॥४२॥

किञ्च, एवं विधा ये ते एव नाथा येषां ते तन्नाथा जनपदा देशवर्तिनो मनुष्या तच्छीलाचारवादिन: तेषां शीलं आचारश्च वादश्च तद्वन्त ॥४३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
द्वादशस्कन्धे प्रथमोऽध्याय ॥१॥

**(श्रीविजयध्वजतीर्थरीत्या प्रथमोऽध्याय न समाप्त:)**

# द्वितीयोऽध्यायः

## श्रीशुक उवाच

ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया ।
कालेन [1] बलिना राजन्! नङ्क्ष्यत्यायुर्बलं स्मृतिः ॥१॥

वित्तमेव कलौ नृणां जन्माचार[2]गुणोदयाः ।
धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥२॥

दाम्पत्येऽभिरुचिर्हेतु[3]र्मायैव व्यावहारिके ।
स्त्रीत्वे पुंस्त्वे [4] च हि रतिर्विप्रत्वे सूत्रमेव हि ॥३॥

लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम् ।
[5] अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः ॥४॥

अनाढ्यतैवासाधुत्वे साधुत्वे [6] दम्भ एव तु ।
स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥५॥

[7] दूरे वार्ययनं [8] तीर्थं [9] लावण्ये केशधारणम् ।
उद [10] रम्भरता स्वार्थः [11] सत्यत्वे धार्ष्ट्यमेव हि ॥६॥

[12] दाक्ष्यं कुटुम्बभरणं यशोऽर्थे धर्मसेवनम् ।
[13] एवं प्रजाभिर्दुष्टा[14]भिराकीर्णे [15] क्षितिमण्डले ॥७॥

ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः ।
प्रजा हि [16] लुब्धै राजन्यैर्निर्घृणैर्दस्यु[17]धर्मिभिः ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः । अधर्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥

---

1 HV क॰. 2 W ॰गुणावहम्. 3 HV वाक्च्छौर्यं. 4 HV चाभि. M चाति 5 HVW आ॰ 6 Hv चाढ्यतैव हि 7 HV दूर॰ 8 M ॰टनं. 9 ABGJ ॰ण्य. 10 W ॰राभरण. 11 HV सभ्यत्वे. 12 W दाक्ष्ये. 13 HV इत्थ. 14 HV ॰र्ण. 15 HV ॰ल. 16 HV ॰स्तु. 17 ABGJM धर्मभि॰

कलिधर्मान् प्रपंचयति **ततश्चेत्यादिना** ॥१॥

जन्माचारगुणानां उदयः उत्कर्षहेतुः । **वित्तमिति** धर्मन्याययोर्व्यवस्थायां बलमेव ॥२॥

**दाम्पत्य** इति । दांपत्ये भार्यापतिभावेऽभिरुचिरेव हेतुर्न कुलगोत्रादिः । व्यावहारिके क्रयविक्रयादौ । स्त्रीत्वे पुंस्त्वे च तयोः श्रैष्ठ्ये रतिकौशलमेव हेतुर्नतुकुलमाचारो वा ॥३॥

**लिङ्गमिति** । आश्रमाणां ख्यातौ ज्ञाने लिंगमेव दंडाजिनादिकं हेतुर्नत्वाचारविशेषः । अन्योन्यापत्तिकारणं चाश्रमादाश्रमांतरप्राप्तौ च कारणम् । यद्वा बहूदकहंसादीनामन्योन्यापत्तौ नमस्कारादिव्यवहारे कारणम् । आवृत्त्या मुद्रार्पणादिदानसामर्थ्ये न्याये दौर्बल्यं पराजयः । चापलं वचो बहुभाषणम् ॥४॥

**अनाढ्यतेति** । असाधुत्वे चौर्याद्यभियोगे । प्रसाधनमलंकारः ॥५॥

**दूर इति** । दूरे वर्तमानं वार्ययनं जलाशयस्तीर्थे न तु शुद्ध्यादि गुर्वादिर्व उदरंभरता कुक्षिपूरणम् स्वार्थः पुरुषार्थः ॥६॥

**दाक्ष्यमिति** । कुटुम्बभरण एव दाक्ष्यं पटुत्वम् ॥७,८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"**तच्छीलाचार वादिनः**" (भाग.12।43) इत्येतदेव प्रपञ्चयन् कृतयुगप्रवृत्तिसमीपकालं लक्षयन् तत्प्रवृत्तिप्रकारं कलियुगप्रादुर्भावलक्षणञ्च वदन् राजवंशानुकीर्तनमुपसंहरति द्वितीयेन - **ततश्चेत्यादिना** हे राजन्! बलिना बलीयसा कालेन निमित्तेनानुदिनं धर्मादयो नङ्क्ष्यन्ति ॥१॥

**वित्तमेवेति** । जन्माभिजात्यं गुणः सद्गुणः तदावहं वित्तमेवेत्यर्थः । तथा धर्मन्याययोर्व्यवस्थायां बलं धनबलमेव कारणं हेतुः ॥२॥

**दाम्पत्ये** इति । दाम्पत्ये भर्तृभार्यात्वे अभिरुचिरेव कारणं, न त्वाभिजात्यादिः । व्यावहारिके क्रयविक्रयादिव्यापारे माया वञ्चनमेव न तु निष्कापट्यम् व्यावहारिकीति पाठे लोकव्यवहारसिद्धा मायैव विवेकप्रतिबन्धिनीत्यर्थः । स्त्रीत्वे पुंस्त्वे च तयोः प्राशस्त्ये रतिकौशलमेव हेतुर्न तु स्त्रीत्वपुंस्त्वैकान्तगुणवृत्तयः । सूत्रमेव न तु उपनयनादि ॥३॥

---

1-1 ABJ omit, 2 ABJ अ॰ 3 ABJ ॰नासा॰ 4 ABJ ॰ये 5 ABJ omit शुद्ध्यादि, 6-6 ABJ omit

**लिङ्गमेवेति**। आश्रमाणां ख्यातौ ज्ञाने लिङ्गमेव दण्डाजिनादिकमेव हेतुः न त्वाचारविशेषः। अन्योन्यापत्तिकारणं आश्रमादाश्रमान्तरप्राप्तौ च कारणं, वर्णान्तरात् वर्णान्तरप्राप्तौ नीचोत्तमभावप्राप्तौ वा कारणमित्यर्थः। अवृत्तिः दरिद्रता तथा न्यायदौर्बल्यं पराजयः। सप्तम्यन्तपाठे तस्यां सत्यां न्यायदौर्बल्यं सा न्यायदौर्बल्ये हेतुरित्यर्थः। पाण्डित्ये चापलं वचः, बहुभाषणं हेतुः ॥४॥

**अनाढ्यतैवेति**। असाधुत्वे निकृष्टत्वे अनाढ्यतैव हेतुः। न तु कुलहीनता, साधुत्वे उत्कृष्टत्वे दम्भः देहालङ्कारः, उद्वाहे[1] विवाहे स्वीकरणमेव, न तु शास्त्रीयविधिः। प्रसाधनं शरीरमलापनयनमेव स्नानं नतु विशुद्धतीर्थावगाहनम् ॥५॥

**दूर इति**। यद्दूरे वर्तमानं [2]वार्ययनं जलाशयस्तत् तीर्थं न तु गङ्गादिः न तु गुर्वादिर्वा। लावण्ये निमित्ते केशधारणं न तु शास्त्रविहिताङ्गक्षौरं, उदरभरणमेव सर्वपुरुषार्थः, सत्यत्वे सत्यवादित्वे, धार्ष्ट्यं प्रसहिष्णुत्वं न तु अननृतवादित्वम् ॥६॥

दाक्ष्ये समर्थत्वे कुटुम्बभरणं नतु धर्मादिपुरुषार्थसम्पादनं, यशोर्थे न तु परलोकार्थे एवं इत्थम्भूताभिः प्रजाभिराकीर्णे [3]क्षितिमण्डले ॥७॥

ये ब्राह्मणादयस्तेषां मध्ये यो बली स एव नृपो भविता, प्रजा इति, लुब्धैरर्थकामपरैः अत एव निर्घृणैर्निष्कृपैः दस्युधर्मिभिः[4]चौरव्याघ्रप्रवृत्तिभिः[5] राजन्यैः ॥८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कल्क्यवतारं तच्चरितं च युगविभागलक्षणं च वक्त्यस्मिन्नध्याये, तत्रादौ कलिवैभवमाह - **ततश्चेति**। कालक्षयानन्तरं धर्मादयो नङ्क्ष्यन्तीत्यन्वयः। कारकाभावादिति शेषः ॥१॥

यदि कलौ नृणां वित्तमस्ति तर्ह्येव तेषां जन्मादयः पूज्याः स्युरिति शेषः। अयं धर्मः अयं न्याय इति व्यवस्थायां बलमेव कारणं, धनमिति वा पाठः ॥२॥

अभिरुचिरन्योन्यस्नेहलक्षणेच्छा हेतुः, न कुलगोत्रादिशास्त्रीययोगः। व्यावहारिके क्रयविक्रयादिव्यवहारविषये मायैव हेतुः। अतिरतिः अतितरां मनोदर्शनीयताविशेषः, सूत्रं तन्तुलक्षणम् ॥३॥

आश्रमाणां ख्यातौ ज्ञाने ब्रह्मचर्याद्याश्रम इति वक्तव्ये अन्योन्यापत्तिकारणं आश्रमादाश्रमान्तरप्राप्तिकारणं, लिङ्गमुपाध्यायादिलक्षणं लाञ्छनं अन्यायदौर्बल्ये अन्यायाकरणे अवृत्तिः वृत्तिराहित्यं वृत्यभाव एव हेतुः कृतो न्यायो न्याय

1. W 'कार एव', 2. A omits वार्ययनं, 3 A B भूमण्डले, 4 A.B धर्म', 5 W. चो'

इत्यर्थः। अचापलं अचञ्चलतालक्षणं वचः, कारणमित्यनुवर्तते ॥४॥

अनाढ्यता दरिद्रत्वं असाधुत्वे [1]दुष्टत्वे, त्वं मम जाया इति स्वीकारः हेतुः। प्रसाधनं शरीरस्य शुद्धिरलङ्कारो वा ॥५॥

दूरे [2]वार्यटनं दूरतरजलयात्रा यत्र क्रियते तत्तीर्थं न तु गुर्वादि। केशधारणं धम्मिल्लधारणं, उदरम्भरता स्वोदरपूर्णता, स्वार्थः स्वप्रयोजनम् ॥६,७॥

ब्रह्म ब्राह्मणः, दस्यूनां धर्माणि चौर्यादीनि येषां ते तथा तैः ॥८॥

आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम्।
शाकमूलामिषक्षौद्रफलपुष्पा[3]ष्टिभोजनाः ॥९॥

अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भि[4]क्षकरपीडिताः।
शीतवातातपप्रावृड्[5]हिमै रन्योन्यतः प्रजाः ॥१०॥

[6]क्षुत्तृड्भ्यां व्याधिभिश्चैव [7]सन्तप्स्यन्ते च चिन्तया।
त्रिंशद्विंशतिवर्षाणि परमायुः कलौ [8]नृणाम् ॥११॥

क्षीयमाणेषु देहेषु देहिनां कलिदोषतः।
वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥१२॥

[9]पाषण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु।
चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥१३॥

शूद्रप्रायेषु वर्णेषु, च्छागप्रायासु धेनुषु।
गृहप्रायेष्वाश्रमेषु [10]यौनप्रायेषु बन्धुषु ॥१४॥

[11]अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु।
विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥१५॥

इत्थं कलौ गतप्राये [12]जनेतु [13]खरधर्मिणि।
धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥१६॥

1 A omits दुष्टत्वे. 2 A 'य'. 3 M 'दि. 4 HV ज्वर 5 HV भी' 6 M 'तृषा 7 M सन्तप्यन्ते W सन्तापन. [illegible] JM 'ख'. 10 M योनि'. 11 M प्रायेष्वौषधीषु. 12 HVM जनेषु. 13 M प धर्मेषु HV खरधर्मसु

**श्रीध० आच्छिन्नेति**। आच्छिन्नानि अपहृतानि दारा द्रविणानि च यासां ताः। **अष्टिर्बीजम्** ॥९-११॥

**क्षीयमाणेष्विति**। क्षीयमाणे[1]ष्वित्यादीनामित्थं कलौ गतप्राये इति पञ्चमेनाऽन्वयः। क्षीयमाणेष्वल्पप्रायेषु ॥१२॥

**पाषण्डेति**। दस्युप्रायेषु चौ[2]रतुल्येषु चौर्यानृतवृथाहिंसाद्या नानावृत्तयो येषां तेषु ॥१३॥

**शूद्रप्रायेष्विति**। छागप्रायासु प्रमाणतः क्षीरतश्च अजातुल्यासु [3]गृहप्रायेषु परिग्रहादि बाहुल्येन गृहतुल्येषु यौनप्रायेषु स्यालादिप्रायेषु[3] ॥१४॥

अण्विति। अणुप्रायासु श्यामाकतुल्यासु। स्थास्नुषु [4]वृक्षेषु विद्युत्प्रायेषु[4] त[5]टिद्बहुलेषु। शून्यप्रायेषु धर्मादिरहितेषु सद्मसु गृहेषु ॥१५॥

**इत्थमिति**। [6]जनेषु ख[7]रधर्मिषु दुस्सहचेष्टि[8]तेषु [9]कलौ इत्थं गतप्राये [10]समाप्तप्राये ॥१६॥

**वीर०** आच्छिन्नाः अपहृता दाराः द्रविणनिचया यासां ताः प्रजाः गिरिकाननं यास्यन्ति, तत्र शाकादिभोजनाः, तत्र क्षौद्रं मधु, अष्टिर्बीजम् ॥९॥

तत्राप्यनावृष्ट्या यः दुर्भिक्षकरः शाकाद्यभावकरः कालस्तेन, यद्वा दुर्भिक्षे यः करःस्वामिग्राह्यो भागः तेन पीडिताः शीतादिभिरन्योन्यतश्च पीडिताः नङ्क्ष्यन्ति, [11]प्रावृषि हिममेव केवलं न तु वृष्टिरित्यभिप्रायेण प्रावृडित्युक्तं[11], तृतीयान्ता [12]नाम सामर्थ्येऽ[12]पि सामर्थ्यात्पीडिता इत्यनेन सम्बन्धः। तत्र सन्तापस्त्रिविधः तापः इत्थं पीडितानां नृणां परमायुः विंशति त्रिंशद्वर्षाणि ॥१०-११॥

**क्षीयमाणेष्विति** - सप्तम्यन्तानां इत्थं कलौ गतप्राये सतीति पञ्चमेन सम्बन्धः। वर्णाश्रमाचारार्हाणामपि वेदपथे वेदमार्गे तदुक्ते धर्मे, च नष्टे सति ॥१२॥

राजसु दस्युप्रायेषु [13]चोरधर्मसु सत्सु तदेव विवृणोति - **चौ[14]र्येति**। चौर्यादि नानावृत्तयो येषां तेषु ॥१३॥

धेनुषु छागप्रायासु प्रमाणतः क्षीरतश्चाजातुल्यासु, आश्रमेषु गृहप्रायेषु, तद्वन्मैथुन्यधर्म[15]पदेषु सत्सु, बन्धुषु यौनप्रायेषु योनिसम्बन्धमात्रप्रधानेषु ॥१४॥

---

1. A 'णे', 2 A.H.V. चो', 3--3 A.B.J omit, 4--4 A omits, 5 A.B.J 'दि', 6 A.B.J जने तु, 7 A.B.J. 'णि, 8 A.B.J 'ते, 9 A.B.J omit इत्थं, 10. A. omits समाप्तप्राये, 11--11 W omit, 12--12 A B omit, 13 A B omits चोरधर्मसु, 14 A B 'दिना वृ', 15. W परे'

ओषधीषु धान्येष्वणुप्रायासु अतिसूक्ष्मासु, स्थास्नुषु वृक्षेषु शमीप्रायेषु परिमाणतः छायातः फलतश्च? तुल्येषु गृहेषु[1] इत्यर्थः। मेघेषु विद्युत्प्रायेषु, तटिद्बहुलेषु। सद्मसु शून्यप्रायेषु अतिथिभोजनादिधर्मरहितेषु सत्सु ॥१५॥

इतीत्थं खरधर्मिणि दुःसहचेष्टिते कलौ सत्त्वेन शुद्धसत्त्वमयेन देहेन ॥१६॥

**विज०** आच्छिन्नदारद्रविणाः बलादाकृष्टभार्यावित्ताः क्षौद्रं मधु "मधु मद्यं मधु क्षौद्रं मधु पुष्परसं विदुः" इत्यभिधानम्। शाकादिभोजनं येषां ते तथा ॥९॥

दुर्भिक्षकरनिमित्तपीडिताः हिमं नीहारः ॥१०॥

तृषया तृष्णया, व्याधिभिः कुष्ठादिभिः ॥११,१२॥

चौर्याद्यर्थं[2] नानावृत्तयो येषां ते तथा ॥१३॥

छाग, अत्र तुगभावो लिङ्गव्यत्यासं प्रति गृहा योनिः[3] एव बन्धुत्वं योनिसम्बन्धमात्रम् ॥१४॥

अणुप्रायेषु कक्षमाषप्रचुरासु, जनशून्यप्रायेषु ॥१५-१६॥

**[4]चराचर गुरोर्विष्णोरीश्वरस्याखिलात्मनः।**
**धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये ॥१७॥**

**[5]शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः।**
**भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥१८॥**

**अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः।**
**असिनाऽसाधुदमनमष्टैश्वर्यगुणान्वितः ॥१९॥**

**विचरन्[6]नाशुना क्षोण्यां हयेनाप्रतिमद्युतिः।**
**नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति ॥२०॥**

**[7]अथ तेषां भविष्यन्ति मनांसि विशदानि वै।**
**वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम्।**
**पौरजानपदानां वै हतेष्वखिलदस्युषु ॥२१॥**

---

1 A.B omit गृहेषु. 2 A °र्थे. 3 AB भावना. 4 W परावा° 5 ABGJ शम्भल° 6 M °न्नमिमान 7 W अथैतेषां

**तेषां प्रजाविसर्गश्च[1] स्थविष्ठः सम्भविष्यति ।**
**वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते ॥२२॥**

**यदावतीर्णो भगवान् कल्किर्धर्मपतिर्हरिः ।**
**कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी ॥२३॥**

**यदा चन्द्रश्च सूर्यश्च तथातिष्ये[2] बृहस्पतिः ।**
**एकराशौ समेष्यन्ति तदा भवति तत् कृतम् ॥२४॥**

**श्रीध०** एतत्प्रपञ्चयति चतुर्भिः चराचरेति। चराचरगुरोरीश्वरस्येति च धर्मत्राणे हेतुः गुरुत्वेश्वरत्वयोरुपपादनमखिलस्य विश्वस्यात्मनः कारणस्येति। एवम्भूतस्य विष्णोर्जन्म साधूनां धर्मत्राणाय । धर्मत्राणप्रयोजनमाह - कर्मापनुत्तये मोक्षाय ॥१७॥

**शम्बलेति**[3]। शंबलग्रामे मुख्यस्य प्रधानस्य नाम्ना विष्णुयशसो ब्राह्मणस्य भवने गृहे ॥१८॥

धर्मत्राणप्रकारमाह **अश्वमिति**। असाधवो दम्यन्ते येन तमश्वमारुह्यासिना दस्यून्कोटिशो निहनिष्यतीत्युत्तरेणान्वयः। ग्रसाधुदमन इति पाठे कल्किविशेषणम्। अणिमाद्यष्टैश्वर्याणि गुणाश्च सत्यसंकल्पत्वादय[4] तैः[5] अन्वितः ॥१९॥

दुष्टदमनं[6] प्रपञ्चति[6] **विचरन्निति**। आशुना शीघ्रगामिना तेन हयेन अश्वेन[7] क्षोण्यां पृथिव्यां[8] विचरन्। नृपलिङ्गच्छदो राजवेषच्छन्नान् ॥२०॥

ततश्च पुनः कृतयुगप्रवृत्तिं वक्तुमाह । **अथेति** [9]सार्धद्वाभ्याम्[9]। तेषां पौरजानपदानां मनांसि विशदानि भविष्यन्ति। तत्र हेतुः। वासुदेवस्याङ्गरागेण चंदनादिनाऽतिपुण्यगंधो योऽनिलस्तं स्पृशंतीति तथा तेषाम् ॥२१॥

**तेषामिति**। स्थविष्ठः स्थूलः ॥२२॥

कृतयुगप्रवृत्तिमाह। **यदावतीर्ण** इति। प्रजानां सूतिः प्रजासूतिः ॥२३॥

तदवतारकालोपलक्षणमाह । यदा चंद्रश्चेति। तिष्यः पुष्यः। अयमर्थः। चंद्रसूर्यबृहस्पतीनां यदापुष्यनक्षत्रे योगस्तदा तत्कृतयुगं भविष्यति। यद्यपि च प्रतिद्वादशाब्दं[10] कटकराशौ बृहस्पतौ वर्तमाने द्वित्रासु अमावास्यासु तेषां त्रयाणामपि पुष्ययोगः सम्भवति। तथाऽपि तेषां सहप्रवेशोऽत्र विवक्षितः। समेष्यन्तीति वचनात्। अतो नातिप्रसंगः ॥२४॥

---

1 HV °स्तु, 2 A.B.G.J तिष्यबृहस्पती।, 3 A B J शम्भ°, 4 H V °त्पादय, 5 A B J omit तैः अन्वितः, 6 A B J तत्प्रपञ्च°, 7 H V omit ऽश्वेन, 8 H V omit पृथिव्यां, 9--9 H V omit, 10 A B J कर्क°

**वीर०** धर्मत्राणायेत्यनेन धर्मपरित्राणमेवावतारप्रयोजनं इत्युक्तं तदेव सहेतुक मुपपादयति - **परावरगुरोरिति।** विशेषणानि हेतु, गर्भाणि[1] विशेषणानि, गुरुशब्देन हितप्रवर्तकत्वमभिप्रेतं, तस्य सर्वविषयकत्वस्फोरणायाखिलात्मन इत्युक्तं, आत्मत्वं न केवलमन्तः प्रविश्य धारकत्वमेवापितु तत्प्रशासनगर्भमिति द्योतनायेश्वरस्येत्युक्तम्। एवम्भूतस्य विष्णोर्जन्मावतारः साधूनां धर्मत्राणाय। तत्प्रयोजनमाह - कर्मापनुत्तये इति। निःश्रेयसप्रतिबन्धिकर्मनिवर्तनाय, यद्वा दुष्कर्मनिवर्तनाय वा। 'विनाशाय च दुष्कृतां" (भ.गी. 4- इत्युक्तेः ॥१७॥

क्वावतरिष्यति? किं तस्य नाम? इत्यत आह ।**शम्बलेति**[2]। शम्बलाख्यग्रामे[3] मुख्यस्य श्रेष्ठस्य विष्णुयशसः, भवने गृहे, कल्किः, तन्नामावतरिष्यति ॥१८॥

तस्य चेष्टितमनुवर्णयति द्वाभ्यां **अश्वमिति।** देवदत्तनामानं आशु गच्छतीति तथा तमश्वमारुह्य असिनाऽसाधून् दमयतीति तथा दस्यून् कोटिशो निहनिष्यतीति उत्तरेण सम्बन्धः। अष्टैश्वर्याण्यणिमादीनि गुणाः शौर्यवीर्यादयः तैरन्वितः आशुना आशुगतिनाऽश्वेन, क्षोण्यां[4] पृथिव्यां विचरन् नृपलिङ्गच्छदः राजवेषच्छन्नान् ॥१९-२०॥

**अथेति।** अखिलेषु दस्युषु हतेषु सत्सु, अथ तेषां पौरजानपदानां, वासुदेवस्य कल्केः योऽङ्गरागः तस्य योऽतिशयितः पुण्यगन्धवायुः तं स्पृशन्तीति तथा तेषां, हेतुगर्भमिदं, अतः मनांसि विशदानि निर्मलानि भविष्यन्ति ॥२१॥

तेषां विशदमानसानां प्रजाविसर्गः पुत्रादिरूपः प्रपञ्चः, स्थविष्टः स्थूलः, सम्भविष्यति वासुदेव इति हृदिस्थित इत्यस्य मनश्च सात्त्विकं भविष्यतीति शेषः ॥२२॥

तदा पुनः कृतयुगप्रवृत्तिमाह - **यदेति।** धर्मपतिर्धर्मगोप्ता कल्किर्यदाऽवतीर्णः तदा कृतयुगं भविष्यति, तदा प्रजानां सूतिः प्रसूतिः, सात्त्विकी सत्त्वगुणप्रधाना ॥२३॥

कृतयुगप्रवृत्तिकालोपलक्षणमाह[5] यदेति। तिष्यः पुष्यः यदा सूर्यादयः एकराशौ सङ्गता भवन्ति, तदा तत्तः कृतयुगं प्रवर्त्तते इत्यर्थः। यद्यपि प्रतिद्वादशाब्दं कटकराशौ[6] बृहस्पतौ वर्तमाने, द्वित्रासु अमावास्यासु तेषां त्रयाणामपि पुष्ययोगस्सम्भवति, तथापि तेषां सहप्रवेशोऽत्र विवक्षितः **समेष्यन्ति** इति वचनात्। अतो नातिप्रसङ्गः ॥२४॥

**विज०** विष्णोर्जन्म कर्म च साधूनां धर्मत्राणाय दुष्कर्मापनुत्तये च स्यादिति शेषः ॥१७॥

शम्बलग्रामे[7], मुख्यस्य प्रधानस्य नाम्ना विष्णुयशसः ब्राह्मणस्य, भवनं गृहे ॥१८॥

1 A.B गर्भवि॰ 2 A B शम्भ॰ 3 A B शम्भ . 4 W omit क्षोण्या . 5 W omit युग . 6 A कर्कट . 7 A B ॰म्भ॰

आशुगं शीघ्रगामिनम् ॥१९॥

नृपलिङ्गच्छदः[1] राजलक्षणच्छन्नान् ॥२०॥

वासुदेवस्य अङ्गरागस्य चन्दनाद्यनुलेपनस्य प्रशस्तपुण्यगन्धेन युक्तं वायुं स्पृशन्तीति वासुदेवाङ्गरागातिपुण्य - गन्धानिलस्पृशः तेषाम् ॥२१॥

प्रजाविसर्गः सन्ततीनामुत्पत्तिः, स्थविष्ठः बहुलः ॥२२॥

प्रजासूतिः सन्तानोत्पत्तिः ॥२३॥

कृतप्रारम्भे लक्षणान्तरमाह - यदेति। तिष्यः पुष्यः चन्द्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रयोगः, तदा कृतयुगं भविष्यति यद्यपि प्रतिद्वादशाब्दे अर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ये योगः सम्भवति तथापि तेषां सहप्रयोगोऽत्र विवक्षितः समेष्यन्ति इति वचनात् ॥२४॥

येऽतीता वर्तमाना ये ये[2] भविष्यन्ति पार्थिवाः।
ते त उद्देशतः प्रोक्ताः वंशजाः[3] सोमसूर्ययोः ॥२५॥

आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् ।
ए॰ ॰वर्षसहस्रं ॰ शतं पञ्चदशोत्तरम् ॥२६॥

सप्तर्षीण॥ तु यौ पूर्वौ दृश्येते उदितौ दिवि ।
तयोस्तु मध्ये नक्षत्रं दृश्यते यत् समं निशि ॥२७॥

तेनैव[4] ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् ।
ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः[5] ॥२८॥

विष्णोर्भगवतो[6] भानुः कृष्णाख्योऽसौ दिवं गतः।
तदाविशत् कलिर्लोकं पापे यद्रमते[7] जनः ॥२९॥

यावत् स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः ।
तावत् कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥३०॥

---

1 A 'णा', 2 ABGJ भविष्यन्ति च, 3 ABGJW वंशीयाः, 4 ABGJM तेनैते, 5 MW मघाम्, 6 M विष्णुस्तु भगवान्, 7 HV भनः

**यदा देवर्षयः सप्त मघासु विचरन्ति हि ।**
**तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥३१॥**

**यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः ।**
**तदा नन्दात् प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥३२॥**

**श्रीध०** एवं नवमस्कन्धमारभ्यानुक्रान्तं वैवस्वतमनोर्वंशद्वयं निगमयति - **येऽतीता** इति। उद्देशतः संक्षेपतः ॥२५॥

कलियुगावान्तरविशेषं वक्तु माह - **आरभ्येत्यादिना**। वर्षसहस्रं पञ्चदशोत्तरं शतं चेति कयापि विवक्षयाऽवांतरसंख्येयम्। वस्तुतस्तु परीक्षिन्नन्दयोरन्तरं द्वाभ्यां न्यूनं वर्षाणां सार्धसहस्रं भवति। यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुंजयान्ता विंशतिराजानः सहस्रसंवत्सरान् भोक्ष्यन्तीत्युक्तं नवमस्कन्धे "एते बार्हद्रथा भूपा भाव्याः साहस्रवत्सरम्" इति। ततः परं पंच प्रद्योतना अष्टत्रिंशोत्तरं शतम्। शिशुनागाश्च "षष्ट्युरशतत्रयं भोक्ष्यन्ति पृथिवी" मित्यत्रैवोक्तत्वात् ॥२६॥

कलियुगस्य प्रवृत्तिं वृद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह - **सप्तर्षीणां त्विति**। अयमर्थः। प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलम्। तत्र किंचिदुन्नतेषाऽग्रस्थानीयो मरीचिः। ततः पश्चादानम्रयुगकंधराकारो वसिष्ठः सभार्यः। ततः पश्चादीष दुन्नतेषामूलस्थानीयोऽगिराः। ततः पश्चाच्चतुरस्रताराचतुष्के ईशान्यामत्रिः, ततो दक्षिणतः पुलस्त्यः, पुलस्त्यात्पश्चिमतः पुलहः, तत उत्तरतः क्रतुः। एवं स्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ दृश्येते तौ पुलहक्रतुसंज्ञौ तयोस्तु मध्ये तयोस्तु पूर्वयोस्तु मध्ये तत्समं दक्षिणोरखायां समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते तेन तथैव युक्ता नृणामब्दशतं तिष्ठंति ते च द्विजास्त्वदीये कालेऽधुना मघाः आश्रिता वर्तन्ते ॥२७-२८॥

**विष्णोरिति**। तेषु मघासु वर्तमानेषु सत्सु यदा विष्णो र्भानुः भातीति भानुः शुद्धसत्त्वात्मको देहो दिवं वैकुंठं गतस्तदा कलियुगमविशत्। यद्यस्मिन्युगे जनः पापे रमत इति कलियुगस्य लक्षणम् ॥२९॥

ननु श्रीकृष्णे पृथिव्यां वर्तमानेऽपि सन्ध्यापेणकलिः प्रविष्ट एवासीत्। सत्यम्। तथापि तावत्तस्य पराक्रमो नाऽभवदित्याह- **यावदिति**। पराक्रान्तुमभिभवितुम् ॥३०॥

अतो यथोक्त एव कलिप्रवेशकाल इत्याह - **यदा देवर्षय इति**। द्वादशाब्दं शतात्मक इति। दिव्येन मानेन संध्यासंध्यांशाभ्यां सह यो द्वादशाब्दशतात्मकः स कलिस्तदा संध्यामतिक्रम्य प्रविष्ट इत्यर्थः ॥३१॥

---

1 HV 'प्योप' 2 HV ऊनं 3 ABJ 'र 4 ABJ कले 5 HV 'दुन्नतस्या' 6 HV ऐ 7-7 HV दक्षिणत 8 HV मन

कलेः प्रवेशकालमुक्त्वा तस्य वृद्धिकालमाह - **यदेति**। तदा प्रद्योतनात्प्रभृति वृद्धिं गच्छन् नन्दात्प्रभृत्यतिवृद्धिं गमिष्यतीत्यर्थः ॥३२॥

**वीर०** स्कन्धत्रयार्थमुपसंहरति - **येऽतीता** इति। सोमसूर्ययोर्वंशीया वंशप्रभवाः, ते तुभ्यं, उद्देशतः उत्पत्तिक्रमतः संक्षेपतो वा प्रोक्ताः ॥२५॥

मज्जन्म प्रभृतियावत्सोमवंशसमाप्ति, कियान् कालो भविष्यति इत्यभिप्रायमालक्ष्याह - **आरभ्येति**। नन्दाभिषेचनपर्यन्तैव सोमवंशस्यानुवृत्तिरतो यावन्नन्दाभिषेचन मित्युक्तं, एतदन्तरं वर्षाणां पञ्चदशोत्तरशतं सहस्रं चेत्यर्थः। वर्षसहस्रं पञ्चदशोत्तरं शतं चेति कयापि विवक्षयाऽवान्तरसंङ्ख्येयं, वस्तुतः परीक्षिन्नन्दयोरन्तरं द्वाभ्यां न्यूनं वर्षाणां सार्धसहस्रं भवति, यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुंजयान्ता विंशति राजानः सहस्रसंवत्सरान् भोक्ष्यन्तीत्युक्तं नवमस्कन्धे "एते बार्हद्रथा भूपा भाव्यास्साहस्र वत्सरम्" (भाग.9.22.49) इति, ततःपरं, च - प्रद्योतना अष्टत्रिंशोत्तरं शतं शिशुनागाश्च "षष्ट्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवी" (भाग. 4.27.13) मित्यत्रैवोक्तत्वात् ॥२६॥

कदा तर्हि कलियुगारम्भ इत्यभिप्रायमालक्ष्य तद्वृद्धिकालं च विवक्षुस्तावदारम्भकालमुपलक्षणेनाह - **सप्तर्षीणामिति** द्वाभ्याम्। अयमर्थः - प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किञ्चिदुन्नतेषाग्रस्थानीयो मरीचिः, ततः पश्चादानम्रयुगकन्धराकारो वसिष्टः सभार्यः, ततः पश्चादीषदुन्नतेषामूलस्थानीयोऽङ्गिराः, ततः पश्चाच्चतुरश्रताराच्चतुष्के ईशान्येऽत्रिः, ततो दक्षिणतः पुलस्त्यः, पुलस्त्यात्पश्चिमतः पुलहः, तत उत्तरतः क्रतुः एवं स्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसंज्ञौ तयोस्तु मध्ये तयोः पूर्वयोस्तु मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते तेन तथैव युक्ता ऋषयः नृणामब्दशतं तिष्ठन्ति, ते च द्विजा ऋषयःत्वदीये काले अधुना मघामाश्रित्य वर्तन्ते पूर्वयोर्मघानां च साम्यावस्थित्युपक्रमकालः कलियुगारम्भकाल इति सूचितं, तदग्रे स्पष्टमेव वदिष्यति ॥२७-२८॥

कदा तर्हि युगाभिमानिपुरुषप्रवेश हत्यतस्तमुपलक्षणेनाह - **विष्णोरिति**। भानुः, भातीति भानुः प्रकाशबहुलः कृष्णाख्यो भगवतो देहः यदा दिवं वैकुण्ठं गतस्तदा कलिरिमं लोकं अविशत् यद्यस्मात् युगाभिमानिपुरुषाद्धेतोः जनः पापे रमते युगसन्धौ हि भगवदवतारः। प्रवृत्तेपि कलौ युगे भगवतः स्वधामानुगमनात् पूर्वं कलिपुरुषो न प्रबभूवेत्यनेन सूच्यते ॥२९॥

तत् स्पष्टमेवाह - **यावदिति**। सः श्रीकृष्णः, कलिपुरुषः पृथिवीं पराक्रान्तुमभिभवितुं नाशकन्नस्वकार्यक्षमो बभूवेत्यर्थः ॥३०॥

**सूचितमर्थं स्पष्टमाह - यदा देवर्षय इति।** मघासु विचरन्ति तासां समजवे चरितुमारब्धवन्त इत्यर्थः। तदा कलियुगं तस्य परिमाणं द्वादशाब्दशतात्मक इति दिव्येन मानेन सन्ध्यासन्ध्यांशाभ्यां सह यो द्वादशाब्दशतात्मकः स कलिः प्रवृत्त इति सम्बन्धः ॥३१॥

कदा तर्हि कलिधर्माभिवृद्धिरित्यतस्तामुपलक्षणेनाह - **यदा मघाभ्य इति।** मघाभ्यः इति पञ्चमी, तत्समं देशं विहाय पूर्वाषाढानां (पूर्वफल्गुन्योः) समदेशं यास्यन्ति तदा ॥३२॥

**विज०** एवं नवमस्कन्धमारभ्याऽनुक्रान्त वैवस्वतमनोर्वंशद्वयमुपसंहरति - **येऽतीता इति।** उद्देशतः सङ्क्षेपतः ॥२५॥

कलियुगावान्तरविशेषमाह - **आरभ्येति।** वर्षसहस्रं पञ्चदशोत्तरशतं चेति कयापि विवक्षयाऽवान्तरसङ्ख्येयम्। वस्तुतः परीक्षिन्नन्दयोरन्तरं द्वाभ्यामूनं वर्षाणां सार्धसहस्रं भवति। यतः परीक्षित्समकालं मागधमार्जारिमारभ्य रिपुञ्जयान्ता विंशतिराजानः सहस्रवत्सरं भोक्ष्यन्तीत्युक्तं नवमस्कन्ध "एते बार्हद्रथा भूपा भाव्याः साहस्रवत्सरम्" (भाग.9-22-49) इति। ततः परं च प्रद्योतना अष्टत्रिंशच्छतं, शिशुनागाश्च षष्ट्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तम् ॥२६॥ (भाग.4-27-13)

कलेः प्रवृत्तिं वृद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह - **सप्तर्षीणामिति।** अयमर्थः प्रागग्रं शकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किञ्चिदुन्नतरेखाया अग्रस्थानीयो मरीचिः, ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्यः, ततः पश्चा - दीषदुन्नतस्तेषां मूलस्थानीयोऽङ्गिराः, ततः पश्चाच्चतुरस्र ताराचतुष्के ईशान्येऽत्रिः, ततो दक्षिणतः पुलस्त्यः, पुलस्त्यात्पश्चिमतः पुलहः, तत उत्तरतः क्रतुः। एवं स्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसंज्ञौ तयोस्तु मध्ये तयोः पूर्वयोश्च मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते ॥२७॥

यत्तेन तथैव युक्ताः नृणामब्दशतं तिष्ठन्ति ते च द्विजास्त्वदीये काले अधुना मघां आश्रिता वर्तन्ते ॥२८॥

तेषु ऋषिषु मघासु वर्तमानेषु सत्सु ॥२९॥

पराक्रान्तुं स्वसामर्थ्यं दर्शयितुम् ॥३०॥

कियन्तं कालं विचरणमित्यतः उक्तं - **द्वादशेति** ॥३१॥

अस्तु कलेः परं कश्चित्कालं हित्वा पश्चाद् वृत्तिः सा कदेति तत्राह - **यदेति** ॥३२॥

**यस्मिन् कृष्णो दिवं यातः तस्मिन्नेव तदाऽहनि।**
**प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥३३॥**

दिव्याब्दानां सहस्रान्ते [1]चतुर्थे तु पुनः कृतम्।
भविष्यति [2]यदा नृणां मन आत्मप्रकाशकम् ॥३४॥

इत्येष मानवो वंशो यथा संख्यायते भुवि ।
तथा विट्शूद्रविप्राणां [3]वंशाः [4]ज्ञेया युगे युगे ॥३५॥

एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम् ।
कथामात्रावशिष्टानां कीर्तिरिव स्थिता भुवि ॥३६॥

देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः।
कलापग्राम आसाते महायोगबलान्वितौ ॥३७॥

ताविहैत्य कलेरन्ते वासुदेवानुशिक्षितौ ।
वर्णाश्रमयुतं धर्मं पूर्ववत् प्रथयिष्यतः ॥३८॥

कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् ।
अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥३९॥

राजन्नेते मया प्रोक्ता नरदेवास्तथाऽपरे।
भूमौ ममत्वं कृत्वान्ते [5]हित्वेमां निधनं गताः ॥४०॥

**श्रीध०** ननु यदा कलेर्लिङ्गमुपलब्धं तदैव प्रविष्ट इति युक्तं, ततः पूर्वमेव प्रवेशः, ततः परं वृद्धिरित्यत्र किं प्रमाणं तत्राह **यस्मिन्निति**। प्रतिपन्नं प्रविष्टमिति [6]ज्ञातम्। पुराविदः पूर्वज्ञातारः॥३३॥

[7]कलेरनन्तरं कृतयुगप्रवेशमाह - **दिव्याब्दानामिति**। चतुर्थे कलौ प्रवेशनाब्दपरिमितेनांशेनाऽपि सह [8]अतीते सतीत्यर्थः। कृतयुगप्रवेशचिह्नमाह। यदा नृणां मन आत्मप्रकाशकं भविष्यति तदेति ॥३४॥

राजवंशोक्तां स्थितिं ब्राह्मणादिवंशेष्वप्यतिदिशति - **इत्येष इति**। यथा याभिरुच्चनीचावस्थाभिः। तास्ता अवस्थाः। वंशा इति वा पाठः ॥३५॥

---

1--1 M °स्रे तु प्रतियाते, 2 H V तदा, 3 A B G J W तास्ताः ; 4 W बोध्याः, 5 W हित्वा ते, 6 H V °न°, 7 H V °रन्तं, 8 H V गते

एतत्कीर्तनस्य वैराग्योपयोगितामाह - **एतेषामिति**। नामैव[1] लिंगं ज्ञापकं येषां तेषां कथामात्रेणैव अवशिष्टानां कीर्तिरिव स्थिता न तु राज्यं पुत्रादयो वा ॥३६॥

कलावुत्सन्नानां राजवंशानां[2] पुनः प्रवृत्तिप्रकारमाह - **देवापिरिति**। देवापिः सोमवंशजः। [3]मरुस्तु सूर्यवंशजः[3]। कलापग्रामो नाम योगिनामावासः प्रसिद्धः ॥३७-३८॥

इममेव प्रकारं प्रतिचतुर्युगं दर्शयति। **कृतमिति**॥३९॥

"एतेषां नामलिंगानां" भाग (12 2 36) इत्यादि यदुक्तं तत्प्रपञ्चयति - **राजन्निति** पञ्चभिः ॥४०॥

**वीर०** "पराक्रान्तुं न चाशकदि" (भाग. 12 2 30) त्यनेन प्रविष्टस्याऽपि कलिपुरुषस्य भगवत्पादपद्मस्पर्शप्रभावात् स्वकार्याक्षमत्वमुक्तं, तत्राभिज्ञान् संवादयति - **यस्मिन्निति**। यस्मिन्नहनि जातः तस्मिन्नेवाहनि [4]तत्राऽपि तस्मिन्नेव क्षणे कलियुगे प्रतिपन्ने[4] स्वकार्यकरणे प्राप्तं प्राहुः पुराविदः कालाभिज्ञा ॥३३॥

कलेरनन्तरं कृतयुगप्रवेशमाह - **दिव्याब्दानामिति**। चतुर्थे कलौ युगे दिव्यानामब्दानां यत्सहस्रं तस्यान्ते दिव्येन मानेन सहस्राब्दपरिमिते चतुर्थे युगेऽतिक्रान्ते सति इत्यर्थः। द्वादशाब्दशतात्मक इति सन्धिभ्यां सकलय्योक्तं, अत्र तु तौ विना मध्यकाल परिमाण मुक्तं इत्यतो न विरोधः। कृतयुगारम्भकालमुपलक्षणेनाह - यदा नृणां मन आत्मप्रकाशकमिति आत्मस्वरूपगोचरक्षमं भविष्यति तदा कृतयुगं भविष्यतीत्यर्थः ॥३४॥

तत्र प्रजाः कीदृश्यः इत्यभिप्रायमालक्ष्याह - **इत्येष** इति इत्थम्भूत एष मानवः वैवस्वतमनुवंशः यथासङ्ख्यायते याभिरुच्चनीचावस्थाभिः सम्यक् ख्यायते कथ्यते तदा विट्शूद्रविप्राणां तास्ता अवस्था युगे युगे बोध्या इत्यर्थः ॥३५॥

किं बहुना वंशानुकीर्तनेनेति तटस्थशङ्कां वारयति - **एतेषा मिति** । नामलिङ्गशब्दो मत्वर्थीयाऽर्श आद्यजन्तः एवंविधनामरूपवतां इत्यर्थः। महात्मनां इत्यनेन तत्र केषाञ्चिद्भागवतत्व तत एव तच्चरित्रस्यावश्य श्रोतव्यत्वादिकञ्च सूच्यते, कथामात्रेणैवावशिष्टानां न तु नामारूपाभ्याम् अनेन, तयोरनित्यत्वं सूच्यते, तेन च तात्पर्यालोचनतया वैराग्यहेतुत्वं फलितम् कीर्तिरिव स्थिता भुवीत्यनेनावश्यं राजभिः कीर्तिमद्भिर्भवितव्यं इति व्यज्यते ॥३६॥

ननु, कलावुत्सन्नराजवंशतद्धर्माणां कुतः पुनः कृते प्रवृत्तिरित्यभिप्रायमालक्ष्याह - **देवापिरिति**। शन्तनोर्भ्राता देवापिर्नाम

---

1 H V ०न॰. 2 H V ०शादीना 3- -3 H V omits. 4- -4 W omits

**सोमवंश्यः मरुर्नामेक्ष्वाकुवंशजः सूर्यवंश्यः इत्यर्थः। तावुभावधुना कलापग्रामे आसाते कलापग्रामो बदर्याश्रमस्थो योगिनामावासः प्रसिद्धः, कथम्भूतौ, महता योगबलेनान्वितौ ॥३७॥**

ततः किमत आह - **ताविति**। कलेरन्तः कृतयुगादिः तदा भगवता अनुशिक्षितौ उपदिष्टवर्णाश्रमधर्मौ आदिष्टौ चेह [1] लोके एत्य आगत्य वर्णाश्रमधर्मं पूर्ववत् प्रथयिष्यतः [1] प्रकटीकरिष्यतः ॥३८॥

प्रति चतुर्युगरीतिः कीदृशीत्यभिप्रायमालक्ष्याह - **कृतमिति**। अनेन क्रमयोगेन निरूपिता चतुर्युगक्रमयोगरीत्यैव प्रतिचतुर्युगं प्राणिषु वर्तते निमित्ततया प्रवर्त्तत इत्यर्थः। इयमेव रीतिः प्रतिचतुर्युगमिति भावः। यद्यप्यत्र त्रेताद्वापरयोः प्रकारो नोक्तः इत्यनेन क्रमयोगेनेत्यसङ्गतं, तथाप्याद्यन्त युग[2]रीतिनिरूपणे मध्ययोरपि [3]युगयोर्निरूपितप्रायतैव इत्यभिप्रायेण तथोक्तम् ॥३९॥

कथामात्रावशिष्टानां इत्यनेन सूचितं विवृणोति - **राजन्निति**। हे राजन्! एते मयाऽधुना निरूपिता वैवस्वत-मन्वन्तराऽवस्थाश्च राजानस्तावद्भूमौ ममत्वं ममताबुद्धिं कृत्वान्ते तद्भोगनिमित्तपुण्यावसाने निधनं [4]नाशङ्गताः, तेनैव ममत्वेन युता निरयं प्राप्ता इति भावः ॥४०॥

**विज०** कृष्णस्वर्गारोहणानन्तरं कश्चित्कालं हित्वा पश्चादाविष्टः किं कलिरुत तस्मिन्नेवाहनीति सन्देहं व्यवच्छिनत्ति - **यस्मिन्निति** ॥३३॥

ततः कियान् कालः कृतप्रारम्भायेति तत्राह - **दिव्येति**। यदा यस्मिन् कृतयुगे आत्मप्रकाशकं परमात्मप्रकाशकं, भवतीति शेषः ॥३४॥

इति शब्दः समाप्तिपर्यन्तं कथितः। एष मानवो वंशः वैवस्वतमनुसम्बन्धी भुवि यथा सङ्ख्यायते तथा विट्शूद्रविप्राणां वंशा अपि युगे युगे ज्ञेयाः बोद्धव्याः इत्यतिदेशोऽयम् ॥३५॥

एतेषां सत्त्वे किं ज्ञापकमत्राह - **एतेषामिति**। नामलिङ्गयुक्तानां, अनेनैतिह्यं प्रमाणमुक्तं भवति ॥३६॥

कृते धर्मप्रतिष्ठापकः क इति तत्राह - **देवापिरिति**। महायोगबलान्वितौ महाज्ञानबलयुक्तौ अणिमाद्यैश्वर्ययुक्तौ वा ॥३७-३८॥

कति युगानीत्यत्राह - **कृतमिति** ॥३९॥

एषामज्ञान माह - **राजन्निति** ॥४०॥

---

1--1 W. omits, 2 W. omits रीति, 3 W omits युगयो, 4 W omits नाशं

**[1]क्रिमिविड्[3]भस्मसंज्ञान्ते रा[2]जानाम्नोपि यस्य च ।**
**भूतध्रुक् तत्कृते स्वार्थं किं वेदनिरयो यतः ॥४१॥**

**कथं सेयमखण्डा भूः पूर्वै[4]र्मे पुरुषैर्धृता ।**
**तत्पुत्र[5]स्य च पौत्रस्य मत्पूर्वा वंशजस्य च ॥४२॥**

**तेजोऽबन्नमयं कायं गृहीत्वाऽऽत्मत[6]याऽबुधाः ।**
**महीं ममतया [7]चोभौ हित्वान्तेऽदर्शनं गताः ॥४३॥**

**ये ये भूपतयो राजन्! भु[8]ञ्जाते भुवमोजसा ।**
**कालेन ते कृताः सर्वे[9] कथामात्राः कथासु च ॥४४॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे द्वितीयोऽध्यायः ॥२॥

**श्रीध०** 'ममत्वं कृत्वे' त्यनेन सूचितां भूतद्रोहप्रवृत्तिं निन्दति। क्रिमीति।राजनाम्नो राजेति नाम यस्य तस्यापि देहस्यान्ते [10]क्रिमयो [11]विट् विष्टा भस्मेति वा संज्ञा भविष्यति। तत्कृते तदर्थं यो भूतध्रुक् भूतेभ्यो ध्रुह्यति स किं स्वार्थं वेद किंतु न वेदैव। कुत इत्यपेक्षायां हेतुत्वेन भूतद्रोहं विशिनष्टि। यतो भूतद्रोहान्निरयो भवति ॥४१॥

ममत्वप्रकारं प्रपंचयति। **कथमिति**। सेयमखण्डा भूः मे पूर्वजैः धृता सती इदानीं मत्पूर्वा च सती मत्पुत्रादेः कथं स्यादित्येवम् ॥४२॥

**तेज** इति।उभौ महीं कायं च [2]अदर्शनं मृत्युम् ॥४३॥

उपसंहरति - **ये ये इति**। ते सर्वे च कथासु क्रियमाणासु। कथामात्राः कालेन कृताः ॥४४॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां द्वितीयोऽध्यायः ॥२॥

**वीर०** एतदेव विशदयति - **क्रिमीति**। यस्य राजनाम्नोऽपि शरीरस्यान्ते क्रिमयो विष्ठा भस्मेति वा संज्ञा भविष्यति तत्कृते तदर्थं भूतेभ्यो द्रुह्यतीति तथा। स किं स्वार्थं स्वहितं वेद? तत्र हेतुत्वेन भूतद्रोहं विशिनष्टि -यतो भूतद्रोहान्निरयो भवति ॥४१॥

---

1 A.B.G.J.M कृ॰, 2 B °ज्ञा°, 3 M मनुते, 4 M °र्मत्पु°, 5 A.B.G.H.J वा, 6 M यामुधा, 7-7 H.V कृत्वा हित्वोभौ विषन्नं, 8 A.B.G.J.W. °न्ति, 9 M वै, 10. A.B.J कृ॰, 11 A.B.J omit विट्, 12 H.V निधन

ममतां कृत्वेत्युक्तं ममताप्रकारं प्रपञ्चयति - **कथमिति**। संयमखण्डा भूमिर्मम पूर्वजैर्धृता सती, मदनन्तरं मत्पूर्वं महमेव पूर्वो धर्ता यस्यास्तथाभूता सती, मत्पुत्रादेः कथं स्यादित्येवम् ॥४२॥

किञ्च, **तेज** इति। अबुधाः देहातिरिक्तात्मज्ञानविधुराः, अत एव तेजोऽबन्नपरिणामरूपं कायं शरीरमात्मतया गृहीत्वाऽभिमत्य महीं तु ममतया गृहीत्वा उभौ पृथ्वीकायौ हित्वाऽन्ते प्रारब्धान्तेऽदर्शनं लयं गताः प्राप्ताः ॥४३॥

कथामात्रावशिष्टानां इत्यस्य प्रपञ्च मुपसंहरति - **ये ये** इति। हे **राजन्**! ये ये राजानो भुवमोजसा पौरुषेण भुञ्जन्ति ते सर्वे कालेन कृताः समाप्ताः। कथासु क्रियमाणासु कथामात्ररूपाः कृताश्च ॥४४॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां द्वितीयोऽध्यायः ॥ २ ॥

**विज०** राजनाम्नोपि यस्य शरीरस्यान्ते नाशे कृमिविड् भस्मसंज्ञा तादृशं शरीरं प्राप्य भूतध्रुक् स्वार्थं मनुते न परप्रयोजनं यतो भूतद्रोहान्निरयो भवति तं वेद किन्न, वेदैव। यस्य पुरुषशरीरस्यान्ते इति वा ॥४२॥

स्वार्थमननप्रकारमाह - **कथमिति**। भवन्त्यस्यां सत्त्वानीति भूः येयं मत्पूर्वैः पुरुषैः, धृता सेयं भूर्ममाखण्डा राजान्तरानधिकृता कथं स्यान्मत्पुत्रस्य मत्पौत्रस्य च मद्वंशजस्य, अहं पूर्वो यस्यां सा मत्पूर्वा च कथं स्यादिति मत्वा ॥४२॥

तेजोऽबन्नमिदं कायमात्मतया नित्यत्वेन मुधा गृहीत्वा अमी राजानो ममत्वेन गृहीत्वा उभौ महीं च देहं च हित्वा अदर्शनं मरणं गता भवन्तीत्यन्वयः ॥४३॥

साम्प्रतं तेष्वेकोऽपि नास्तीत्याशयेनाह **य** इति। पुराणादिगतकथासु कथामात्राः सर्वात्मना कथैव येषां ते तथाकृताः स्वरूपतो न सन्तीति शेषः ॥४४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
द्वादशस्कन्धे द्वितीयोऽध्यायः ॥२॥

**(श्रीविजयध्वजतीर्थरीत्या नवमोऽध्यायः न समाप्तः)**

# तृतीयोऽध्यायः

## श्रीशुक उवाच

दृष्ट्वाऽऽत्मनि जये व्यग्रान् नृपान् हसति भूरियम् ।
अहो मां विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥१॥

काम एष नरेन्द्राणां मोघः स्याद् विदुषामपि ।
येन फेनोपमे पिण्डे येऽतिविस्रम्भिता नृपाः ॥२॥

पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः ।
ततः सचिवपौराप्तकरीन्द्रानथ कण्टकान् ॥३॥

एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् ।
इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम् ॥४॥

समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा ।
कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥५॥

यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह ।
गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः ॥६॥

मत्कृते पितृपुत्राणां भ्रातृणां चाऽपि विग्रहः ।
जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥७॥

ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः ।
स्पर्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये भूमिगीतैस्तु राज्यदोषादि वर्ण्यते । कलौ च दोषभूयिष्ठे दोषहन्त्री हरेर्नतिः ॥

देहेऽहन्तां भूमौ च ममतां [8]कुर्वन्त्यतोऽबुधा[8] इत्युक्तम् । तदेव भूमिगीतै प्रपञ्चयति **दृष्ट्वेत्यादिना** । आत्मनि पृथिव्
जये व्यग्रानुद्युक्तान् । हासप्रकारमेवाह अहो इति ।[9]मा माम् ॥१॥

---

1 W विजये MMa 'नि जय', 2 MMa येन , 3 ABGJ 'श्र , 4 HV 'मान् , 5 ABGHJV 'नम्य , 6 W वापि , 7 ABJ श्च
8- -8 HV कुर्वन्तोऽबुधा ; 9 HV omits मा माम्

**काम इति**। येन कामेन फेनोपमे पिण्डे देहेऽतिविस्रम्भिता विश्वासं नीता ये तेषां नरेन्द्राणां स[1] एष कामो, मोघ एव[2] स्यात् ॥२॥

काममेव दर्शयति द्वाभ्यां, **पूर्वमिति**। इन्द्रियार्थलम्पटस्य न राज्यप्राप्तिः स्यादिति प्रथममिन्द्रियषड्वर्गं निर्जित्य राजमन्त्रिणो जेष्यामो, वशीकरिष्यामः। सचिवा अमात्याः, करीन्द्रा हस्तिपाः तांश्च जेष्यामः। कण्टकान् प्रतिपक्षान्। अस्य अपास्य। अथ कण्टकानिति वा पाठः ॥३॥

**एवमिति**। एवं केचिदाशाबद्धहृदया एवं केचिन्मां पुनर्जित्वाऽप्यतितृष्णयाऽब्धिं विशन्ति तदेवमिन्द्रियजयेन ये राज्यं साधयितुमिच्छन्ति तेऽतिमन्दा इत्याह कियदिति ॥४,५॥

अन्तकं न पश्यन्तीत्युक्तं, तदेवाह **यामिति**। कुरूद्वहेति भूमिगीतं कथयन् शुकः सम्बोधयति। 'कुलोद्वह!' इति तु पाठः सुगमः ॥६॥

अबुद्धय इत्युक्तं, तत्प्रपञ्चयति **मत्कृत** इति ॥७,८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

प्रपञ्चितां ममतां महीहासेन संवादयन् वैराग्यमुत्पादयन् कलिदोषान् प्रपञ्चयन् च तन्निरसनोपाय मुपदिशति तृतीयेन - **दृष्ट्वात्मविजये** इत्यादिना। आत्मनि भूमौ निमित्ते यो विजयः तस्मिन् व्यग्रान् उद्युक्तान् दृष्ट्वा इयं[3] भूर्हसति। हासमेव प्रपञ्चयति अहो इत्यादिभिः सार्द्धैः द्वादशभिः। मृत्योः क्रीडनकाः तदधीनाः इमे नृपाः मां विजिगीषन्ति विजयेन मां भोक्तुमिच्छन्तीत्यर्थः ॥१॥

**काम इति**। विदुषामपि। पित्रादिदृष्टान्तेन मृत्युवश्यतां पश्यतामपि, अयं कामः विजिगीषात्मकेच्छाविशेषः मोघः व्यर्थः, मोघत्वे हेतुतया[4] कामं विशिनष्टि - येन कामेन फेनोपमे जलबुद्बुदतुल्ये पिण्डे शरीरे ये नृपाः अतीव विस्रम्भिताः विश्वासं नीताः तेषां नरेन्द्राणामिति पूर्वेण सम्बन्धः ॥२॥

विजिगीषुतां प्रपञ्चयति - सार्द्धद्वाभ्यां **पूर्वमिति**। इन्द्रियलम्पटस्य न राज्यप्राप्तिः स्यादिति तावत् षड्वर्गं इन्द्रियषट्कं जित्वा तद्द्वारा देवताप्रसादमधिगत्येति भावः। क्रमेण राजमन्त्रिप्रभृतीनस्य भूमण्डलस्य कण्टकतुल्यान् जेष्यामः। तत्र सचिवा अमात्या अवान्तरव्यापारिणः, पौराः पुरे भवाः, तेषामाप्ताः करीन्द्रा हस्तिपाश्च तान् ॥३॥

---

1 A B J omit स ; 2. H V omit एव ; 3 W omits इय ; भू 4 A ॅत्वात्

ततः सागराः मेखला यस्यास्तां मेखलयेव सागरेण परिवृतां इत्यर्थः। पृथ्वीं जेष्यामः स्वाधीनां करिष्यामः इति इत्थम्भूताशया बद्धं हृदयं येषां ते, अन्तिके, समीपे वर्तमानं अन्तकं मृत्युं न पश्यन्ति नावलोकयन्ति; किन्तु मां [1]समुद्रावरणां जित्वा ततोऽब्धिं विशन्ति द्वीपान्तराणि प्रविशन्ति तान् विजिगीषन्तीत्यर्थः। तावत्कृतस्य इन्द्रियजयस्य नेदं फलमित्याह - कियदिति। एतत् कृत्स्नभूमण्डलस्य सप्तद्वीपस्य आत्माधीनताप्रापणमित्येतत् कियत्फलं न किञ्चिदेतदित्यर्थः। तत्फलस्य नश्वरत्वादिति भावः। किं तर्हि फलमित्यत आह - मुक्तिरात्मजये [2]तावत् फलमिति ॥४,५॥

एतदेवोपपादयति - **यामिति**। कुरूद्वहेति सम्बोधनं, [3]भूमिगीर्ति कथयन् शुकः[3] सम्बोधयति। कुलोद्वहेत्यपि पाठः सुगमः, तत्सुता मनुपुत्राश्च यां मां विसृज्यैव गताः मृताः तथा तां विजित्य विसृष्टामपि अबुद्धयो बुद्धिरहिताः युद्धे जेष्यन्ति, युद्धेन वशीकरिष्यन्तीत्यर्थः। गतमित्यस्य तैरिति शेषः। तेप्येवमेव गमिष्यन्तीत्यर्थः। अत्यन्तसादृश्येन अभेदमारोप्य गतमिति भूतनिर्देशः ॥६॥

अबुद्धितां प्रपञ्चयति **मत्कृते** इति। मत्कृते मदर्थं, विग्रहः विरोधः जायते, तत्र हेतुत्वेन तान् विशिनष्टि। राज्ये ममताभिमानेन बद्धं चेतो येषां तेषां अत एव च असतां दुरात्मनाम् ॥७॥

ममताबद्धचेतस्त्वमेव अभिनयेन दर्शयन्ती तत्प्रयुक्तमसत्कर्म दर्शयति - **ममैवेति** हे मूढ ! ते तवेयं भूमिर्न भवति, किन्तु ममैवेति। [4]वादान् [5]कुर्वतः मिथः[5] घ्नन्ति ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

चतुर्युगधर्मविभागः कलिदोषपरिहारश्चेत्येतदस्मिन् अध्यायेऽभिधीयते। तत्रादौ राज्ञां मौढ्यदर्शनेन भूमेः परिहासप्रकार माह - **दृष्ट्वेति**। आत्मनो नितरां जये व्यग्रांस्तदेकपरायणान् ॥१॥

मौढ्यत्वमुपपादयति, **येनेति** ॥२॥

कीदृशस्तेषां कामः? इति तत्राह **पूर्वमिति**। षड्वर्गं सन्ध्यादिलक्षणं निर्जयो नामोत्कर्षः षडिन्द्रियविषयं वा। अनेन भूम्येक साधनाग्रहं सूचयति - राजमन्त्रिणः राजा च मन्त्रिणश्च राजमन्त्रिणः। मन्त्री बुद्धिसहायः स्यादिति, ततो मन्त्रिजयानन्तरं सचिवः कर्मसहायः "अमात्याः कर्मसचिवाः" इत्यमरः। आप्ताः विश्वस्ताः अथपश्चात्कण्टकान्, क्षुद्रशत्रून् ॥३॥

एवं क्रमेण राज्ञो जित्वा पृथिवीं जेष्यामः वशीकरिष्यामः इत्याशयाऽति तृष्णया अन्तकं मृ[illegible] ॥

---

1 W 'च' ह; 2 W omits तावत्; 3--3 W omits; 4 W वादिनः; 5--5 W omits

एवं केचित् पुनः मां जित्वाप्यतितृष्णयाऽवधिं विशन्तीत्यनेन द्वितीयादिजयाद्यं सूचयति **भूजयादिना**, न किमपि प्रयोजनमपि त्वन्ततोऽनर्थ एवावसिष्यते। मनोजयफलापेक्षयेत्याह कियदिति। आत्मजयस्य मनोजयस्य फलापेक्षयैतद् भूजयादिकं कियत्फलं, आत्मजये किं फलं येनायमत्र साध्यः स्यादिति तत्राह **मुक्तिरिति**। आत्मजये मुक्तिरेव फलं, यस्मात्तस्मादिति शेषः ॥५॥

इतोऽपि मज्जयकामा अज्ञा एवेत्याह **यामिति**। मनवः तत्सुताश्च यां मां विसृज्य यथा गता याताः अबुद्धयः तां मां जेष्यन्तीत्यन्वयः। आत्मजयवतां त्यागशक्तिरन्येषामन्यथेति सूचयति ॥६॥

न केवलमितरेषां मत्कृते विग्रहोऽपि तु शरीरसम्बन्धिनामपि स्यादित्याह - **मत्कृत** इति। अपिशब्दः पुत्रादीनामित्यनेन सम्बन्धयितव्यः। अयमपि प्रायिक इत्याह - असतामिति। असतामप्रशस्तकर्मणाम् ॥७॥

किंप्रकारो विग्रह इति तत्राह - **ममेति** ॥८॥

**पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः।**
**मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः ॥९॥**

**तृणबिन्दुर्ययातिश्च शर्यातिः शन्तनुर्गयः।**
**भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥१०॥**

**हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः।**
**नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः ॥११॥**

**अन्ये च बहवो दैत्या राजानो ये जनेश्वराः।**
**सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥१२॥**

**ममतां मय्य मर्त्यायां कृत्वोच्चैर्मर्त्यधर्मिणः।**
**कथावशेषाः कालेन ह्यकृतार्थाः कृता विभो ॥१३॥**

**कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम्।**
**विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम् ॥१४॥**

---

1 M.Ma °पः, 2 ABGJ महे° . M.Ma प्रजे° 3 ABGJW °वर्तन्त , 4 M.Ma अहो , 5 o M.Ma यशो , 6 HVW °ति°

**यस्तूत्तमश्लोकगुणानुवादः सङ्गीयतेऽभीक्ष्णममङ्गलघ्नः।**
**तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥१५॥**

**राजोवाच**

**केनोपायेन भगवन्! कलेर्दोषान् कलौ जनाः।**
**विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने ॥१६॥**

**श्रीध० पृथुरिति**। रामो नाम कश्चिद्राजा। यद्वा लोकदृष्ट्या दाशरथिरेव निर्दिष्टः ॥९,१०॥

**हिरण्यकशिपुरिति**। लोकान् रावयति रोदयतीति लोकरावणः ॥११,१२॥

**ममतामिति**। मयि उच्चैर्ममतां कृत्वा येऽवर्तन्त ते कालेन कथावशेषाः कृताः। विभो! इति संबोधनं कुरूद्वहेतिवत् ॥१३॥

राजवंशानुकथनस्य तात्पर्यमाह - **कथा इमा** इति। विज्ञानं विषयासारताज्ञानं ततो वैराग्यं तयोर्विवक्षया परेयुषां मृतानां वचोविभूतीर्वाग्विलासमात्ररूपा न तु पारमार्थ्यं परमार्थे युक्तं कथनं न भवतीत्यर्थः ॥१४॥

कस्तर्हि पुरुषाणामुपादेयः परमार्थस्तमाह **यस्त्विति**। नित्यं प्रत्यहं, तत्राप्यभीक्ष्णम् ॥१५॥

कलिदोषोपचये सति भक्तेरसम्भवं मन्यमानः पृच्छति - **केनोपायेनेति**। विधमिष्यन्ति नाशयिष्यन्ति। यथा यथावत् ॥१६॥

**वीर०** इतरै रजिताश्वः के पुनस्ते नृपा इत्यतस्तान् कांश्चिद्दर्शयति, **पृथुरिति**। अर्जुनः कार्त्तवीर्यः, रामो नाम कश्चिद्राजा, न तु दाशरथिः। धुन्धुहा धुन्धुमारः ॥९,१०॥

लोकं रावयति रोदयतीति लोकरावणो रावणः, भौमो नरकासुरः ॥११॥

उक्तेभ्योऽन्ये दैत्या राजानश्च महीश्वराः पृथिवीपतयः ते सर्वे एव यद्यपि सर्वजितः इतरैरजिताश्च ॥२१॥

मय्यप्युच्चैरधिकां ममतां कृत्वाऽवर्त्तन्त कश्चित्कालमिति शेषः। मर्त्यधर्मिण इति हेतुगर्भं अतः कालेनाकृतार्थाः असमापित भोगाभिलाषाः कृताः। विभो इति सम्बोधनं कुरूद्वहेतिवत् योज्यम् ॥१३॥

---

1 M Ma यत्रोत 2 Hv सम्नूप 3 H V च 4 A B J लोक 5 W omits धुन्धुहा 6 W नरक 7 W omits एव

राजवंशानुकीर्तनस्य तात्पर्यफलमाह-**कथा** इति। लोकेषु यशो[1] विताय विस्तार्य[2], परेयुषां परलोकं प्राप्तानां, महीयसां माहात्म्ययुक्तानां इमाः कथाः ते तुभ्यं कथिताः विज्ञान वैराग्यविवक्षया विज्ञानं विषयाणामसारत्वज्ञानं ततो वैराग्यं तयोर्विवक्ष क्षया कथिता इति सम्बन्धः, तत्र हेतुत्वेन कथा[3] विशिनष्टि - वचोविभूतिः व्यत्ययेन प्रथमार्थे द्वितीया वाग्वैभवविषयाः अनेन विशेषणेनाभिप्रेतं विशदयति, न तु पारमार्थ्यमिति, परमोऽर्थः पुरुषार्थः तस्य भावः पारमार्थ्यं तत्र तु नहीत्यर्थः। नह्येभिर्भुक्तेषु भोग्येषु पारमार्थ्यं अस्ती[4]ति भावः ॥१४॥

कस्तर्हि परमार्थोपाय[5] इत्यत आह-**यस्त्विति**। सङ्गीयते इत्यस्य सद्भिरित्यादिः। उत्तमश्लोकस्य भगवतो गुणाना मनुवादः स च अमङ्गलं संसृत्यापादक मशुभं कर्म हन्तीति तथा, तमेवमन्वहं तत्राप्यभीक्ष्णं श्रुणुयात् श्रवणप्रयोजनं दर्शयन्नधिकारिणं वि ेनष्टि, कृष्णेऽमलां भक्तिमभीप्समानः अमलामनन्यप्रयोजनां भक्तिमभीप्समानः कामयमानः, श्रवणपरम्परया भगवति दृढा भक्ति र्भविष्यतीति भावः ॥१५॥

"तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति" (भाग.12-2-32) इत्युक्तम्। तत्रावसरप्राप्त[6]निरूपणानन्तरं के पुनस्ते कलिवृद्धिप्रयुक्तदोषाः? कश्च तन्निस्तरणोपायः[7]? के पुनस्तद्युगा साधारणगुणाः? यावदेतच्चतुर्युगप्रवृत्तिस्ततः कथं वा प्रलयः? स च कतिविधः? इति पृच्छति राजा[8] **केनेति** द्वाभ्याम्। हे भगवन्! कलौ युगे उपचितान् कलेर्दोषान् केनोपयेन साधनेन विधमिष्यन्ति नाशयिष्यन्ति तत्साधनं मे मह्यं यथावत् ब्रूहि ॥१६॥

**विज०** तत्र कांश्चिन्नृपान् निर्दिशति - **पृथुरित्यादिना** ॥९-१२॥

एते मर्त्यशरीरधर्मिणः सर्वेप्यमर्त्यायां नित्यायां मयि विषये ममतां कृत्वा अकृतार्थाः असाधितपुरुषार्थाः कालेन बलिना कथावशेषाः कृताः, हि यस्मात्तस्मादमीषां अज्ञानमहो। अत आत्मजयेन भाव्यमित्यर्थः ॥१३॥

निगमयति - **कथा** इति। लोकेषु यशो विताय विस्तृत्य, परेयुषां लोकं प्राप्तानां महीयसां मन्वादीनां उत्तमानां पुरुषाणामिमाः कथास्ते कथिताः मयेति शेषः। किमर्थं कथिता इति तत्राह - विज्ञानेति। वचोविभूतिः वचसां विभूतयो विविधभवनविषया वा। विज्ञानवैराग्यविवक्षया योग्यस्य पुंसो विज्ञानवैराग्ये स्यातामित्यभिप्रेत्य विवृताः न तु पारमार्थ्ये[9] परमार्थ उत्तमार्थो वेदमुख्यार्थो भगवांस्तत् सम्बन्धविवक्षया नैव तस्य विधिनिषेधाविषयत्वात् विज्ञानविवक्षया अपि मदुक्त एव ग्राह्यो

1 W omits फल°, 2 W °स्तृत्य, 3 W omits कथा 4 AB omit अस्ति 5 W पारमार्थ्योपाय, 6 AB omit प्राप्त 7 W निस्तारोपा°, 8 W omits राजा, 9 B M Ma °मार्थ्यं

नान्योक्त इत्याह वचोविभूतीरिति। अन्यवाचो विभूतयो वचसां बहुत्वान्न पारमार्थ्यमुत्तमपुरुषार्थसाधनज्ञानमुद्दिश्य न भवन्तीत्यर्थः। "वाचो विग्लापनं हि तत्" इति श्रुतेः ॥१४॥

कुत इतरा वाचोविभूतयः पुरुषार्थोपयोगिन्यो न स्युरित्यत आह - यत्रेति। यत्र यस्यां वाचि उत्तमश्लोकगुणानुवादः सङ्गीयते पुरुषस्तामेव वाचं श्रुणुयात् श्रुणोत्वित्यर्थः। श्री हरिभक्त्यनुत्पादकत्वादितरा वाचो हेया इत्यर्थः "अन्या वाचो विमुञ्चथ" इति श्रुतेः ॥१५॥

ज्ञातकलिदोषपरिहारोऽपि राजा लोकोपकाराय पृच्छति - केनेति। कलेरुत्पन्नान् दोषान् विधमिष्यन्ति परिहरिष्यन्ति। उपचितान् समृद्धान्, तदुपायस्वरूपं यथा यथावत् ॥१६॥

**युगानि युगधर्मांश्च मानं प्रलयकल्पयोः ।**
**कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥१७॥**

**श्रीशुक उवाच**

**कृते प्रवर्तते धर्मः चतुष्पात्तज्जनैर्धृतः।**
**सत्यं दया तपो दानमिति पादा विभोर्नृप! ॥१८॥**

**सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः ।**
**आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥१९॥**

**त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः[2]।**
**अधर्मपादैरनृतहिंसासन्तोषविग्रहैः ॥२०॥**

**तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः ।**
**त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप![3] ॥२१॥**

**तपस्सत्यदयादानेष्वर्धं ह्रसति द्वापरे ।**
**हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥२२॥**

**यशस्विनो महाशीलाः स्वाध्यायाध्ययने रताः ।**
**आढ्याः कुटुम्बिनो दृप्ता[4] वर्णाः क्षत्रद्विजोत्तमाः[5] ॥२३॥**

---

1 M Ma °तात्, 2 H V जनैः, 3 M Ma नृपाः, 4 A B G J M Ma हृष्टा 5 A B G H J V °रा

**कलौ तु धर्महेतूनां[1] तुर्यांशो[2]ऽधर्महेतुभिः।**
**एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥२४॥**

**श्रीध०** कलियुगे कः परो धर्म इति बुभुत्सया पृच्छति - **युगानीति**। ब्रूहीत्यनुषंगः[3]। आत्यंतिकप्रलयजिज्ञासया पुनः पृच्छति प्रलयकल्पयोः[4] संहारस्थितिकालयोः न चायं बहिर्मुखः प्रश्न इत्याह - कालस्येति ॥१७॥

तत्र युगधर्मास्तावदाह - **कृत** इति। तज्जनैः[5] तद्युगवर्तिभिः जनैः[5]। दानं अरागद्वेषतयाऽभयदानम्। तदेव प्रथमस्कन्धे शौचशब्देनोक्तम्। विभोः सम्पूर्णस्य धर्मस्य ॥१८॥

तदानीन्तनजनानाह - **सन्तुष्टा** इति। मैत्रा भूतमैत्रीयुक्ताः। श्रमणा आत्मज्ञानाभ्यासवन्तः[6] ॥१९॥

**त्रेतायामिति**। अनृतेन सत्यं, हिंसया दया, असन्तोषेण तपः, विग्रहेण दानमिति यथायोग्यं योज्यम्[7] ॥२०॥

**तदेति**। ब्रह्मोत्तराः ब्राह्मणादिकाः ॥२१॥

**तप** इति। हिंसाऽतुष्ट्यनृत द्वेषैरित्ययं क्रमो न विवक्षितः। धर्मस्यार्धं ह्रसति क्षीयते। अधर्मस्य लक्षणैश्चिह्नैः पादैरित्यर्थः ॥२२॥

**यशस्विन** इति। यशस्विनः कीर्तिप्रियाः। क्षत्रद्विजोत्तराः क्षत्रियब्राह्मणप्रधानाः ॥२३॥

**कलाविति**। कलौ धर्मपादानां तुर्यांशः चतुर्थांशोऽवशिष्यते ॥२४॥

**वीर०** प्रलयस्य मानं वैविध्यं, मानं विशिनष्टि - **कालस्येति**। ईश्वरस्य रूपं शरीरं तस्य कालस्य गतिं प्रवृत्तिं ब्रूहीति सम्बन्धः महात्मन इति अस्य[8] ...र्थेऽपि ...शेषणसामर्थ्यादीश्वरस्यैव विशेषणम् ॥१७॥

तत्र तावद्युगधर्मानाह - **कृत** इत्यादिना यन्नामधेयमित्यतः प्राक्तनेन। चत्वारः पादाः यस्य स चतुष्पाद्धर्मः, तज्जनैः कृतयुगजनैः धृतः प्रवर्त्तते, के पुनस्ते पादाः इत्यत आह - सत्यमिति। हे नृप! विभोः पूर्णस्य धर्मस्य ॥१८॥

कार्तयुगान् जनान् वर्णयति - **सन्तुष्टा** इति। अस्य दैवाल्लब्धेनेत्यादिः। करुणाः परदुःखनिराचिकीर्षवः भूतमैत्रीयुक्ताः, तितिक्षवः द्वन्द्वसहिष्णवः, समदृशः जातिगुणादितारतम्यानादरेण सर्वस्य श्रीभगवदात्मकत्वदर्शनाः, श्रमणाः तपश्चर्यादिप्रयुक्त-कायक्लेशयुक्ताः, ननु सर्वेप्येवं विधाश्चेन्मुक्ता एव स्युरिति न युगान्तरप्रवृत्तिरित्याशङ्क्य[9] व्यावृत्तये प्रायश इत्युक्तं एवं विधा इत्यर्थः ॥१९॥

**त्रेतायामिति**। अधर्मस्य पादैरनृतादिभिर्धर्मस्य पादानां तुर्यांशः शनैः हीयते प्रतिपादं चतुर्थांशः क्षीयते, असन्तोषेति छेदः। विग्रहः भूतविरोधः क्रमेणैतैः सत्यादीनां तुरीयांशाः हीयन्त इत्यर्थः ॥२०॥

---

1 HV पादाना 2 MMa पर्यासो 3 HV ये 4 HV कल्पयो 5-5 ABJ तत्कालीनैः 6 ABJ आत्माभ्यास 7 ABJ सख्य
8 W रस्य 9 W शङ्काव्या

तात्कालिकान् जनान् आह - **तदेति**। न लम्पटाः नातीव विषयलोलुपाः **ब्रह्मोत्तरा ब्राह्मणाधिकाः त्रयीवृद्धाः वैदिककर्मवृद्धाः** ॥२१॥

**द्वापरे युगे अधर्मस्य लक्षणैश्चिह्नैः** पादैरिति यावत्, हिंसादिभिश्चतुर्भिर्धर्मस्य पादेषु अर्धं अर्धं **ह्रसति** हिंसाऽतुष्ट्यनृतद्वेषैरिति क्रमो न विवक्षितः. अनृतेन सत्यं, हिंसया दया, असन्तोषेण तपः, विग्रहेण दानं, इति यथार्हं योज्यम् ॥२२॥

तादात्मिक जनानाह - **यशस्विन** इति। महाशीलाः महायज्ञानुष्ठानशीलाः, महाश्रोत्रियाः, क्षत्रद्विजोत्तमाः क्षत्रिय ब्राह्मणप्रधानाः ॥२३॥

**कलाविति**। एव मग्रेप्यनुक्तमप्यवगन्तव्यम्। धर्महेतूनां धर्मपादानां तुर्यांशः कलाववशिष्यते सोऽपि एधमानैः वर्धमानैः अधर्मस्य हेतुभिः पादैरहरहः क्षीयमाणोऽन्ते सावशेषं विनङ्क्ष्यति ॥२४॥

**विज०** कालस्य विष्णोर्गतिं गमनप्रकारं च ॥१७॥

सूचीकटाहन्यायेन युगधर्मस्वरूपमादौ वक्ति - **कृत** इति । तज्जनैः कृतयुगजनैः। के चत्वारः पादाः? इत्यत्राह - सत्यमिति। विभोः धर्मस्य ते पादाः ॥१८॥

तत्राश्रमिणां स्वभावमाह - **सन्तुष्टा** इति। समदृशः वस्तुयाथार्थ्यज्ञानिनः, करुणयन्तीति करुणाः । आश्रमिण इत्यनेन भार्याद्यवियोगमाह - नित्यगृहस्था इत्यर्थः ॥१९॥

तुर्यांशश्चतुर्थांशो दानलक्षणः पादो हीयते ह्रसति। पादहानौ प्रतिपक्षमाह - अधर्मेति ॥२०॥

तदा त्रेतायां यज्ञादिक्रिया तपोनिष्ठा भवन्ति, न लम्पटाः विषयरागिणो न भवन्ति। त्रैवर्गिकाः त्रिवर्गसहिताः, त्रयीवृद्धाः वेदविद्यायां विशारदा, त्रैविद्या इत्यर्थः, ब्रह्मोत्तराः ब्राह्मणोत्तराः ब्राह्मणाधिकाः ॥२१॥

अधर्मलक्षणैः अधर्मस्वरूपपादैः हिंसातुष्ट्यनृतद्वेषैः हिंसातुष्ट्यनृतलक्षणद्वैधं द्वित्वं येषां ते तथा तैः। अतुष्टियुत मनृतम् अतुष्ट्यनृतं, धर्मस्य तपस्सत्यदयादानेषु पादेष्वर्धं ह्रसति, अनेन द्वापरशब्दो निरुक्तः ॥२२॥

महाशाला इत्यनेन यज्ञकर्तारः ॥२३॥

पर्यासो निरासः, सोऽपि सत्यलक्षणोऽपि धर्मो वा ॥२४॥

**तस्मिंल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः।**
**दुर्भगा[3] भूरितर्षाश्च शूद्रदाशोत्तराः[4] प्रजाः ॥२५॥**

**सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ।**
**कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥२६॥**

---

1 A B add पादादिषु . 2-2 A B omit 3 M Ma दर्पाश्च 4 W जना

[1]प्रभवन्ति यदा [2]सत्त्वे मनो बुद्धीन्द्रियाणि च ।
तदा कृतयुगं विद्याज्ज्ञाने तपसि यद् रुचिः ॥२७॥

यदा [3]धर्मार्थकामेषु [4]भक्तिर्[5]भवति देहिनाम् ।
तदा त्रेता रजोवृ[6]त्तिरिति जानीहि बुद्धिमन् ॥२८॥

यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः ।
कर्मणां चापि काम्यानां द्वापरं तद् रजस्तमः ॥२९॥

यदा मायाऽनृतं तन्द्रा निद्रा हिंसा विषादनम् ।
[7]शोकमोहौ भयं दैन्यं स कलिस्तामसः स्मृतः ॥३०॥

यस्मात् क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः ।
कामिनो [8]वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥३१॥

दस्यूत्कृष्टा जनपदा वेदाः [9]पाषण्डदूषिताः ।
राजानश्च प्रजाभक्षाः शिश्नोदरपरा द्विजाः ॥३२॥

**श्रीध० तस्मिन्निति।** शूद्रदासोत्तराः शूद्रकैवर्तादिप्रधानाः ॥२५॥

युगानामेवम्भूतवैषम्ये कारणमाह - **सत्त्वमिति** पंचभिः ॥२६॥

**प्रभवन्तीति।** मनश्च बुद्धिश्चेंद्रियाणि च सत्त्वे यदा प्रभवन्ति अतिशयेन वर्तन्ते ॥२७॥

**यदेति।** यदा धर्मादिषु भक्तिः प्रीतिस्तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि ॥२७॥

**यदेति।** काम्यानां कर्मणां विषये यदा प्रीतिः तत्तदा रजस्तमःप्रधानं द्वापरं जानीहि [10]इति पूर्वेणानुषंगः[10] ॥२९॥

**यदेति।** विषादनं दुःखम् ॥३०॥

कलिदोषान् प्रपंचयति - **यस्मादित्यादिना।** यस्मात्कलेर्हेतोः क्षुद्रदृशो मन्दमतयः। क्षुद्रभाग्या अल्पभाग्याः। महाशना बह्वाहाराः वित्तहीना अपि कामिनश्च। स्वैरिण्यः पुंश्चल्यः असतीरसत्यः ॥३१॥

**दस्य्विति।** दस्यवः उत्कृष्टाः प्रचुरा येषु ते ॥३२॥

---

1 M Ma प्रसीदन्ति , 2 M Ma सत्वं , 3 M.Ma धर्मेषु कामेषु , H V कर्मसु कालेषु W कर्मसु काम्येषु , 4 M Ma °र्यशसि , 5 W न° , 6 M Ma °त , 7 A.B.G J.M Ma शोको मोहो , 8 M Ma वृत्ति° , 9 A B G J.M Ma °स्व° , 10- -10 H V. omit

**वीर०** जनानाह - **तस्मिन्नित्यादिना**। शुष्कवैरिणः निर्हेतुकवैरिणः, दुर्भगा भाग्यहीनाः, भूरिः तर्षा अर्थकामतृष्णा येषां ते शूद्रदाशोत्तरा जनाः शूद्रा दाशाः कैवर्तादयश्च ते उत्तराः प्रधाना येषां ते, प्रजा इत्यपि पाठः, यद्वा शुष्कवैरिण इति लिङ्गव्यत्यय आर्षः ॥२५॥

किं तर्हि युगेष्वेवंविधवैषम्ये कारणमित्यपेक्षायां ''कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे। यस्य चेतसि गोविन्दो, हृदि यस्य न केशवः'' इत्युक्तरीत्या कालानुगुणसत्त्वादिगुणोल्लासह्रासप्रयुक्तकार्यवैविध्यमेवेत्याह - **सत्त्वमिति** पञ्चभिः। दृश्यन्तां ततः किमत आह - कालसञ्चोदिता इति। ते वै सत्त्वादयो गुणाः कालेन सञ्चोदिताह्रा आत्मनि परिवर्तन्ते सोल्लासाभ्यां मनसि स्व स्व कार्यकराः प्रवर्तन्ते इत्यर्थः ॥२६॥

तत्र मनश्च तद्वश्यानि बुद्धीन्द्रियाणि च यदा सत्त्वे प्रभवन्ति अतिशयेन वर्तन्ते उद्रिक्तसत्त्वप्रधाना भवन्तीत्यर्थः। तदा कृतयुगं विद्यात् जानीयात्, यद्यतः सत्त्वोल्लासकार्ये ज्ञाने तपसि च कार्तयुगधर्मे रुचिः, कार्यविशेषेणैव कालविशेषानुमानमिति भावः ॥२७॥

**यदा कर्मस्विति**। भक्तिः अभिरुचिः तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि । बुद्धिमन्निति सम्बोधनम् ॥२८॥

**यदा लोभ** इति। मानो गर्वः स चोत्तमेष्ववमतिहेतुः चित्तविकारः कर्मणामिति विषयविषयिभावसम्बन्धे षष्ठी अनुषक्तेन भक्तिपदेन सम्बन्धः काम्यकर्मस्वभिरुचिरित्यर्थः। तत्तदा रजस्तमोवृत्तिप्रधानं द्वापरयुगं जानीहि इति पूर्वेण सम्बन्धः ॥२९॥

**यदेति**। माया कापट्यं, विषाद नं आन्तरं दुःखं, शोको बाह्यमश्रुविमोचनादिरूपं, दैन्यं कार्पण्यं, तदा तामसः केवलतमोगुणवृत्तिप्रधानः कलिः स्मृतः ॥३०॥

अथ कलिं विशिषंस्तद्दोषान् प्रपंचयति **यस्मादित्यादिना**। यस्मात् मर्त्याः वक्ष्यमाणविधाः स कलिरिति पूर्वेण सम्बन्धः। क्षुद्रदृशः मन्दमतयः, क्षुद्रभाग्या अल्पभाग्याः, असतीरसत्यः ''दुःशीला कर्कशा चण्डी नित्यं कलहकारिणी'' इत्युक्तविधाः ॥३१॥

जनपदाः देशवासिनः, दस्युभिः चोरादिभिः, उत्कृष्टाः उपद्रुताः प्रजाभक्षाः प्रजापीडनपराः, द्विजास्तु शिश्नोदर-पोषणपराः ॥३२॥

**विज०** शुष्कवैरिणः निष्प्रयोजनवैरिणः शूद्रदाशोत्तराः प्राधान्येन शूद्राणां दासाः ॥२५॥

सत्त्वादयो गुणा आत्मनि मनसि परिवर्त्तन्ते पर्यायेण वर्तन्ते ॥२६॥

कथं तत्राह - **प्रसीदतीति**। यदा सत्त्वं प्रसीदति तदा मन आदीनि प्रसन्नानि भवन्ति। लक्षणान्तरमाह ज्ञान इति। यद्यदा ज्ञानादिरुचिस्तदा कुत एतत्कल्प्यत इत्यत्राह - यदिति। मन आदिप्रसादेन ज्ञानाद्यभिरुचिर्ज्ञायत इति, यद्यस्मात्तत्तस्मात् इति ॥२७॥

देहिनां यदा, काम्यन्त इति कामाः तेषु कर्मसु यशसि च आपादनीयमिति स्नेहविशेषो भवति तदा बुद्धिमान् रजोवृत्तिः त्रेतेति जानीत जानातु ॥२८॥

यदा आत्मनि लोभादयो दृश्यन्ते तदा रजस्तमः रजस्तमोगुणवृत्तियुतं द्वापरं जानातु ॥२९॥

यदा मायादयो दृश्यन्ते यत्र स कलि स्तामसः तमोगुणवृत्तिमानित्युपलक्ष्यते। विषादनं विषण्णता ॥३०॥

यस्मात् कलिदोषात् क्षुद्रदृश अल्पज्ञानाः लोकोपद्रवकर्मज्ञाना वा। वृत्तिर्हीना जीवनोपायरहिताः। असतीरसत्यः ॥३१॥

दस्यूत्कृष्टाः दस्यूपद्रुताः "कृष-हिंसायां" इति धातुः ॥३२॥

अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः।
तपस्विनो ग्रामवासा न्यसिनोऽत्यर्थलोलुपाः ॥३३॥

ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः।
शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥३४॥

पणयिष्यन्ति वै क्षुद्राः किराटाः कूटकारिणः।
अनापद्यपि मन्यन्ते वार्तां साधुजुगुप्सिताम् ॥३५॥

पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम्।
भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥३६॥

पितृभ्रातृस्वसृज्ञातीन् हित्वा सौरतसौहृदाः।
ननान्दृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः ॥३७॥

शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः।
धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥३८॥

नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः।
निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥३९॥

वासोऽन्नपानशयनव्यवायस्नानभूषणैः।
हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजाः ॥४०॥

---

1 W छार्थ॰ 2 H V स्विय क॰ 3 M Ma ॰टान् 4 H V मासिन 5 A B G J M Ma मस्यन्ते 6-6 A B G J W पितृभ्रातृसुहृज्ज्ञातीन् 7 M Ma श्वशुरश्याल॰ W ननन्दाश्याल॰ 8 W विद्योप॰ 9 H V भय॰

**श्रीध० अव्रता इति ।** अव्रता विहिताचारशून्याः, अशौचाः शौचशून्याश्च वटवो ब्रह्मचारिणो भविष्यन्ति। कुटुंबिनश्च गृहस्थाः स्वयं भिक्षाटनपरा भविष्यन्ति, न तु भिक्षां दास्यन्ति। तपस्विनो वनस्था वनं हित्वा ग्रामवासा भविष्यन्ति। न्यासिनो यतयोऽतीवार्थलोलुपा भविष्यन्ति ॥३३॥

पुनरपि स्त्रीणां स्वभावमाह - **ह्रस्वकाया** इति। कटुकभाषिण्यः अप्रियवादिन्यः। चौर्यं च माया च कपटमुरुच साहसं यासां ताः ॥३४॥

किं च **पणयिष्यन्तीति**। किराटा वणिजः। पणयिष्यन्ति क्रयविक्रयादिव्यवहारं प्रवर्तयिष्यन्ति। किं च सर्वे जनाः अनापद्यपि जुगुप्सितां निंदितां वार्तां वृत्तिं साधु मन्यन्ते ॥३५॥

**पतिमिति**। सर्वोत्तममपि पतिं द्रव्यहीनं भृत्यास्त्यक्ष्यन्ति पतयश्च विपन्नं रोगादिभिर्व्यापाराक्षमं कौलं कुलपरम्परायातं त्यक्ष्यंति। अपयस्विनीः दुग्धदोहाः ॥३६॥

**पित्रिति।** पितृभ्रात्रादीन् हित्वा सौरतं सुरतनिमित्तं सौहृदं येषां ते। अत एव ननान्दरोऽत्र भार्याभगिन्यः श्यालाः भार्याभ्रातरस्तैः संवादो मन्त्रालोचनं येषां ते। ननन्दृ इति वा पाठः ॥३७-३९॥

**वास इति**। पिशाचसंदर्शाः पिशाचवत् दृश्याः ॥४०॥

**वीर**। वटवो ब्रह्मचर्याश्रमिणः, अव्रताः स्वाश्रमोचितव्रतहीनाः, अशौचाः शौचहीनाश्च, भविष्यन्ति। कुटुम्बिनो गृहस्थाः, भिक्षवः भिक्षाटनपरा, तपस्विनो वानप्रस्थाः ग्रामो वासो येषां ते। ग्रामशब्दोऽधिकरणघञ्प्रत्ययान्तः, न्यासिनः तुर्याश्रमिणः, अर्थलोलुपाः वित्ताभिलाषिण इत्यर्थः ॥३३॥

पुनरपि स्त्रीणां स्वभावमाह - ह्रस्वकायाः अल्पपरिमाणाः, भूर्यण्यपत्यानि यासां ताः। त्यक्तलज्जाः कटुकभाषिण्यः अप्रियवादिन्यः चौर्यं च माया कापट्यं च उरु साहसश्चेति द्वन्द्वः ततो मत्वर्थीयोऽच् ॥३४॥

किराटाः वणिजः संहत्य व्यापारिणः पणयिष्यन्ति क्रयविक्रयादिव्यापारं प्रवर्तयिष्यन्ति क्षुद्राः मति व्यत्यासे क्षुद्रचेष्टा भवन्ति किञ्च अनापद्यपि जुगुप्सितां निन्दितां वृत्तिं साधु मन्यन्ते ॥३५॥

अखिलोत्तमं सर्वोत्तममपि पतिं स्वामिनं भृत्यास्त्यक्ष्यन्ति तथा पतयोऽपि भृत्यं विपन्नं रोगादिभिर्व्यापाराक्षमं त्यक्ष्यन्ति, कौलं कुलपरम्परागतं महाभागवतं धर्मं गाश्चापयस्विनीः दुग्धदोहाः त्यक्ष्यन्ति इति सम्बन्धः ॥३६॥

1 A B J मस्यन्ते, 2-2 A B J omit, 3-3 H V omit 4-4 ABJ च सदृशा। 5 T W यन्ति

**पिच्रिति**। सौरतं सुरतनिमित्तं सौहृदं येषां ते अत एव ननान्दरोऽत्र भार्याभगिन्यः श्याला भार्याभ्रातरश्च तैः संवादो मन्त्रालोचनं येषां ते कुतः? स्त्रैणाः स्त्रीवश्याः ॥३७॥

**शूद्रा** इति। तपोवेषेण उपजीवन्तीति तथा प्रतिग्रहीष्यन्ति तथा स्वयमधर्मज्ञा अपि उत्तमासनमधिरुह्य धर्मं वक्ष्यन्ति उपदेक्ष्यन्ति [2]इत्यर्थः। अत्राव्रता वटव इत्यनेनाश्रमिणां कलिकृतदोषसंकीर्तनं, सिंहावलोकनन्यायेन ह्रस्वकाया इति तत्कृतस्त्रीदोषकथनं, तत एकेन तत्कृतवणिग्दोषकीर्तनं, ततो द्वाभ्यां चातुर्वर्ण्यतद्दोषकथनं, तत एकेन शूद्रदोषकीर्तनं इति विभागः ॥३८॥

अथ चातुर्वर्ण्यासाधारणानतत्कृतदोषानाह - **नित्यमिति** षड्भिः। उद्विग्नमनसः चञ्चलमानसाः भीतमानसा वा निरन्नेऽन्नरहिते दुर्भिक्षेण करेण स्वामिग्राह्यभागेन च कर्शिताः पीडिताः अनावृष्टिभयेनाप्यातुराः दुःखिताः ॥३९॥

**वास** इति। व्यवायो मैथुनं [3]वास आदि[3]भिर्हीनाः पिशाचसन्दर्शाः पिशाचसदृश्यः ॥४०॥

**विज०** वटवो ब्रह्मचारिणः, अव्रताः महाव्रतादिव्रतहीनाः अग्निकार्यादिव्रतहीना वा ॥३३॥

भूर्यपत्याः बहुसन्तानाः ॥३४॥

क्षुद्राः दरिद्राः [4]किराटान् परिणतफलानि, पणयिष्यन्ति विक्रेष्यन्ति, कूटकारिणः धातुर्वादकरणशीलाः, वार्तां कुसीदादि वैश्यवृत्तिम् ॥३५॥

अखिलोत्तमं, कुलादिनेति शेषः। कौलं कुले विद्यमानं, विपन्नं आपदं प्राप्तं, भृत्यं पतयः त्यक्ष्यन्ति, अपयस्विनीः क्षीररहिता गाश्च, त्यक्ष्यन्तीति शेषः ॥३६॥

सौरते सुरतमन्त्रविषये, सौहृदं प्रेम येषां ते तथा। श्वशुरश्यालाभ्यां सह सम्यक् वादो येषां ते तथा ॥३७-३९॥

पिशाचवत्सन्दर्शो दर्शनं येषां तथा ॥४०॥

**कलौ [5]काकणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः।**
**त्यक्ष्यन्ति [6]हि प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥४१॥**

**न [7]रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि।**
**[8]पुत्रान् [9]सर्वार्थकुशलान् क्षुद्राः शिश्नोदरम्भराः ॥४२॥**

1 A,B नन॰. 2 TW omit इत्यर्थ. 3-3 TW omit. 4 AB ॰टा. 5 A B G J M Ma ॰कि॰ 6 A B G J च 7 H V च रक्षन्ति 8 M Ma पुत्री॰ 9 H V भार्यां च कुलजां . M Ma भार्यां च कुलजां . W भार्यां च कुशला

कलौ न राजन्! जगतां परं गुरुं त्रिलोकनाथाऽऽनत पादपङ्कजम् ।
प्रायेण मर्त्या भगवन्तमच्युतं यक्ष्यन्ति पाषण्डविभिन्नचेतसः ॥४३॥

यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन् वा विवशो गृणन् पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥४४॥

पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान् ।
सर्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥४५॥

श्रुतः सङ्कीर्तितो ध्यातः पूजितश्चादृतोऽपि वा ।
नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥४६॥

यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम् ।
एवमात्मगतो विष्णुर्योगिना मशुभाशयम् ॥४७॥

विद्या तपःप्राणनिरोधमैत्री तीर्थाभिषेकव्रतदानजप्यैः ।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥४८॥

**श्रीध० कलाविति**। कार्कणिके विंशतिवराटिकामात्रेऽप्यर्थे विषयभूते। विगृह्य वैरं कृत्वा ॥४१,४२॥

महान्तमनर्थं अन्याय्यश्चाह द्वाभ्यां, **कलाविति**। त्रिलोकनाथैरानतं नमस्कृतं पादपङ्कजं पादपद्मं यस्य तम्। न यक्ष्यन्ति न पूजयिष्यन्ति। पाषण्डैर्विभिन्नमन्यथा कृतं चेतो येषां ते ॥४३॥

**यदिति**। विवशोऽपि गृणन् सन्। विमुक्ता कर्मरूपा अर्गला प्रतिबन्धा यस्य स ॥४४॥

तदेवं कलिदोषान् प्रपंच्य प्रस्तुतं तन्निरसनोपायमाह - **पुंसामिति** षड्भि । द्रव्यदेशात्मसम्भवान् द्रव्यं अन्नादि, देशः कीकटादि आत्मशब्देन इन्द्रियाणि तैः संभवो येषां तान्। चित्तस्थश्चिन्ते स्फुरति ॥४५,४६॥

अयमेवोपायो नान्य इति सदृष्टान्तमाह **यथेति**। धातुजं ताम्रादिसंश्लेषाज्जातं, हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हन्ति हरति, न तु तोयादि, एवं योगिनामपि विष्णुरेव, न तु योगादिकर्मित्यर्थः ॥४७॥

एतदेव विवृणोति। **विद्येति**। विद्या नानादेवतोपासना ॥४८॥

---

1 M Ma "नाथ नत" 2 A G J M Ma "ग्र" 3 H V न 4 M Ma मर्त्य 5 ABJ कि. 6 A B J omit अन्याय्य 7 A B J omit पादपद्म 8 A B J पाख 9-9 A B J द्रव्यदेशात्मभि 10 A B J "यज्जात 11 H V हरिः 12 H V omit हरति 13 ABJ omit नाना

**वीर० कलाविति।** काकणिके वराटिकामात्रेऽप्यर्थे विषये विगृह्य विरोधं कृत्वाऽतः त्यक्तं सौहृदं यैः ते ॥४१॥

**नेति।** स्थविरौ वृद्धौ "वृद्धौ च मातापितरौ" इत्यादि शास्त्रार्थोल्लङ्घनं सूचितं सर्वार्थेषु कुशलानपि पुत्रान् न रक्षिष्यन्ति अपि तु तेभ्यो विभज्य वर्तिष्यन्ते इति भावः ॥४२॥

महान्तमनर्थमाह - **कलौ नेति द्वाभ्याम्।** हे राजन्! त्रैलोक्यनाथेन ब्रह्मणा आनतं नमस्कृतं पादपद्मं यस्य तं अच्युतं न यक्ष्यन्ति नाराधयिष्यन्ति। तत्र हेतुः पाषण्डैर्विभिन्नमन्यथाकृतं चेतो येषां ते ॥४३॥

**यन्नामधेयमिति।** म्रियमाणाद्यन्यतमः पुमान् यस्य भगवतो नामधेयं गृणन् कीर्तयन् विमुक्ताः कर्मरूपा अर्गलाः प्रतिबन्धा यस्य सः, उत्तमां गतिं मुक्तिं प्राप्नोति। तं भगवन्तं न यक्ष्यन्ति अत्रातुरो रोगादिपीडितः पतच्छब्देन पतितो विवक्षितः स्खलच्छब्देन स्ववर्णाश्रमाचारविधुरः तत्र म्रियमाणो मरणानन्तरमेवोत्तमां गतिं प्राप्नोति इतरेत्वाप्रयाणानुवृत्तेनेति भावः। यद्वा, आतुराद्यन्यतमोऽपि म्रियमाणो गृणन् प्राप्नोतीति सम्बन्धः ॥४४॥

तदेवं कलिदोषान् प्रपञ्च्य तन्निरसनोपायमाह - **पुंसामिति** षड्भिः। द्रव्यदेशात्मभिः सम्भवो येषां तान्, तत्र द्रव्यदेशौ निषिद्धौ आत्मा विषयप्रवणं मनः, चित्तस्थः ध्यानेन चित्ते स्थिरीकृतः, हरति क्षपयति ॥४५॥

कथं चित्तस्थो भवतीत्यत आह **श्रुत** इति। श्रवणादिविषयः सन् हृत्स्थो भवति ततो जन्मायुतस्यापि अशुभं जन्मायुतार्जितमपि पापमित्यर्थः। धुनोति नाशयति ॥४६॥

तदेव दृष्टान्तेनोपपादयति - **यथेति।** धातुजं ताम्रादिसंश्लेषजातं हेम्नो दुर्वर्णं तत्र स्थितो वह्निर्हरति, एवं योगिना मात्मगतो मनसि स्थितो विष्णुरशुभाशयं हन्ति आशयो मनः तत्स्थं मालिन्यं हन्तीत्यर्थः ॥४७॥

इतोऽन्य उपायो नास्ति इत्याह **विद्येति।** यथा त्रिविधपरिच्छेदरहितेऽप्युपासकानुग्रहार्थं हृदिस्थे सति अन्तरात्मा मनः अत्यन्तशुद्धिं लभते। तथा विद्यादिभिर्न लभते, तत्र विद्या शास्त्राध्ययनं, तपोऽनशनादि वर्णाश्रमधर्मो वा, प्राणनिरोधः प्राणजयः, मैत्री अहिंसा, व्रतं एकादशीव्रतादि, जप्यं मन्त्रजपः ॥४८॥

**विज०** विगृह्य विग्रहं वैरं कृत्वा, काकिणिके अर्थे अत्यल्पधनविषये ॥४१,४२॥

पाषण्डशास्त्रेणाद्वैतविषयेण विभिन्नचेतसः व्यामोहितचित्ताः ॥४३॥

किम्माहात्म्योऽयं भगवान् येन तद्यजनं सप्रयोजनं स्यादिति तत्राह - **यन्नामधेयमिति।** विमुक्तं कर्मलक्षणमर्गलं तालकीलं यस्य स तथा, विध्वस्तकर्मबन्धन इत्यर्थः ॥४४॥

केनोपायेनेत्यादिना पृष्टं परिहर्तुमाह - **पुंसामित्यादिना।** द्रव्यदेशात्मसम्भवान् द्रव्यदेशस्वभावोद्भूतान् किमपि नावशिष्यतेऽतः सर्वमित्युक्तम् ॥४५॥

1 AB °कि 2 AB °ल्लङ्घ 3 TW पङ्कजं 4 TW omit मुक्तिं 5 AB दुरा° 6-6 TW omit 7-7 AB धातुस्ताम्रादि तत्संश्लेष 8 MMa °ख

चित्तस्थितिभावे नानासाधनमाह - **श्रुत इत्यादिना**। अशुभं इत्युपलक्षणं प्रथमकर्मभोगायतनप्रारम्भप्रभृतिसम्पादिताशुभमित्यर्थः ॥४६॥

मन्दाधिकारिणः क्षिप्रप्रवृत्त्यर्थं सदृष्टान्तमाह - **यथेति**। शास्त्रोक्ता अष्टादशदोषा दुर्वर्णमित्यनेन गृह्यन्ते। धातुजं गैरिकसमुद्भवं वा। आत्मगतः चित्तगतः, अशुभाशयं पापराशिं पापसंपृक्तजडमनो वा ॥४७॥

विद्यादिनाऽन्तःकरणशुद्ध्या श्रेयः स्यात्किंचित्तस्थेन हरिणेति तत्राह - **विद्येत्यादिना**। प्राणनिरोधः प्राणायामः, अन्तरात्मा अन्तःकरणं, हृदिस्थे सति ॥४८॥

**तस्मात् सर्वात्मना राजन्! हृदिस्थं कुरु केशवम् ।**
**म्रियमाणो ह्यवहित स्ततो याति परां गतिम् ॥४९॥**

**म्रियमाणैरभिध्येयो भगवान् परमेश्वरः ।**
**आत्मभावं नयत्यङ्ग सर्वात्मा सर्वसम्भवः ॥५०॥**

**कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।**
**कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥५१॥**

**कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।**
**द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥५२॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्या अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्याया पारमहंस्यां संहितायां
द्वादशस्कन्धे तृतीयोऽध्यायः ॥३॥

**श्रीध० म्रियमाणैरिति** आत्मभावं स्वस्वरूपम् ॥४९-५०॥

इदानीं कलिं स्तौति द्वाभ्याम् **कलेर्दोषनिधे राजन्निति** ॥५१॥

**कृत इति**। तत्सर्वं हरिकीर्तनादेव कलौ भवति नान्यस्मिन्युगे। उक्तं च' ध्यायन् कृते, यजन्यज्ञै त्रेतायां, द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्" (विष्णु. पु.6.2.17) इति ॥५२॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकाया
व्याख्यायां तृतीयोऽध्यायः ॥३॥

---

1 HV 'णोऽव्यव' 2 ABGJMMa यामि 3 HV ध्यात 4 HV श्रीगीता 5 ABGJW मम्बय 6 ABGJ मत्र 7-7 HV omit

**वीर०** उपायोपदेशमुपसंहरति - **तस्मादिति**। हि यस्मात्ततो हृद्यवस्थापनादवहितचित्तो म्रियमाणः परां गतिं याति तस्मात्त्वं हृदिस्थं केशवं कुरु इत्यर्थः ॥४९॥

इममेवार्थं दृढीकर्तुं पुनरप्याह - **म्रियमाण**इति। आत्मभाव मात्मस्वभावं साम्यापत्तिमित्यर्थः। "मद्भाव भावमापन्नः" इत्यादि शास्त्रैकार्थ्यात् तत्र हि प्रथमभावशब्दः स्वभाववाची अन्यथा द्वितीयभावशब्दानन्वयात्। अङ्गेति सम्बोधनद्योतकम्। ब्रह्मभावं नयतीत्यत्र हेतुत्वेन तं विशिनष्टि सर्वात्मा सर्वेषामात्मनामात्मा आत्मनो हि शरीरं निरतशयप्रियमतस्तद्गतमनर्थं दूरीकरोतीति भावः। अनेन प्राप्यत्वोपयुक्तनिरतिशयपुरुषार्थरूपत्वं चोक्तम्। आत्मा हि निरतिशयप्रीतिविषयः प्रापकत्वोपयुक्तं सौलभ्यमाह - सर्वसंश्रय इति। आत्मत्वादेव सर्वैः संश्रीयते इति संश्रयः स्वात्मा हि स्वस्मिन्नेव सुलभ इति भावः ॥५०॥

अथ बहुदोषाकरोऽयं कलिः सर्वथा भगवत्प्राप्तिं निरुन्ध्यात् इत्यभिप्रायमालक्ष्याह **कलेरिति**। दोषनिधेरपि कलेः कश्चिदनितरसाधारणो महान् गुणोऽस्ति, कोऽसौ? भगवतः कीर्तनादेव मुक्तबन्धः निरस्तप्राप्तिप्रतिबन्धकः परं परमपुरुषं व्रजेदित्यर्थः ॥५१॥

कृतादिषु ध्यानयागार्चनानां यत्फलं तत्सर्वं कलौ हरिकीर्तनादेव भवति कीर्तनं त्वत्र आप्रयाणानुवृत्तमित्यवगन्तव्यम्॥५२॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां तृतीयोऽध्यायः ॥ ३ ॥

**विज०** उपसंहरति - **तस्मादिति** ॥४९॥

आत्मभावं आत्मनि भक्तिं नयति प्रापयति सर्वमादत्त इति सर्वात्मा। सर्वस्य सम्भवो यस्मात्स सर्वसम्भवः ॥५०॥

कलिः केवलं न दोषाकर एवापि तु गुणापादकोऽपि भवति औषधोपचितद्रव्यवदित्याह **कलेरिति** ॥५१॥

ध्यानादिप्रधानसाधनमन्तरेण कीर्तनमात्रेण संसारबन्धनिर्मोकः कथमित्याशङ्क्य तत्तद्युगेषु भगवत्क्लृप्तत्वेन भगवत्क्लृप्तत्वेन युक्तमित्यभिप्रेत्याह - **कृत** इति। कृते यत्त त्स्यादित्यर्थः ॥५२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
द्वादशस्कन्धे तृतीयोऽध्यायः ॥३॥

**(श्रीविजयध्वजतीर्थरीत्या तृतीयोऽध्यायः न समाप्तः)**

# चतुर्थोऽध्यायः

**श्रीशुक उवाच**

कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप ।
कथितो युगमानं च शृणु कल्पलयावपि ॥१॥

चतुर्युगसहस्रं तु[2] ब्रह्मणो दिनमुच्यते ।
स कल्पो यत्र मनवः चतुर्दश विशांपते ॥२॥

[3]तदन्ते प्रलयस्तावान् ब्राह्मी रात्रिरुदाहृता ।
त्रयो लोका इमे यत्र[4] कल्पन्ते प्रलयाय हि ॥३॥

एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक्[5] ।
शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चात्मभूः ॥४॥

द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः[6] ।
तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय हि ॥५॥

एष प्राकृतिको राजन् प्रलयो यत्र लीयते ।
[7]अण्डकोशस्तु सङ्घातो विघात उपसादिते ॥६॥

पर्जन्यः[8] शतवर्षाणि भूमौ[9] राजन् न वर्षति ।
तदा निरन्ने[10] ह्यन्योन्यं भक्षमाणाः[11] क्षुधार्दिताः ॥७॥

क्षयं यास्यन्ति शनकैः[12] कालेनोपद्रुताः प्रजाः ।
सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः ।
रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्थे तु चतुर्थोक्ता लया नैमित्तिकादय । तत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥

---

1 M Ma °वच . 2 A B G J च 3 MMa यद° 4 A B G J तत्र 5 H V °ट् 6 A B G J वै । . 7 A B G ··· °आ° 8 W °न्यः के

9 H V तावत्र° . 10 H V °रन्नाद्य° W °न्नैर° 11 H V W भक्ष्य° 12 H V °तत्कालोप°

**कलिदोषनिवर्तकं** हरिनामसंकीर्तनादिकं, स एव च **कलौ** परमो **धर्म** इति **प्रश्नद्वयस्योत्तरमुक्तम्। यच्चान्यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति**, तदिदानीं तृतीयस्कन्धोक्तकालमानानुवादपूर्वकं निरूपयति - **काल इति**। "स कालः परमाणुर्वै यो **भुंक्ते परमाणुताम्**" (भाग.3-11-4) इत्यादिना कालः कथितः। **"चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्। संख्यातानि सहस्राणि द्विगुणानि** शतानि च"। (भाग.3-11-19) इति युगमानं च कथितम् ॥१॥

तत्र कल्पमानमाह - **चतुर्युगेति**। यत्र चतुर्दश मनवः क्रमेण भवन्ति ॥२॥

प्रलयस्तु चतुर्विधः नैमित्तिकः, प्राकृतिकः, आत्यन्तिको, नित्यश्चेति। तत्र नैमित्तिकं प्रलयं मानसहितमाह - **तदन्त इति द्वाभ्याम्**। चतुर्दशमनवः यत्र वर्तन्ते तावान् चतुर्युगसहस्रप्रमाणः। सैव ब्राह्मी रात्रिः ॥३॥

**एष इति**। नैमित्तिकत्वं दर्शयति। यत्र यदा विश्वसृट् श्रीनारायणो विश्वं आत्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते। आत्मभूः ब्रह्मा च तस्मिन् शेते। तयोरभेदविवक्षया वा ब्रह्मण एवानन्तासनत्वमुक्तम्। ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिक इत्यर्थः ॥४॥

प्राकृतिकं प्रलयमाह द्वाभ्याम् - **द्विपरार्ध इति**। द्विपरार्धे तु ब्रह्मण आयुषि अतिक्रान्ते सति सप्तप्रकृतयो महदहंकारपञ्च तन्मात्राणि ॥५॥

**एष इति**। सप्तानां महदादिकार्यभूतः प्रकृतीनां तत्कार्यब्रह्माण्डस्य च प्रलयात् प्राकृतिक इत्यर्थः। विघाते विघातकारणे उपसादिते कालेन प्रापिते सति ॥६॥

तदेवाह - **पर्जन्य** इत्यादिना, बुद्धीन्द्रियार्थरूपेणेत्यतः प्राक्तनेन ग्रन्थेन ॥७॥

**सामुद्रमिति**। सामुद्रादिकं सर्वं रसं रविः पिबते, आकर्षति न पुनः प्रयच्छत्येव ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तत्तृतीयस्कन्धोक्तकालस्वरूपानुवादपूर्वकं निरूपयितुमारभते - **काल इति**। ते तुभ्यं, कथित इति सम्बन्धः। परमाणुः आदिर्यस्य, द्विपरार्द्धमवधिरुत्तरावधिर्यस्य सः कालः कथितः। "स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्" (भाग.३-११-४) इत्यादिना कथितः तथा "चत्वारि त्रीणि, द्वे चैकं कृतादिषु यथाक्रमम्। सङ्ख्यातानि

---

1-1 A B J omit. 2 A B J °वे. 3 H V omit वा. 4-4 A B J omit. 5 H V omit प्र. 6-6 A B J omit. 7-7 A B J omit.

**सहस्राणि द्विगुणानि शतानि च" इति (भाग 3.11.19) युगमानं च कथितं इत्यर्थः। इदानीं कलालयावपि शृणु तयोर्मानं शृणु इत्यर्थः ॥१॥**

अत्र तावत् कल्पमानमाह - **चतुर्युगसहस्रमिति**। कल्पो द्विविधः, दैनन्दिनो महांश्चेति। तत्राद्यो **ब्रह्मणो दिनात्मक एव कल्प इत्यभिधीयते**, तं विशिनष्टि - हे विशाम्पते। यत्र कल्पे चतुर्दशमनवः क्रमेण भवन्ति, मन्वन्तरमानं तु **"स्वं स्वं कालं मनुर्भुङ्क्ते युगानामेकसप्ततिम्"** (भाग.3.11.24) इति तृतीयस्कन्ध एवोक्तमप्यनुसन्धेयम् इति ॥२॥

प्रलयस्तु चतुर्विधः। नैमित्तिकः, प्राकृतिकः, आत्यन्तिको, नित्यश्चेति। तत्र नैमित्तिकं प्रलयं निरूपयति - **तदन्ते इति द्वाभ्याम्**। तदन्ते चतुर्युगसहस्रान्ते प्रलयस्तावान् चतुर्युगसहस्रपरिमाणः सैव ब्राह्मी रात्रिः, दिनान्ते चतुर्युगसहस्रान्ते निवृत्त **जगद्व्यापारः चतुर्मुखश्शेते स नैमित्तिकः प्रलय इत्यर्थः**। तदेवाह-त्रय इति। **यत्र रात्रौ इमे भूरादयस्त्रयो लोकाः प्रलयाय कल्पन्ते प्रलीना भवन्तीत्यर्थः ॥३॥**

**एष नैमित्तिकः** प्रलयः प्रोक्तः। तत्र नैमित्तिकशब्दस्य प्रवृत्तौ निमित्तमाह - **यत्र विश्वसृगिति**। विश्वसृजः शयननिमित्तं कृत्वा तस्य प्रलयस्य नैमित्तिकत्वम्, कथम्भूतः शेते? इत्यत्राह - अनन्तः शेषः आसनं शय्या यस्य सः। विश्वमात्मसात्कृत्य आत्मगतं कृत्वा स्वस्मिन्नुपसंहृत्येति यावत्। अत्र विश्वसृगात्मभूशब्दयोः चतुर्मुखपरत्वेऽपि तस्यानन्तशयत्वं प्रासादखट्वापर्यङ्कन्यायादुपपद्यते 'कृष्ण नाभिहृदोद्भूतकमलोदरशायन' इत्यनन्तशयनभगवन्नाभिपद्मशायित्वं ब्रह्मणः स्मर्यते इति ॥४॥

एवं दैनन्दिनकल्पः नैमित्तिकप्रलयश्च निरूपितः। अथ महाकल्पं प्राकृतप्रलयं च निरूपयति - **द्विपरार्ध इति**। द्विपरार्द्ध इत्यनेनायमेव महाकल्प इति सूचितम्। सप्तप्रकृतयः महदहङ्कारौ भूतपञ्चकं चेति सप्त। अयं सप्तप्रकृतीनां लयात्मकत्वात् प्राकृतिको लय इत्युच्यत इत्यर्थः ॥५॥

प्रकृतयः सप्त कथं लीयन्ते इत्यत्र तत्प्रकारं वक्तुं प्रस्तौति - यत्र लीयते इत्यादिना। विघाते विनाशनिमित्ते उपसादिते उपगते सति सङ्घातः प्रकृतिसप्तकसङ्घातः परिणामरूपोऽण्डकोशः यत्र प्राकृतिके प्रलये लीयते ॥६॥

कोऽसौ विघात इत्यत आह - **पर्जन्य इति**। अवर्षतीति समस्यन्त शतवर्षाणि पर्जन्ये अवर्षति सतीत्यर्थः। निरन्नैरिति लिङ्गव्यत्यय आर्षः। अन्योन्यं भक्ष्यमाणाः प्रजा एवमुपद्रुताः कालेन शनैः क्षयं यास्यन्तीति सम्बन्धः। सामुद्रमिति समुद्रादिषु भवं रसं जलं, साम्वर्तको रविः प्रलयादित्यः ॥७-८॥

1 W omits अपि. 2 W omits शेते

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवत्कटाक्षप्रेक्षणाक्षिप्तकल्पप्रलयप्रकारं तत्स्वरूपं भागवतप्रवृत्तिं च कथयत्यस्मिन्नध्याये तत्रादावुक्तमनूद्य वक्तव्यं प्रतिविधत्ते - **काल** इति कथितस्तृतीयस्कन्धे। अथ कल्पप्रलययोरपि कालाधीनत्वेन तत्स्वरूपश्रवणानन्तरम् ॥१॥

यत्र दिने ॥२॥

यस्य दिनस्यान्ते ब्राह्मी ब्रह्मसम्बन्धिनी यत्र रात्री ॥३॥

यत्र प्रलये आत्मसात्कृत्य आत्मनि निधाय ॥४॥

सप्त प्रकृतयः महादहङ्कारौ आकाशादिपञ्चभूतानि ॥५॥

यत्र प्रकृति प्रलये सङ्घातः चतुर्विंशतितत्त्वसमूहात्मकः, प्रलयप्रकारमाह - विघात इति। **विघाते** प्रलये उपसादिते आसन्ने सति ॥६-७॥

"कल द्रवणे" इति धातोः कालेन द्रवणहेतुना सामुद्रं समुद्रस्य विद्यमानं रसं जलं, दैहिकं देहस्य विद्यमानं रसं रेतो लक्षणं वीर्यं, भूमे रसं तिक्तादिलक्षणम् ॥८॥

**ततः सांवर्तको[1] वह्निः सङ्कर्षणमुखोत्थितः[2] ।**
**द[3]ग्ध्यनिलवेगोत्थः शून्यान् भूविवरानथ ॥९॥**

**उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः ।**
**दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत् ॥१०॥**

**ततः प्रचण्डपवनो वर्षाणामधिकं शतम् ।**
**परः[4] सांवर्तको वाति धूम्रं खं रजसाऽऽवृतम् ॥११॥**

**ततो मेघकुलान्यङ्ग चित्रवर्णान्यनेकशः ।**
**शत[5]वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः[6] ॥१२॥**

**तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम् ।**
**तदा भूमेर्गन्धगुणं ग्रसन्त्याप उदप्लुवे[7] ॥१३॥**

---

1 ABGHJV स॰. 2 HV ङ्कृत. 3 W चैशू॰. 4 HV स॰ 5 ABGJ शत॰ 6 MMa ॰स्वरै 7 HV उदा॰ . MMa उप॰

ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते ।
अपां[1] रसमथो तेजस्ता लीयन्तेऽथ नीरसाः ॥१४॥

ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा ।
लीयेते[2] चानिले तेजो वायोः खं ग्रसते गुणम् ॥१५॥

स वै विशति खं राजंस्ततश्च नभसो गुणम् ।
शब्दं ग्रसति भूतादिर्नभस्तमनुलीयते ॥१६॥

**श्रीध० तत** इति। अनिलवेगोत्थो वायुवेगोद्भूतः। अनिलवेगो वा इति पाठे अनिलेन वेगो यस्य स। वाः रविणा रश्मिभिः पीतमुदकं च दहतीत्यर्थः। अनिलवेगो वै इति तु पाठः सुगम। भूविवरान् पातालादीन्! शून्यान् रविणा दैहिकरसाकर्षणात् प्राणिरहितान्। शिखाभिर्ज्वालाभिः ॥९॥

**उपरीति**। शिखाभिर्ज्वालाभिः ॥१०॥

**तत** इति। किञ्चिदधिकं वर्षाणां शतम्। सांवर्तक[3] प्रलयहेतुक[4] परो वायुर्वाति तदा रजसाऽऽवृतं खं धूम्रं भवति ॥११॥

**तत इति**। रभसस्वनैः तीव्रगर्जितैः ॥१२॥

**तत इति**। ब्रह्माण्डविवरान्तरं[5] ब्रह्माण्डविवरमध्यगतं[5] विश्वमेकोदकमेकार्णवोदकव्याप्तं ॥१२॥ भवति[6] उदाप्लवे उदकेनाऽप्लाविते सति ॥१३॥

**ग्रस्तेति**। प्रलयत्वाय अभावाय ॥१४-१५॥

**स वै इति**। भूतादिः तामसोऽहङ्कार ॥१६॥

**वीर० दुस्सहैः** रश्मिभिः पिबते न त्वधुनैव पीत्वा विमुञ्चतीत्यर्थ[7]। **तत इति**। अनिलवेगोत्थ वायुवेगोत्थ प्रलयाग्निः। "अनिलवेगो वारिति" पाठे वार्जलं रविणा पीतावशिष्टोदकं च दहतीत्यर्थ। वै शब्दपाठस्तु सुगमः। अनिलेन वेगो यस्य स इति पाठद्वयेप्यर्थः। ततः शून्यान् निर्लोकान्[8] भूविवरान् पातालादीनि च दहतीति सम्बन्ध। इत्थमुपर्यध समन्ताच्च वह्निसूर्ययो शिखाभिः[9] ज्वालाभिः दह्यमानं ब्रह्माण्डं दग्धगोमयपिण्डवत् विभाति वर्तिष्यते। तत इति वर्षाणामधिकं शतं किञ्चिदधिकं वर्षाणां शतमित्यर्थः। प्रचण्डः अतिनिष्ठुरः[10] ॥९-११॥

1 H V रसं हरेते'. 2 H V 'यतेऽथा'. 3 B H J V स'. 4 H V omit प्रलयहेतुक 5-5 A B J omit 6 A B J S प्लवे. 7 W. omits ।
8 A B त्रिलोकान्. 9 W omits ज्वालाभि 10 W omits अति

परः बलीयान् संवर्त्तकः [1]प्रलयवायुर्वाति तदा रजसावृतं खमाकाशं धूम्रं भविष्यति। [2]ततो मेघकुलानीति।[2] अत्र हे राजन्! [3]रभसस्वनैः [3]तीव्रगर्जितैः, नदन्ति गर्जितानि करिष्यन्ति चेत्यर्थः। व्यत्ययेन तृतीया। [4]ततो ब्रह्माण्डविवरमध्यगतं विश्वं एकोदकं एकार्णवोदकव्याप्तं भविष्यति। तदेत्थम् उदप्लवे उदकप्लवरूपे सति जगति भूमेर्गन्धगुणमापो ग्रसन्ते (न्ति) सोऽप्सु लीयते इत्यर्थः। ग्रस्तः गन्धो यस्याः सा पृथिवी प्रलयत्वाय अभावाय कल्पते। अपामिति अथोऽनन्तरमपां रसगुणं तेजो ग्रसतीति वचनविपरिणामेन अनुषक्तेन सम्बन्धः। अथ नीरसास्ता आपः लीयन्ते तेजसीति विभक्तिविपरिणामेन आवृत्तेन सम्बन्धः ॥१२-१४॥

ततस्तेजसो रूपं वायुर्ग्रसते, तदा तद्रहितं [5]रूपरहितं तेजः[5] वायौ लीयत इत्युत्तरेण सम्बन्धः। वायोर्गुणं स्पर्शं खमाकाशो ग्रसते ॥१५॥

स वै स्पर्शरहितो वायुः। हे राजन्! खमाकाशं विशति तत्र लीयत इत्यर्थः। ततश्च नभसो गुणं शब्दं भूतादिस्तामसाहङ्कारो ग्रसति। तदनु स्वगुणग्रसनानन्तरं तस्मिन् भूतादौ लीयत इत्यर्थः ॥१६॥

**विज० साम्वर्तकः**। प्रलयकालीनः ॥९॥

सत्त्वशून्यान् प्राणिरहितान् भूविवरान् पातालादीन् ॥१०-११॥

रजसावृतं खं धूम्रं... न्तं चित्रवर्णं न नीलादिनानाविधानि ॥१२॥

**ब्रह्माण्डविवरान्तरं** ब्रह्माण्डबिलविशेषं ब्रह्माण्डबिलोदरं वा। एकोदकं उदकात्मकं भवति ॥१३॥

पञ्चभूतगुणलयप्रकारमाह - **तदेति**।

उपप्लवे प्रलये ॥१४॥

नीरसा आपः तद्रहितं रूपरहितम् ॥१५॥

तेजो वायौ लीयते स वायुः खं विशति तदनु शब्दगुणलयानन्तरं तैजसानीन्द्रियाणि तैजसाहङ्कारे लीयन्ते इति शेषः ॥१६॥

**[6]तैजसानीन्द्रियाण्यङ्ग [7]देवान् [8]वैकारिको गुणैः।**
**महान् ग्रसत्यहङ्कारं गुणाः सत्त्वादयश्च तम् ॥१७॥**

---

1 W omits प्रलय 2-2 W omits 3-3 W omits 4 AB तदा 5-5 AB omit 6 ABGJW °साक्षिन्द्रि 7 MMa °वा वै 8 HV °कम् MMa °क

**ग्रसतेऽव्याकृतं बीजं गुणान् कालेन चोदितम् ।**
**न यस्य कालावयवैः परिणामादयो गुणाः ॥१८॥**

**अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम् ॥१९॥**

**न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी ।**
**न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः ॥२०॥**

**श्रीध० तैजसानीति** । गुणै वृत्तिभि सह ॥१७॥

**ग्रसते** इति । अव्याकृतं प्रधानम् ।

तस्य तु लयो नास्तीत्याह । - **न तस्येति** । कालावयवै अहोरात्रादिभि । गुणा षड्भावविकारा । परिणामो विपरिणाम ॥१८॥

**अनादीति** । अव्यक्तमस्तित्वव्यक्तिविकारशून्यम् नित्य सर्वदा एकरूप ह्रासवृद्धिरहितमित्यर्थ । अव्ययमपक्षयशून्यम् । सर्वत्र हेतु - कारणमिति ॥१९॥

किञ्च वागादिगोचरस्य सविशेषस्य विकारा भवन्ति, इद तु न तथेत्याह - **न यत्रेति** द्वाभ्याम् । लोककल्पो लोकरूप , सन्निवेशो रचनाविशेषो नास्ति ॥२०॥

**वीर० तैजसश्चेति** । चशब्द साहित्यद्योतक । राजसाहङ्कारसहित वैकारिक सात्त्विकाहङ्कार गुणैर्वृत्तिभिस्सह देवान् । इन्द्रियाणि ज्ञानेन्द्रियाणि ग्रसते । ततोऽहङ्कार त्रिविध, महान् ग्रसते, तत सत्त्वादयो गुणा त महान्त ग्रसन्ति, गुणा ग्रसन्तीत्युपचार गुणमयी प्रकृतिरेव महान्त ग्रसतीत्यर्थ ॥१७॥

**ग्रसत** इति । हे राजन्! कालेन चोदित अव्याकृत प्रधान गुणान् ग्रसति, विषमान् गुणान् समीकरोति समीकृतगुण भवतीति यावत्, तन्महदादिनामरूपविभागरहित गुणसाम्यावस्थ प्रधानमव्याकृतशब्देनाभिधीयते । ननु, तत् क लीयते? इत्यभिप्रायमालक्ष्य परस्मिन् देव एवेति वदन् तस्यापि क्वचिल्लयशङ्का वारयितु परमात्मस्वरूप शोधयति - न **यस्येति** त्रिभि । यच्छब्दस्य "तन्मूलभूत पदमामनन्ति" (भाग 12 4 21) इति तृतीयेन सम्बन्ध । पदशब्देन अव्याकृतलयस्थान विवक्षितं

1 A B G J W राजन् 6 A यस्येति कुत्रचित्पाठ वीरराघव स्वीकृत 2 H V कनु-जी 3 ABJ omit पद 4 ABJ omit व्यक्ति 5 H V काम 6 H V omit नास्ति

अव्यक्तस्य लयो नाम अविभक्तनामरूपतया तमोवस्थापत्तिः यस्य परमात्मस्वरूपस्य कालावयवैः अहोरात्रादिभिः परिणामादयो गुणा न सन्ति परिणामशब्दो वृद्धेः पूर्वावस्थापरः। तत्र हेतुः - अनाद्यन्तं आद्यन्तरहितं अत एवाऽव्यक्तं व्यक्तैः इन्द्रियैः न व्यज्यत इति तथा। नित्यमित्यनाद्यन्तत्वस्यैव विवरणम्। यद्वा, स्वरूपतः स्वभावतश्च नित्यं कारणमव्यक्तादिपृथिव्यन्त जगत्कारणं, अनेन अव्यक्तलयस्थानत्वयोग्यत्वं सूच्यते, तथाप्यव्ययं कार्यगतैर्दोषैर्न व्येति न वैविध्यं गच्छतीति तथा ॥१८-१९॥

किञ्च, **न यत्रेति**। जायते वर्द्धते इत्यादिवाचः तदगोचरं मनश्च यत्र न वर्तन्ते, यत्र स्वरूपे सत्त्वादयो न सन्ति सत्त्वादिशब्दैः साम्यवैषम्यावस्थं गुणत्रयं विवक्षितम्। अनेन गुणत्रयवश्यत्वव्युदासः। देवताशब्दो ज्ञानेन्द्रियपरः, इन्द्रियशब्दः कर्मेन्द्रियपरः, महदादयो न सन्तीत्यनेन कर्मायनमहदादि सङ्घातात्मकदेहसम्बन्धव्युदासः करणायत्तज्ञानवत्ताव्युदासो वा लोकाः कल्प्यन्ते यत्र स लोककल्पः, सन्निवेशः ब्रह्माण्डात्मकः यत्र नेत्यनेन सन्निवेशस्य परमात्मस्वरूपगतत्वव्युदासः। तस्य प्रकृतिस्वरूपगतत्वादिति भावः[1] ॥२०॥

**विज०** वैकारिका देवाः वैकारिकाहङ्कारं स्वगुणैस्सह ॥१७॥

तं महान्तं बीजं व्यञ्जकं अव्याकृतं मूलप्रकृतिः कालेन हरिणा चोदितं प्रेरितं सत्त्वादिगुणान् ग्रसते मूलप्रकृतिस्वरूपं वक्ति - **न तस्येति**। तस्याव्यक्तस्य त्रुटिलवादिकालावयवैः परिणामादयो गुणा न सन्ति तदव्यक्तं मूलप्रकृतिविश्वसृजां कारणं आमनन्तीति शेषः इतरविशेषणं उक्तयोः सममित्याशयेनाह - **अनादीति** ॥१८-१९॥

कालेनेत्युक्तस्य हरेः स्वरूपं दर्शयति न यत्रेति। वागादयो यत्र कश्चन विशेषं नापादयन्तीति शेषः ॥२०॥

**न स्वप्नजाग्रन्न च तत् सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः।**
**सुषुप्तवच्छून्यवदप्रतर्क्यं[2] तन्मूलभूतं पदमामनन्ति ॥२१॥**

**लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा।**
**शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥२२॥**

**बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम्।**
**दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु[3] यत्[4] ॥२३॥**

---

1 W omits इति भाव। 2 A B G J W सषु° 3 MMa अन्वबध्य° 4 W °स्तुवत्

**दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथक् भवेत् ।**
**एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥२४॥**

**श्रीध०** **नेति**। स्वप्नजाग्रत् स्वप्नजागरावस्था युक्तम् । सुषुप्तवत् इन्द्रियाद्यभावात्। शून्यसादृश्ये हेतुः। अप्रतर्क्यम्, न पुनः शून्यमेवेत्याह तदिति ॥२१॥

उपसंहरति लय इति। शक्तयः सत्त्वादय ॥२२॥

आत्यन्तिकं लयमाह - **बुद्धीन्द्रियेति** द्वादशभि.। आत्यन्तिकलयो नाम मोक्षः स च ब्रह्मज्ञानेन सर्वप्रपञ्चलयात्मकः। न च प्रपंचस्य आत्मवत्सत्यत्वे लयः सम्भवतीति ज्ञानरूपाद् ब्रह्मण पृथग्भूतस्य तस्याऽसत्यत्वमुपपादयति। **बुद्धिश्च इन्द्रियाणि च आर्थाश्चे**त्येवं ग्राहककरणग्राह्यरूपेण तेषामाश्रयभूतं ज्ञानमेव भाति न पृथक्। तत्र हेतुमाह । **दृश्यत्वाव्यतिरेकाभ्यामिति**। अतो यदाद्यन्तवत्तदवस्तु। अत्रैवं प्रयोगः विमतं सन्न भवति। दृश्यत्वात् कारणाव्यतिरेकात् आद्यन्तवत्वाच्च रज्जुसर्पादि-वदिति ॥२३॥

तत्राव्यतिरेकं दृष्टान्तेन प्रपञ्चयति - **दीप** इति। दीपचक्षूरूपाणा तेजोविशेषाणां तेजसो यथा न व्यतिरेक स्तथा धीः कर्त्री खानि करणानि मात्रा विषयाः ऋताद् ब्रह्मणः पृथक् न स्यु ब्रह्मकार्यत्वात्। नन्वेवं कार्यकारणयोरभेदे कार्यासत्त्वे कारणस्याऽप्यसत्त्वं प्रसज्येत तत्राह अन्यतमादिति। कार्यत अन्यतमा दत्य- तव्यतिरिक्ताद् ब्रह्मणः प्रपंचाद् ब्रह्मणोऽस्ति व्यतिरेकः, प्रपंचस्य तु ततो नास्ति व्यतिरेक इत्यर्थ ॥२४॥

**वीर०** **नेति**। स्वप्नजाग्रज्जीववत्स्वप्नजागरादिरूप सङ्कोचविकासार्हधर्मभूतज्ञानानाश्रयं नित्या सङ्कुचित ज्ञानाऽश्रयमिति यावत् न च तत् सुषुप्तं सुषुप्त्यवस्थारहितं स्वप्नादपि सुषुप्तौ अत्यन्तज्ञानसङ्कोच तद्रहितं चेत्यर्थ । न खं इत्यादिनाऽऽकाश - जलाग्निवाय्वर्कविजातीयत्वं विवक्षितम्। अनेन जडप्रकृतिविलक्षणत्वमुक्तम्। न यत्र वाचो न मनश्चेत्यादिना न च तत्सुषुप्तमित्यन्तेन जीववैजात्यमुक्तम्। इत्थं जीवजडाभ्यां विलक्षणं परमात्मस्वरूपं शोधितं किंबहुनेत्यभिप्रेत्याह - संसुप्त वच्छून्यवदप्रतर्क्यं यथा संसुप्तस्तद्वत्, शून्यशब्देनाकाशो विवक्षित , तद्वच्च संसुप्ते हि जीवे देहान्तरसंस्थितेऽपि बाह्याभ्यन्तर ब्राह्मणत्वादिविभाग सुख दुःखादिविकारानवभासः, आकाशस्य सर्वगतत्वेऽपि व्याप्यगतदोषास्पर्शश्च दृष्टः। एवं परमात्मस्वरूपमपि

1 M Ma 'रप्युत' 2 M Ma मात्रतात् W मातृते 3 A ससुप्त' 4 A B J 'यामा' 5 A B J omit नाम 6 H V सकल 7 H V अत्र 8 A B J सर्वो' 9 A B J omit अन्यतमात् 10 H V 'न्त 11-11 W omits 12-12 W 'जात्यसुख'

चिदचिदात्मकजगदन्तरात्मकतयाऽवस्थितमपि बाह्याभ्यन्तर विकारविधुर माकाशवन्निर्मलश्चेत्यर्थः। अप्रतर्क्यं जडजीवसजातीयत्वेन तर्कयितु मशक्यं तदेतन्मूलं सर्वकारणं परमात्मस्वरूपं पदमव्यक्त लयस्थानमामनन्ति, वेदान्ता इति शेषः। "महानव्यक्ते लीयते, अक्षरं तमसि लीयते, तम परे देव एकी भवति" (सुबा. 3.2.2) इत्याद्या वेदान्ताः उपपादित जडजीव वैजात्यस्याप्रतर्क्य-मित्युपसंहार इत्यतो न पौनरुक्त्यम् ॥२१॥

प्राकृतिकप्रलयनिरूपणमुपसंहरति - **लय** इति। यदा पुरुषाव्यक्तयोर्लयः यदा च शक्तयः पृथिव्यादिमहदन्ताः कालेन विद्रुता चालिता (चोदिता) स्वस्वकारणेषु प्रलीयन्ते, स एव प्राकृतिको लय इत्यर्थः। तत्र पुरुषस्य लयो नामात्यन्त ज्ञानसङ्कोचेन परमात्मसंश्लेषविशेषः। अव्यक्तस्य लयस्तु अविभक्ततमोऽवस्थापत्तिरूप इत्युक्त एव। लयो नामाविभक्तनामरूपतमोव-स्थाप्राप्तिरेवेति तदर्थः। शक्ति शब्देन पृथिव्यादिसर्वपदार्थानां परमात्मानं प्रति अपृथक् सिद्धविशेषणत्वं सूचितम्। कार्योपयुक्त मपृथक्सिद्धविशेषणं शक्तिः ॥२२॥

एतदेव सुस्पष्टं प्रपञ्चयति - **बुद्धीन्द्रियार्थरूपेणेति**। ज्ञानशब्दः परमात्मवाची "सत्यं ज्ञानमनन्तम्" (तैत्ति 3. 2 । 1) इति प्रयोगात्। बुद्धीन्द्रियार्थरूपेण बुद्ध्यादयो रूपं शरीरं यस्य तस्य भावस्तत् तथा बुद्ध्यादि सर्ववस्तुशरीरकतया एवेत्यर्थः। तदाश्रयं बुद्ध्यादिसर्ववस्त्वाश्रयं अनेन धारकत्व मुक्तं, पूर्वेण तु नियन्तृत्वं, नियाम्यं हि शरीरं भाति, प्रामाणिकानामिति शेषः। प्रामाणिकैस्तथा ज्ञायत इत्यर्थः। अत्र हेतुमाह - दृश्यत्वाव्यतिरेकाभ्यामिति। "यस्य चक्षुः शरीरम्" (बृह 3 3 7 18) इत्यादिप्रमाणैः परमात्मशरीरत्वेन ज्ञायमानत्वादत एव परमात्मानं विनाऽवस्थानायोगाच्च स एव तच्छरीरको भातीत्यर्थः। परशरीरत्वेऽपि शरीरशरीरिणोः स्वभावभेदमाह - आद्यन्तवदवस्तुवदिति। बुद्धीन्द्रियादिकं न परमात्मस्वरूपवन्नित्यमपितु आद्यन्तवत्, अत एव तदवस्तु, न वसत्येकरूपेणेत्यवस्तु सततपरिणामि ॥२३॥

**एवं** सर्ववस्तुशरीरकत्वादपृथग्भाव उक्तः। अथ विश्वशरीरकस्य तस्य कारणत्वादुपकारकत्वाद्धारकत्वाच्च अव्यतिरेकमाह - **दीप** इति। तेजः कार्यं हि दीपः, तेजोनुग्राह्यं चक्षुः, इन्द्रियाणि तेजः कारणभूताहङ्कारकार्याणि इति यस्याश्रितं रूपं तद्धर्मः, अतो दीपादे र्न तेजो हित्वाऽवस्थानं, दीपशब्दोपलक्षितं बुद्धिरूपान्तःकरणं बुद्धीन्द्रियार्थरूपेणेति पूर्वमुक्तत्वात्। एवं इन्द्रियान्तःकरणविषयाणां परमात्मसृष्टत्वात् तदनुग्राह्यत्वात् तदाश्रितत्वाच्च अन्यतमाद् बुद्ध्यादिभ्योऽपि विलक्षणतमात् ज्ञानशब्दवाच्यात् परमात्मन ऋते तेषां नावस्थानं इत्यर्थः ॥२४॥

**विज०** आकाशाद्यन्यतमवच्च न भवतीत्याह - **न स्वप्नेति**। "स वा एष आत्मा नेति नेति" इति श्रुतेः।

सुषुप्तवत्सुखरूपं सुखमस्वाप्समिति सुषुप्तिपदेन सुखं लक्ष्यते। शून्यवत्सूक्ष्मं अतएव अप्रतर्क्यं तर्कागोचरं मूलभूतं सर्वस्य प्रधानकारणं पद्यत इति पदं गम्यमित्यर्थः ॥२१॥

कालाख्यपरमात्मस्वरूपमुक्त्वा लयं निर्दिशति - लय इति। यदा यस्मिन् लये कालविद्रुताः कालेन समाप्तजीवनावधयः अतएव विवशाः हर्यधीनाः पुरुषाव्यक्तयो ब्रह्मप्रकृत्योः शक्तयः पृथिव्यादयः सम्प्रलीयन्ते एष लयः प्राकृतिको हि नामेति शेषः ॥२२॥

चराचरेऽवशिष्यमाणं किम्? तत्राह - बुद्धीति। तदा प्रलये आश्रयन्तेऽनेन चराचरेणेत्याश्रय प्रपञ्चाधारभूतं, ज्ञानं, नित्यनिर्दोषज्ञानात्मकं ब्रह्म बुद्धीन्द्रियार्थरूपेण बुद्ध्या ज्ञानात्मिकया लक्ष्म्या ज्ञानहेतुत्वेन बुद्धिशब्दवाच्यया त्रय्या मुक्तश्रेण्या वा चक्षुरादीन्द्रियविषयसौन्दर्यातिशयेन भाति ज्योतीरूपेण वर्तते कथंकारं वर्तत इति तत्राह - अन्वयव्यतिरेकाभ्यामिति। प्रपञ्च सद्भावासद्भावाभ्यां कालाभ्यां वर्तत इति। यद्वा, बुद्धीन्द्रियात्मकदेहाकारेण "बुद्धिवान्मनोवान्" इत्यादि श्रुतेः। अनेन " संविदेव परितो विराजते" इति पूर्वाचार्यवचनात् ज्ञातृज्ञेयविवर्जितज्ञानमिति व्याख्यानं प्रत्युक्तं तादृक् ज्ञानस्य पाषाणकल्पत्वेन हेयत्वात् "नासदासीत्" (ऋक्. सं ।0।29।।) इतीतरवस्तुनिषेधात् धात्रादिसद्भाव कथमत्राह - आद्यन्तवदिति। यच्छरीरयोगवियोग-वत्तदवस्त्वस्वतन्त्रं यदादौ अन्ते च वर्तमानं लक्ष्म्यादि तत्त्वम् तदपि अस्वतन्त्रम् यदादिनिधनयुक्तं उत्पत्ति नाशवत्तद्वस्तुनो ब्रह्मणो व्यतिरिक्तं न भवति तदध्यस्तत्वेन तज्ज्ञाने लीयत इति यन्मतं तदासुरम्। तदुक्तम् - जीवविष्ण्वोरभेदश्च देहयोगवियोजने। विष्णोर्दुःखव्रणित्वादिपराभावस्तथैव च ॥ अस्वातन्त्र्यं च वेदादावुक्तमुद्भासते विभोः। क्वचित्क्वचिद्विमोहाय दैत्यादीनां दुरात्मनाम्॥ (ब्रह्माण्डे )इति ॥२३॥

एतमर्थं सोदाहरणमाह - **दीप** इति। दीपादिकं ज्योतिषं तैजसं, तत्स्वातन्त्र्यशक्तिमन्तरेण पृथक् स्वातन्त्र्येण प्रकाशकं न भवेत् एवं बुध्यादिकमपि मारुतात् मुख्यप्राणादपि पृथक् ज्ञानजननशक्तिमत्र वायुना वै गौतमसूत्रेण "प्राणेन हीदम्" इत्यादि श्रुतेः। किमुत परब्रह्मण? "एतस्माज्जायते प्राण आत्मन एव प्राणो जायते, ब्रह्मणो वा एतानि करणानि" इति श्रुतेः ॥२४॥

**बुद्धेर्जागरणं स्वप्नः सुषुप्तिरितिचोच्यते।**
**मायामात्रमिदं राजन्[1] नानात्वं प्रत्यगात्मनि ॥२५॥**

---

1 MMa 'प्प' 2 MMa होच्यते

यथा जलधरा व्योम्नि भवन्ति न भवन्ति च ।
ब्रह्मणीदं तथा विश्व[1]मवयव्युदयाप्ययात् ॥२६॥

[2]सत्यं [3]ह्यवयवाः [3]प्रोक्ताः सर्वावयविनामिह ।
विनार्थेन प्रतीयेरन् पटस्येवाङ्ग तन्तवः ॥२७॥

यत् सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ।
अन्योन्यापाश्रयात् सर्वमाद्यन्तवद[4]वस्तु यत् ॥२८॥

**श्रीध०** यदा तु बुद्धेः असत्वं तदा तदवस्थानां सुतरामसत्त्वमित्याशयेनाह - **बुद्धेरिति**। ननु विश्वतैजस प्राज्ञाना [5]मेव। एता अवस्था न बुद्धेरित्याशंक्याह - **मायामात्रमिति**। इदं विश्वतैजसप्राज्ञरूपम् ॥२५॥

आद्यन्तवत्त्वात् इत्यस्य हेतोः असिद्धिमाशंक्य सावयवत्वेन साधयति । **यथेति**। अवयवीति यत्सावयवं तदात्यन्तवत् घटादिवदित्यर्थः। अत उदयाप्ययादाद्यन्तवत्त्वात् विश्वं सन्न भवतीत्यर्थः। यद्वा, पृथगेवागमापायित्वात् विश्वं मिथ्या। ब्रह्म तु तदवधित्वात् सत्यमित्यनेन साध्यते । दृष्टांतस्तु पूर्वोक्त [6]एव। **रज्जु[6] सर्पवदिति**। यथा जलधरा व्योम्नीति दृष्टान्तस्तु आगमा[7]पायावधि[7]त्वमात्रे न तु मिथ्यात्वे ॥२६॥

अन्यतमादृतादिति, प्रतिज्ञातं कारणस्य सत्यत्वमुपपादयति - **सत्यमिति**। अवयवः कारणं प्रोक्तः "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छन्दोग्य उ. ६.१.४) इत्यादि श्रुतिभिः। अत्र युक्तिमपि दर्शयति। विनेति। अङ्ग हे राजन्! हि यस्मात् अर्थेन अवयविना [8]विना पृथगेवावयवाः प्रतीयेरन्। यथा पटस्याऽवयवाः तन्तवः पटात्पृथक् प्रतीयन्ते तद्वदिति ॥२७॥

ननु कार्याभावे कारणत्वं ब्रह्मणः कुतो घटेत। सत्यम्। तदपि नातीव सत्यमित्याह - **यदिति**। सामान्यं कारणं, विशेषः कार्यं तद्रूपेणान्योन्यापाश्रयात् परस्परापेक्षत्वेन निरू[9]पणानर्हत्वादित्यर्थः। अतः कारणत्वमवधित्वं व्यापकत्वमित्यादिकमपि यत्परापेक्षत्वाद्यन्तवत्तत्सर्वमवस्त्वित्यर्थः। यद्वा [10]अत्रैव हेत्वन्तर [11]मेवैतत्। यदुपलभ्येत स भ्रमः, सामान्यविशेषरूपत्वात् [12]स्वप्नवत्। अन्योऽन्यापाश्रयादितीदमपि हेत्वंतरं गुणगुणि[13]विशेषणविशेष्य [14]व्याप्यव्यापकत्व [15]विशेषाऽवधित्व कार्यकारणत्वा[15]दिरूपेण परस्पराधीनसिद्धित्वात्। तथाभूतस्वप्नवदिति निगमनम्। अतो यदाद्यन्तवत्तत्सर्व मवस्त्विति ॥२८॥

1--1 M Ma 'मुपयात्युदया प्ययम्।'. 2 M Ma एते . 3--3 ABGHJV 'व प्रोक्त 4 H M Ma V च 5 A B J omit एव 6--6 A B J omit 7--7 A B J पायि तदवधि'. 8 A B J omit विना . 9 A B J 'णामह'. 10 A B J तत्रैव 11 A B J 'मेतत्. 12 H V omit स्वप्नवत् . 13 A B J omit विशेषेण 14 A B J omit व्याप्य 15--15 A B J omit

**वीर०** एवं सर्वस्य परमात्मायत्तसत्तास्थितिप्रवृत्तिकत्वे स्थिते सति जीवगतावस्थानामपि तथात्वं सिद्धम्। तत्राधिकं विशेषमाह - **बुद्धेरिति**। अत्र बुद्धिशब्दो जीवात्मधर्मभूतज्ञानपरः। जीवस्य ज्ञानविकाससङ्कोचविशेषरूप जागरणादिकमवस्थानानात्वं प्रत्यगात्मनि जीवे मायामात्रं प्रकृतिसम्बन्धमात्रकृतमित्यर्थः ॥२५॥

एवंविधा दोषाः सर्वाधारमपि परमात्मानं न स्पृशन्तीत्याह - **यथेति**। इदन्तया भासमानं प्रत्यक्षादिप्रमाणगम्यं विश्व मवयविनि ब्रह्मणि उदयाद्भवति तस्मिन्नेव लयान्न भवति च। शरीरभूतचिदचिद्गता विकाराः स्वरूपन्तु आकाशवत् निर्मलमिति भावः ॥२६॥

इत्थं जगतो ब्रह्मकार्यत्वाभिधानात्सत्कार्यवादः फलितः, तद्विरुद्धमसत्कार्यवादं निरस्यति - **सत्यमिति**। अवयविनामवयवाः तावत्सत्यं प्रोक्ताः अबाधिता व्यवह्रियन्त इत्यर्थः। अवयवी तु न तेभ्योऽतिरिक्तः, अतिरिक्तत्वे तु पटावयविनः पृथगवयवा उपलभ्येरन्, न च तथोपलभ्यन्ते। न हि पटद्रव्यातिरेकेण तन्तव उपलभ्यन्त इत्यर्थः। तथा सच्छब्दवाच्यात् ब्रह्मणो न पृथग्भूतं जगद्रूपं कार्यमिति सत्कारणमेव जगदित्यर्थः। अङ्गेति सम्बोधनद्योतकम्। अबाधित तन्त्वात्मकावयवसमुदाय एव व्यतिषङ्गविशेषं गतः पट इत्युच्यते, प्रतीयते च तत्र पटरूपं कार्यं न तन्तुभ्योऽतिरिक्तं, तथा प्रमाणप्रतिपन्नं चिदचिदीश्वरसमुदायात्मकं "सदेवेदं सौम्येदम्" (छान्दो. 3.6.2.1) इत्यादिषु सच्छब्दवाच्यं जगद्रूपपरिणामविशेषमापन्नं कार्यमित्युच्यते प्रामाणिकैः तथा तेषां प्रतीयते चातो नासत्कार्यत्वमिति भावः। अत्र "पटवच्च" (ब्र.सू. 2.1.19) इति सूत्रार्थः स्मारितः ॥२७॥

ननु, बुद्धिशब्दान्तरादिभिः कार्यकारणयोर्भेद एवेत्यसत्कार्यत्वमेवोचित मित्यत आह - **यदिति** घटशरावादिषु मृदयं घट इति सामानाधिकरण्येन प्रतीतिविषयं यत्सामान्यशब्देन मृदादिकं कारणं विवक्षितं, विशेषशब्देन घटशरावादिविशेषाकारो विवक्षितः। स च मृद्गतो विकारः, ताभ्यां यदन्यबुद्धिशब्दान्तरादिभिर्द्रव्यान्तरमुपलभ्यते। असत्कार्यवादिना स भ्रमः कार्यस्य द्रव्यान्तरत्वोपलम्भो भ्रमात्मकः, कुतः? अन्योन्यापाश्रयत्वात्। सामान्यविशेषयोरेव परस्परमाधाराधेयभावेनाश्रितत्वात् सामान्यत स्तद्गतविकारापेक्षया द्रव्यान्तरस्य अनुपलम्भाद् बुद्धिशब्दान्तरादीनां विकारनिबन्धनत्वेनापि उपपत्तेरिति भावः। एवं चिदचिदीश्वरसङ्घातस्य कार्यकारणोभयावस्थत्वं तयोरभेदश्चेति उपपादितम् असत्कार्य्यवादश्च प्रतिक्षिप्तः। अथ कार्यावस्थानामपि चिदचिदीश्वराणां मिथो व्यावृत्ताकारतां विवक्षुस्तावत् आत्मस्वरूपाद् देहस्य व्यावृत्ताकारमाह - सर्वमिति। यत्सर्वं शरीरमाद्यन्तवद्धेतु गर्भमिदम्। अतः अवस्तु अनात्मवस्त्वित्यर्थः ॥२८॥

---

1--1 W नम्।

**विज०** न स्वप्नेत्यत्र स्वप्नाद्यवस्था अपि न ब्रह्मण इत्युक्तम्। तर्हि कस्य ता इति तत्राह - **बुद्धेरिति**। बुधं ज्ञानं **धीयतेऽस्मिन्निति बुद्धिर्जीवः** तस्य जागरणादिकमुच्यते "सता सौम्य" (छान्दो. ३.6-8-1) इत्यादि **श्रुतिसिद्धम्** "अथ है तत्पुरुषः स्वपिति नामे"(बृ.३. 2.1.17)च अनेन जाग्रदादीना निरालम्बनतया मिथ्यात्वमपास्तम् ननु, सुषुप्त्याद्यद्धवस्थावद्विश्वा-दीनामपि नानात्वं सत्यं स्यादिति तत्राह मायामात्रमिति। प्रत्यगात्मनि परमात्मनि स्थितं नानात्वं मायया स्वेच्छया मात्रं निर्मितं त्रातं न स्वाभाविकम् एतेन कृष्णरामादिरूपाणां मिथो मूलरूपेण भेदो निरस्तः। तदुक्तम् -

प्रत्येकं विष्णुरूपाणां भ्रान्तिमात्राभिदा मता। जगतश्चैव विष्णोस्तु सत्यो भेदः सदैव तु ॥

यथाकाशघनौ नित्यं भिन्नावेव परस्परम्। एव मीशो जगच्चैव भिन्नावेव परस्परम् ॥ (तत्त्व संहितायाम्) इति ॥२५॥

नन्वेवं तर्हि जगद्ब्रह्मणोश्च भेदो न पारमार्थिकः स्यादित्यत सोदाहरणं भेदस्य सत्यत्वं समर्थयते - **यथेति।** उदयाप्यययोर्मिथो विरुद्धधर्मत्वादेकवद्भाव । इदं विश्वं ब्रह्माधारतया सृष्टिसंहारौ याति गगनघनयोराधाराधेययो भेदो यथा सत्यस्तथा जगद्ब्रह्मणोरपीति एतदप्युक्तं यथाकाशघनावित्यादिना ॥२६॥

ननु, जगद्ब्रह्मणोरिवावयवावयविनामपि भेदः सन्नेव किं न स्यात् पटस्यामी तन्तव इति तत्प्रतीतेरिति? तत्राह - **एत** इति। सर्वेषामवयविनां महदादीनां ये अवयवाः प्रोक्ताः खादयः एतेऽर्थेन विना भेदव्यवहारमन्तरेण प्रतीयेरन् हि यस्मात्तस्मादभिन्ना इति शेष । कथमभेद ? इत्यत्राह - **पटस्येति**। पटस्यावयवाः तन्तवोऽवयविना पटेनाऽभिन्ना इति यथार्थीकर्तव्यम् । तन्तुः पटः मृद्घटः शुक्लः पट इत्याद्यभेदव्यवहार दर्शनात्। प्रत्येकं तन्तुना भेदेऽपि समुदायरूपेणाभेद इति प्रकटनाय तन्तव इति बहुवचनम्। अत एव -अवयव्यवयवाभेदात् कोट्यंशो भेद ईरितिः। सोऽपि भेदो न चाभेदात्पृथगेव प्रवर्तते ॥ (तत्त्वसंहितायाम्)। इति **वाक्यमत्र** गृहीतं, अनेन कार्यकारणादीनां भेद इति मतमपास्तं, पटस्य तन्तव इति प्रयोगः पटस्य शौक्ल्यमितिव निष्कर्षणार्थः। सोऽपि **श्रीहरिनियत** इति न युक्तिविरोध "अवयव्यवयवानान्तु कार्यकारणवस्तुनाम्। एक एव नियन्ताऽसौ हरि र्नारायणः परः" (तत्त्वसंहितायाम्) इति वाक्यादवगन्तव्यः ॥२७॥

नन्वेवं चेद् अवयविनि सति अवयवनाशे तस्याऽपि तदभेदः स्यादत्राह - **यदिति**। यावद् द्रव्यभाविसामान्यमित्युच्यते अयावद्द्रव्यभाविविशेष इति तत्र यद्वस्तु नष्टावयवाभिन्नमित्युपलभ्येत सामान्यावयववत् स बुद्धेर्भ्रमः कुतः अन्योन्यापाश्रयात् विश्लेषात् तस्मादाद्यन्तवदवस्त्वेव यद्वा हनुमद् भीमांशानां वाय्वाद्यंशिनां सामान्यविशेषशक्ति दर्शनाद् कथमभेद सङ्गच्छते? इति तत्राह - **यदिति**। अन्योन्यापाश्रयात् अन्योन्याभेदविषयप्रमाणात्, असुरजनमोहाधिकृतत्वेन आद्यन्तवत्वात् अवस्तु सर्वमविद्यमानमेव ॥२८॥

विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा।
न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥२९॥

न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते।
नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥३०॥

यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु।
एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः ॥३१॥

यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च चक्षुषस्तमः।
एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबन्धनः ॥३२॥

**श्रीध०** तदेवमनेकैर्हेतुभिः प्रपंचस्यासत्त्वं प्रसाधितम्। अत्र शंका। ननु प्रपंचस्यापि प्रकाशमानत्वादात्मवत्सत्त्वं किं न स्यादिति तत्राह - **विकार इति**। ख्यायमानः प्रकाशमानोऽपि विकारः प्रपंचः प्रत्यगात्मप्रकाशं विनाऽणुमात्रोऽपि न निरूप्योऽस्ति। तं विना निरूप्यः स्याच्चेत्तर्हि सोऽपि चित्समः स्यात् चिद्रूपेणात्मना समः स्वप्रकाशो भवेत्। तथा च सति सोऽप्यात्मवत्स्यात्। एकरूपः स्यादित्यर्थः ॥२९॥

कुत इत्यत आह - **न हीति**। ननु सत्यस्याप्यात्मनो जीवब्रह्मरूपनानात्वमस्त्येव तत्राह। यद्येवं नानात्वं मन्यते तर्ह्यविद्वान्। कथं तर्हि तयोर्भेदव्यवहारः उपाधिकृत इत्याह - नानात्वमिति। तच्छिद्रयोर्घटाकाशमहाकाशयोरिवेति परिच्छेदापरिच्छेदे दृष्टांतः। ज्योतिषोराकाशजलस्थसूर्ययोरिवेत्युपाधिकृतविकारसदसद्भावे। वातयोर्बाह्यशरीरस्थवाय्वोरिवेति क्रियाभेदे ॥३०॥

ब्रह्मण एव प्रपंचव्यवहारालम्बनत्वं दृष्टान्तेन स्पष्टयति - **यथेति**। क्रियाभिः तत्तद्रचनाभेदैः बहुधा कटककुण्डलादिरूपेण। लौकिकवैदिकैर्वचोभिः। जनैरहंकारोपहतैः ॥३१॥

नन्वहंकारस्य कथं ब्रह्मस्वरूपावरणेन भेदव्यवहारहेतुत्वम्। तस्य स्वकारणभूतब्रह्मावारकत्वासंभवादावरणे वा स्वस्यापि प्रकाशासम्भवादित्याशंक्य सदृष्टान्तमाह - **यथेति**। अर्करश्मय एव मेघरूपेण परिणता वर्षन्ति। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" (मैत्र. 3.6.37) इत्यादिवचनात् तस्मादर्कप्रभवः। अर्केणैव दर्शितः प्रकाशितश्च। तमः स्वरूपभूतार्कदर्शनप्रतिबन्धको भवति अहमहंकारः, ब्रह्मगुणो ब्रह्मकार्यभूतः तद्दीक्षितस्तेनैव प्रकाशितश्चाऽऽत्मनो जीवस्यात्मबन्धनः ब्रह्मस्वरूपदर्शनप्रतिबन्धको भवति ॥३२॥

1--1 M Ma 'ख', 2--2 M Ma 'त्स्मम आत्मन। 3 H M Ma V 'र्गप। 4 M Ma 'नी 5 A B J omit 'प्र 6 A B J 'न्न 7 ABJ [illegible] H V omit अपरिच्छेदे 9 A B J स्थयो मू' 10 H V 'वा

**वीर०** किञ्च न देहविकारा आत्मनि सन्तीत्याह - **विकार** इति। विकारः जातिगुणक्रिया जन्मवृद्ध्यादिविकारः ख्यायमानः आत्मनि देहात्माभिमानिना प्रतीयमानोऽपि प्रत्यगात्मानमन्तरा तं विनैव भवति न तस्मिन्नास्तीत्यर्थः। तदाह - **नेति**। न तस्मिन् विकारो निरूप्योऽस्तीत्यर्थः। विपर्यये ऽनिष्टमापादयति स्यादित्यादिना चेत् यदि। अणुरल्पोऽपि विकारः आत्मनि स्यात्त ह्यात्मवान्, प्राशस्त्ये मतुप्। मुक्ताऽऽत्मापि तत्समः देहसमः अचिज्जातीय एव स्यादित्यर्थः। चित्समः आत्मवदिति पाठान्तरम्। तदा विकारोप्यात्मस्वरूपवत्सदैकरूपः चित्समः ज्ञानात्मकात्मस्वरूपतुल्यः, तद्वत्स्वयंप्रकाशश्च स्यात्, मुक्तावप्येकरूपतया स्वप्रकाशतया च प्रतीयेतेत्यर्थः। न हि तथा प्रतीतिः प्रमितेति भावः ॥२९॥

ननु, ख्यायमानोऽपि विकारः कुत आत्मनि नेत्युच्यते इत्यत्रौपाधिकत्वादित्याह - **नहीति**। सत्यशब्दोऽत्र जीवपरः "तदनुप्रविश्य सच्च त्यच्चा भवत्, विज्ञानं चाविज्ञानं च सत्यानृतं च इति" (तैत्ति ३. 2.67) "प्राणा वै सत्यम्" (वृह. उ. 4 3 6) इति च प्रयोगात्। नहि परिशुद्धजीवात्मस्वरूपस्य देवमनुष्यादिनानात्वमस्ति। यस्तु यद्येवं नानात्वं मन्यते तर्हि न स विद्वान न देहविलक्षणात्मयाथात्म्यवित्, अपि तु देहात्माभिमानीति भावः। औपाधिक भेदस्य जीवस्वरूपास्पर्शित्वे नभस्तेजो वायवो दृष्टान्ताः इत्यभिप्रायेणाह - च्छिद्रयोरिति। यद्वद्यथा च्छिद्रयोराकाशयोः ज्योतिषोर्वातयोर्वाय्वोश्च यथा न नानात्वं तद्वदात्मनोः पूर्वापरदेहवर्तितया अभिन्नत्वेन प्रतीयमानयोरात्मनोरभेदे दृष्टान्तत्वाभिप्रायेण च्छिद्रयोरित्यादिद्विवचन निर्देशः। इयान् विशेषः भिन्नकालोपाधिभेदराहित्ये तुल्यकालोपाधिकृत भेदरहितं वस्तु दृष्टान्तितमिति छिद्रयोरिति द्विवचनान्तेन मेघाद्युपहितावाकाश प्रदेशौ विविक्षितौ घटाकाशमहाकाशौ वा। ज्योतिश्शब्देन, सूर्यादिबिम्बप्रतिबिम्बौ, वातशब्देन बाह्यशरीरौ ॥३०॥

एव मात्मनो देहाद्व्यावृत्ताकारत्वप्रतिपादनेनैव देहस्याऽपि ततो व्यावृत्ताकारत्वमर्थसिद्धं ताभ्यां परमात्मनो व्यावृत्ताकारता तु "न तस्यकालावयवै." (भाग. 12-4-19) इत्यादिभिस्त्रिभिः प्रतिपादितैव। अथोपपादितं चिदचिद्विशिष्टस्य विचित्रजगद्रूपेण परिणामं कार्यकारणयोरनन्यत्वं चोपसंहरन् कार्यमिथ्यात्वपक्षप्रतिक्षेपाय तत्सत्यताञ्च सदृष्टान्तमाह - **यथा हिरण्यमिति**। व्यवहारवर्त्मसु व्यवहारमार्गेषु निमित्तभूतेषु व्यवहारशब्दः प्रयोजनस्याप्युपलक्षणार्थः। 'कुण्डलमानय' कटकमानय बिभृहीत्यादि व्यवहारार्थं धारणादिप्रयोजनार्थं चेत्यर्थः। क्रियाभिः रचनाविशेषैः एकमेव सुवर्णं बहुधा कुण्डलादिरूपेण (भेदेन) नृभिः समीयते प्रमीयते, रचनाविशेषादि क्रियार्हत्वात् धारणादिप्रयोजनार्हत्वाच्च कटकादिकं सत्यमेव कारणात् सुवर्णात् अनन्यच्च। न हि शुक्ति रजतादिकमर्थक्रियार्हमिति भावः। एवं सूक्ष्मचिदचिद्विशिष्टो भगवानेक एव लौकिकैर्वैदिकैश्च वचोभिः जनैर्विशिष्टाद्वैततादिभिश्च व्याख्यायते विविधमाख्यायते विचित्रजगद्रूपेण परिणतः ख्यायते "कटकमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम्।

1 W omits विचित्र

सुरनरपशुपादपादिभेदैर्हरिरजितोऽपि उदीर्यते तथैकः" (विष्णु. पु. 3.7.16) इत्यादीनि लौकिकवचांसि। "**यथा सौम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्**" (छान्दो.3.6..1.5) "वाचारम्भणं विकारो नामधेयं लोहमणिरित्येव सत्यम्" (छान्दो 3. 6.1.4) इत्यादीनि वैदिकानि। भगवानित्यनेन कारणत्वाशङ्कित हेयास्पदत्वव्यावृत्तिः सूच्यते ॥३१॥

अथ मोक्षापरपर्यायसंसृतिबन्धनिवृत्तिरेवात्यन्तिकः प्रलय इति विवक्षुस्तावत् **कोऽसौ देहाद्व्यावृत्तस्यात्मनो बन्ध** इत्यत्राह - **यथेति**। मेघस्य अर्कप्रभवत्वमर्करश्मिमिश्रितधूमादि तमोद्रव्यारब्धत्वादवगन्तव्यम्। आदित्याधिष्टितत्वाच्चक्षुषोऽर्कांशत्वं यथा अर्कप्रभवोऽर्केणैव प्रकाशितश्च मेघोऽर्कांशभूतस्य चक्षुषस्तमः। तमोवदर्कदर्शन प्रतिबन्धकस्तिरोधायक इति यावत्। अहंशब्दोऽत्र देहात्माभिमानिनामहमभिमानविषयत्वात् देहपर , ब्रह्मगुण परमात्मविशेषणभूत उदीक्षितः, तेन परमात्मना प्रकाशितः ब्रह्मांशकस्यात्मनः जीवस्यात्मबन्धनः ज्ञानप्रतिबन्धकः यथा अर्कांशस्य चक्षुषाऽर्क दर्शने तत्प्रभवो मेघ प्रतिबन्धकः। एवं परमात्मशरीरभूतस्य जीवस्य परमात्मदर्शनं तद्गुणभूतो देहः प्रतिबध्नातीत्यर्थः। तत्प्रतिबन्ध एव संसृतिप्रतिबन्धो नामेति भाव ॥३२॥

**विज०** यथाऽवयव्यवयववादीनां अभेदो दुरवबोध एवं पदार्थानामनन्तत्वात्त त्सत्त्वरूपभेदोपि परमात्मानमन्तरेण दुर्ज्ञेय इत्याशयेनाह - **विकार** इति। वि निषेधे पृथग्भावे इत्यत पृथक्कारो नानाविधो भेद प्रत्यगात्मानं साक्षीभूतं श्रीनारायणं अन्तरेण अणुरल्पोऽपि निरूप्यो नास्ति स एव निरूपयितु शक्त नासत्वा नेत्याह ख्यायमान इति। प्रतीयमानस्यासत्त्वं जुगुप्सितं प्रमाणविरोधात् इति अपिशब्दः ॥२९॥

नन्वेकस्य प्रतिभानं तु कृतकान्न विशिष्यत इतिवन्निर्धारणायोग्य इति तत्राह - **नहीति**। यद्यविद्वान् ब्रह्मरूपाणां नानात्वं मन्यते तर्ह्यपि सत्यस्य ब्रह्मणो रूपाणां मन्यते तर्ह्यपि सत्यस्य ब्रह्मणो रूपाणा नानात्वं सत्यं न भवति अविद्वन्मतत्वात्। ननु, "युक्ता ह्यस्य हरयः शतादश" इति श्रुतेः। कथं सत्यं नेत्यत्राह - नानात्वमिति। नेत्यनुवर्तते छिद्रयोर्बाह्यान्त स्थाकाशयो यद्वद्यथा नानात्वं नास्ति एक एव महाकाशो घटे जायमाने बहिरन्तश्चेति द्वित्वसंख्यामुपैति उत्पद्यमानो नीलिमाकारोप्याकाशो द्वित्व मेति तत्र प्रागुक्तो हरेरुपमितिं यात पश्चा दुक्तो जीवाना मित्यर्थविशेषो हि शब्देनोपात - उक्तञ्च "महाकाशो बहिस्थश्च घटाद्यन्तःस्थ एव च। द्वेधा समुदितोऽन्यौ च द्वावाकाशौ प्रकीर्तितौ ॥ घटरूपस्तदन्यश्च महाकाशात्परा लघु। महाकाशवदेवात्र परमात्मा सनातनः ॥ घटान्तस्थमहाकाशप्रतिमोन्तर्गतो विभु । घटस्यान्तर्गताकाशो महाकाशात्परो मतः ॥ तद्वद्देवादय सर्वे जीवा मुक्त्युपयोगिनः। तमो गाश्चैव ये सर्वे घटरूपस्त्ववन्नरा " ॥ (तन्त्रसंहितायाम्) इति। ज्योतिषोरधिदैवाध्यात्मसञ्ज्ञयो "सहस्रं वा आदित्यस्य रश्मय आसु नाडिष्वातता " इति श्रुतेर्वा तयोर्वर्तिप्राणसञ्ज्ञयो इति "अधिदैव अध्यात्म " इति श्रुतेश्च। अत्राऽपि विशेषः पूर्ववदवगन्तव्य इति ॥३०॥

**बहुत्वसंख्यावाचिन्याः** श्रुतेः किं विनिगमकं? अत्राह - **यथेति। बहुधा कटककुण्डलाद्यात्मना हेमनानासंज्ञाविषयं समीयते तथा भगवानपि देवो नरो** वराहः शुक्लः पीतो ह्रस्वोऽणु दीर्घो **महानिति विविधाकारेण व्याख्यायते प्रकाश्यत इति ॥३१॥**

**हरे** स्वतत्त्वस्वरूपं निरूप्य संसारप्रकारमाह - **यथेति।** अर्कशब्देन अप्तेजोवायव उच्यन्ते तेजः सम्बन्धेन धूम उपलक्ष्यते अर्कप्रभवः धूमतेजो जलमरुद्भ्यः प्रभव उत्पत्तिः यस्य स तथा अर्केण नभसि दर्शितः सूर्यप्रकाशे सत्येव दृश्यते नान्यथा, यथा घनः सूर्यदर्शनप्रतिबन्धकः "आपो वा अर्कः" (बृह. 3.1.22) इति श्रुतेः। यथाऽर्कांशस्य चक्षुषस्तमः सूर्यदर्शने प्रतिबन्धकम्। "आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" (ऐत. 3. 2.4) इति श्रुतेः। एवमेवाऽहङ्कारो ब्रह्मापेक्ष्य गुणोऽमुख्यः तदीक्षितः तेन प्रकाशितः ब्रह्मांशकस्य जीवस्य "पादोऽस्य विश्वा भूतानि" (पु. सू.2) इति श्रुतेः। ब्रह्मणो भिन्नांशस्य आत्मनो जीवस्यात्मानं मतिं ज्ञानं बध्नातीत्यात्मबन्धनः "आत्मा देहे धृतौ जीवे" (वैज. को.6-1-6) इत्यादौ यादवप्रकाशेन मतौ प्रयुक्तत्वात् "तद्ब्रह्म वेदाहं ब्रह्मास्मि" इति श्रुतेः। ब्रह्मणो विशेषभूत इति वा ॥३२॥

**घनो यदाऽर्कप्रभवो[1] विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा।**
**यथा ह्यहङ्कार[2] उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥३३॥**

**यदैवमेतेन[3] विवेकहेतिना मायामयाहङ्करणात्मबन्धनम्।**
**छित्त्वाच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्गसम्प्लवम् ॥३४॥**

**नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप।**
**उत्पत्तिप्रलयावेके[4] सूक्ष्मज्ञाः सम्प्रचक्षते ॥३५॥**

**कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा।**
**परिणामिनामवस्थास्ता[5] जन्मप्रलयहेतवः ॥३६॥**

**श्रीध०** अत एवाहंकारनाशे स्वरूपदर्शनं भवतीति तेनैव दृष्टांतेनाह। **घन इति**। आत्मन उपाधिः। जिज्ञासया विचारेण। तर्हि तदाऽनुस्मरेत्। ब्रह्माऽहमिति पश्यतीत्यर्थः ॥३३॥

सोयमात्यन्तिकः प्रलय इत्युपसंहरति। **यथैवमिति**। विवेकहेतिना ज्ञानशस्त्रेण। अहंकरणमेवात्मबन्धनम्। अच्युतं परिपूर्णमात्मान मनुभवतीति तथा ॥३४॥

नित्यप्रलयमाह। नित्यदेति ॥३५॥

---

1 M Ma °भवा 2 W °त्वह° 3 W यदेव 4 H V °यावेव 5 M Ma °नामावस्थास्ता

कुत इत्यत आह - **कालेति**। परिणामिनां नदीप्रवाहप्रदीपज्वालादीनां या उच्चनीचावस्थाः ता[1]: **कालरूपस्रोतसो वेगेनाशु ह्रियमाणस्य देहादेः** दृश्यमानाः तद्वदेव नित्यदा जन्मप्रलयहेतवो भवन्ति। देह प्रतिक्षणं प्रध्वंसी प्रतिक्षणमवस्थाभेदास्पदत्वात्प्रदीपादिवदित्यनुमानम् ॥३६॥

**वीर०** मेघविनाशे चक्षुषो रविदर्शनवद् देहतिरोधानविगमे जीवस्य परमात्मावलोकनमित्याह - **घनो यदेति**। विदीर्यते वायुना विशीर्यते[2] तदा चक्षुस्स्वरूपं रविं पश्यति, एवं यदा अहङ्कार अहंकारपरिणामात्मक अहमभिमानविषयो वा देहः स एवोपाधिरात्मनो जिज्ञासया विचारपूर्वकोपासनया नश्यति, तदा अनुस्मरेत् परमात्मानं साक्षात् कुर्यादित्यर्थः। यद्वा आत्मनो जिज्ञासया विचारेणानुस्मरेत् आत्मानमुपासीत तदोपाधिर्नश्यति, ततश्च परमात्मानं ईक्षते इत्यर्थ । "ततस्तु तं पश्यते निष्कलं ध्यायमानः" (मुण्ड. उ.३।८) इति श्रुतेः इति भावः ॥३३॥

एव मुपाधिविलय एवात्यन्तिकः प्रलय इत्याह - **यदेवेति**। एतेन विवेकहेतिना विवेकादि साधनसप्तकानुगृहीत भगवदुपासनरूपेण खड्गेन मायाविकाराहङ्कारपरिणामरूपदेहसम्बन्ध एवात्मनो बन्धस्त छित्वा अच्युते स्वान्तरात्मनि (स्वान्तर्यामिणि) अनुभवो यस्य स अवतिष्ठत इति यत्तमेव, अत्र हे राजन्[3] आत्यन्तिक सप्तन्त प्रलयमाहु । तद्याथात्म्यविद इति कर्तृपदाध्याहारः ॥३४॥

अथ नित्यं प्रलयं निरूपयति - **नित्यदेति**। हे परन्तप, राजन्' ब्रह्मादीना सर्वभताना नित्यदा प्रतिक्षणं उत्पत्तिप्रलयौ प्रचक्षते (पूर्वपूर्वावस्था एके केचित्संप्रचक्षते) ब्रह्मादिसर्वक्षेत्रज्ञशरीराणा सततपरिणामस्वभावत्वात्तत्रोत्तरावस्थाप्राप्तिरुत्पत्ति पूर्वपूर्वावस्थात्यागः प्रलय इत्याचक्षत, इमावेव नित्योत्पत्तिप्रलयाविति भाव । स्थूलदृष्टिभिस्तौ न ज्ञायेते इत्यभिप्रायेण सूक्ष्मज्ञा इत्युक्तम् ॥३५॥

एतदेवोपपदयति - **कालेति**। काल एव स्रोत प्रवाह तस्य जवेन वेगेन, आशु शीघ्र, ह्रियमाणस्येतीवार्थगर्भो विवक्षितः। नदीप्रवाहवेगेन ह्रियमाणस्य तृणकाष्ठादेरुच्चनीचाद्यवस्था इवेत्यर्थ । परिणामिना देहाना नित्य या या अवस्थाः तास्ताः जन्मप्रलयहेतवः संयोगवियोगविषयतया हेतव इत्यर्थ ॥३६॥

**विज०** यदा घनोऽर्कप्रभया तीव्रया सूर्यप्रभया विदीर्यते नष्टो भवति तदा सूर्यांश चक्षु स्वरूपं स्वबिम्बं रविमीक्षते, यथा यदा जीवस्यात्मनः परमात्मनो दर्शने उपाधिनिमित्तभूतोहङ्कारो जिज्ञासया परमात्मोपासनया तथा नश्यति तर्हि तदा जीवः पर

1 A.B.J ता एव , 2 A omits विशीर्यते  3 W omits राजन्

परमात्मानमनुस्मरेत् अनुकूलस्मरणसमर्थो भवतीत्यन्वयः। हि शब्देन "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" (मुण्ड. उ. 2.2.४) इतीदं वाक्यमग्राहि ॥३३॥

असंप्रज्ञातसमाधिस्थलक्षणमाह यदेति। एवमुक्तविधयोद्भूतयैतया विवेकहेतिना निशितज्ञानायुधेन मायामयाहङ्करणात्मबन्धनं भगवदिच्छानिर्मितं लिङ्गशरीरलक्षणाहङ्कारजनितसंसारहेतुं छित्वा अच्युतात्मानुभवः नित्यमुक्त परमात्माऽपरोक्षदर्शनेनासम्प्रज्ञातसमाधिस्थो निर्मुक्तलिङ्गशरीराभिमानोऽवतिष्ठते एतमङ्ग! आत्यन्तिकं संप्लवं प्रलयमाहुः असंप्रज्ञातसमाधिस्थावस्थायाः नामान्तरमिदम् ॥३४॥

इदानीं दैनन्दिनजन्मप्रलयावाह - नित्यदेति। दिने दिने ब्रह्मादीनां सर्वभूतानामुत्पत्तिलयौ स्त इति एके सूक्ष्मज्ञाः वदन्तीत्यनेनान्वयः ॥३५॥

चेतनानां निर्विकारत्वेन जन्माद्यसम्भवात् कथमुच्यते नित्यदा जन्माद्यस्तीति, तत्राह - कालेति। कालस्रोतोजवेन कालनदीप्रावाहवेगेन क्षिप्रं ह्रियमाणस्य नीयमानस्य देहस्य ॥३६॥

अनाद्यन्तवता[1]ऽनेन कालेनेश्वरमूर्तिना ।
अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव ॥३७॥

नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः ।
आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥३८॥

एताः कुरुश्रेष्ठ, जगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः ।
लीलाकथास्ते कथिथास्समासतः कार्त्स्न्येन नाजोऽप्यभिधातुमीशः ॥३९॥

संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य ।
लीलाकथारसनिषेवणमन्तरेण पुंसो भवेत् विविध दुःखदवार्दितस्य ॥४०॥

**श्रीध०** ननु[2] यदि प्रतिक्षणमवस्था भवन्ति, तर्हि किं न दृश्यन्ते अतो हेतुरसिद्ध इत्याशंक्याह - **अनाद्यन्तवतेति**। अनाद्यन्तवता कालेन जायमाना अवस्था नैव लक्ष्यन्ते। आकाशे गच्छतां ज्योतिषां चन्द्रादीनां गम्[3]नाद्यवस्थाविशेषा यथा नैव लक्ष्यन्ते तद्वत्। अतो यथा तेषां प्रदेशान्तरप्रप्त्या प्रतिक्षणं गत्यवस्थाः कल्यन्ते तद्वदत्राऽपि बाल्यतारुण्यादिदर्शनेन

1 तेन . 2 HV omit ननु . 3 ABJ नाव

मध्यवर्तिन्योऽवस्थाः कल्प्यन्त इति न हेतुरसिद्ध इत्यर्थः ॥३७॥

उपसंहरति - **नित्य** इति ॥३८॥

पुराणार्थमुपसंहरति - **एता** इति। लीलाविषया कथा अजो ब्रह्माऽपि कात्स्न्र्येनाभिधातुं नेशः ॥३९॥

ननु यदि साकल्येन केनापि[1] अभिधातुं न शक्यते तर्हि किं तदभिधानेन तत्राह - **संसारेति**। विविधं दुःखमेव दवो दावानलः, तेन अर्दितस्य पीडितस्य, अतःउत्तितीर्षोः पुंसो भगवतो या लीला तासां कथा: तासां रसः तन्निषेवणमन्तरेण अन्यःप्लवः तरणसाधनं न भवेत्। उपायान्तरासम्भवात् तत्कथाश्रवणमेव यथाशक्ति निषेव्यमित्यर्थः ॥४०॥

**वीर०** यदि प्रतिक्षणमवस्था भवन्ति तर्हि किं न लक्ष्यन्ते दृश्यन्ते ? इत्यत्राह **अनाद्यन्तवतेति**। नित्येन **ईश्वरमूर्तिना** पुंस्त्वमार्षम्। ईश्वरमूर्तिना (तेन) कालेन या या नित्यमवस्थास्ता नैव दृश्यन्ते। दुर्दर्शत्वे दृष्टान्तमाह - वियतीति। यथा वियत्याकाशे चरतां ज्योतिषां सूर्यादीनां प्रतिक्षणं देशान्तरप्राप्तिर्न दृश्यते, तद्वत् ॥३७॥

चतुर्विधप्रलयनिरूपणं निगमयति - **नित्य** इत्यादि ॥३८॥

"तस्मात्सर्वात्मना राजन्, हरिः सर्वत्र सर्वदा। श्रोतव्यः कीर्तितव्यश्च, स्मर्तव्यश्चेच्छताऽभयम्" ॥ (भाग.2.2.36) इति द्वीतीये स्कन्धे मुमुक्षोरवश्यश्रोतव्यतया प्रतिज्ञातभगवत्कथानिरूपणं निगमयति - **एता** इति। जगद्विधातुः जगत्स्रष्टुः अत एव नारायणस्य नराणां प्राप्यस्य प्रापकस्य अखिलसत्वधाम्नोऽखिलाधारस्य भगवतः एताः लीलाकथा लीलारूपाणां चेष्टितानां कथाः ते तुभ्यं समासतः संक्षेपतः कथिताः, तर्हि विस्तरतः कथयेत्यत्राह - कात्स्न्र्येनेति। अजो ब्रह्माऽपि कात्स्न्र्येन विस्तरेण[2] अभिधातुं नेश्वरः, न प्रभुः ॥३९॥

सत्यं कथिताः, किमतः इत्यत आह - **संसारेति**। विविध दुःखमेव दवो दावानलः, तेन अर्दितस्य पीडितस्य अतएव अतिदुस्तरं संसारसागरं उत्तितीर्षोः (तर्तुमिच्छोः) पुंसो या भगवतो लीलाकथा तासां रसः तन्निषेवणमन्तरेण अन्यः प्लवः उत्तारणोपायः न भवेत् ॥४०॥

**विज०** प्रतिदिनं जीवस्योर्वारुकविकारवत्परिणामाद्यवस्था किं न स्युरिति तत्राह - अनाद्यन्तवतेति। आकाशे ज्योतिषां नक्षत्राणां यथा स्थितेर्लयो नास्ति तथा चेतनस्येति शेषः ॥३७॥

---

1 A.B.J omit केनापि ; 2 W omits विस्तरेण

उक्तमुपसंहरति नित्य इत्यादिना। कालस्य कालान्तर्यामिणो हरेः गतिः स्थितिः ईदृशी दुखबोधेति ॥३८॥

परमप्रमेयमुपसंहरति - एता इति। "यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत्क्रोडीं तनुं" इत्यारभ्य याः कथाः एताः जगद्विधातृत्वं चतुर्मुखस्याऽस्तीति अतोऽखिलसत्त्व॰॰म्नः इति सत्त्वगर्भमुदरम्भरत्वमित्यतो नारायणस्येति " सत्त्वोऽस्त्री जन्तुषु क्लीबे" (वैज. को.6.5.9?) इति यादवः। विस्तरतः कथनं किं न स्यादिति तत्राह, कात्स्न्र्येनेति अजो ब्रह्मा ॥३९॥

कथाकथनप्रयोजनमाह - संसारेति। प्लवो नौः ॥४०॥

**पुराण संहिता मेता मृषिर्नारायणोऽव्ययः।**
**नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥४१॥**

**स वै मह्यं महाराज, भगवान् बादरायणः।**
**इमां भगवतीं प्रीतः संहितां वेदसम्मिताम् ॥४२॥**

**एतां वक्ष्यत्यसौ सूत, ऋषिभ्यो नैमिशालये[2]।**
**दीर्घसत्रे कुरुश्रेष्ठ सम्पृष्टः शौनकादिभिः ॥४३॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे चतुर्थोऽध्यायः ॥४॥

**श्रीध०** श्रोतुगदरदाढर्याय संप्रदायप्रवृत्तिमाह - **पुराणसंहितामिति** त्रिभिः ॥४१॥

**स** इति। स वै बादरायणः प्रीतः सन् मह्यमिमां संहितां प्राहेति पूर्वेणान्वयः ॥४२॥

**एतामिति**। असौ सूत इति पुरतः स्थितमङ्गुल्या निर्दिश्याह। नैमिशालये[3] नैमिशारण्यस्थाने[4] ॥४३॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्थोऽध्यायः ॥४॥

---

1 HV 'भाग' . 2 MMa निमिषालयं ABGJ नैमिषालये 3 ABJ 'षा' 4 ABJ 'ष'

**वीर०** श्रोतुरादरदार्ढ्याय सम्प्रदायप्रवृत्तिमाह - त्रिभिः[1] **पुराणसंहितामिति**। एतां भागवतीं ऋषिः सर्वज्ञो नारायणः अनिरुद्धरूपी नारदाय प्राह, चतुर्मुखद्वारा चतुःश्लोकीरूपेण प्राहेत्यर्थः। यद्वा, ऋषिचतुर्मुखशरीरकः अथवा पूर्वं चतुर्मुखेनोपदिष्टां[2] चतुःश्लोकीं बदर्याश्रमवासी नारायणो प्राहेत्यर्थः, अन्यथा द्वितीयस्कन्धान्तसन्दर्भविरोधात् स नारदः कृष्णद्वैपायनाय ॥४१॥

स कृष्णद्वैपायनः बादरायणो व्यासःइमामष्टादशसहस्रग्रन्थसंख्यां, निर्मायेति शेषः। वेदसम्मितां वेदतुल्यां, मह्यं प्राह ॥४२॥

अथ भाविनीं प्रवृत्तिमाह - **एतामिति**। असौ सूत इति पुरतः[3] स्थितस्य अङ्गुल्या निर्देशः[3] नैमिशालये[4] नैमिशारण्यक्षेत्रे[5] ॥४३॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां चतुर्थोऽध्यायः ॥४॥

**विज०** कथारसनिषेवणाय भागवतपुराणमेव मुख्यसाधनमित्यभिप्रेत्य तस्याऽपि मूलत्वज्ञापनाय मूलं दर्शयति, पुराणेति ॥४१॥

संहितायां वेदसंहितात्वज्ञापनाय वेदसम्मितामिति ॥४२-४३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वादशस्कन्धे चतुर्थोऽध्यायः ॥४॥

**(श्रीविजयध्वजतीर्थरीत्या चतुर्थोऽध्यायः न समाप्तः)**

1 W omits त्रिभि   2 B W ण्णोऽपि   3-3 A omits   4 A नैमिषा   5 W स्थाने

# पञ्चमोऽध्यायः

## [1] श्रीशुक उवाच

[1] अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः ।
यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥१॥

त्वं[2] तु राजन् मरिष्येति पशुबुद्धिमिमां जहि ।
न जातः प्रागभूतोऽद्य देहवत्त्वं न नङ्क्ष्यसि ॥२॥

न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् ।
बीजाङ्कुरवद् देहादे र्व्यतिरिक्तो यथानलः ॥३॥

स्वप्ने यथा शिरश्छेदं[3] पञ्चत्वाद्यात्मनः[4] स्वयम् ।
यस्मात्[5] पश्यति देहस्य तत आत्मा ह्यजोऽमरः ॥४॥

### श्रीश्रीधरस्वामिविरचिता भवार्थदीपिका

पञ्चमे तु समासेन परब्रह्मोपदेशतः । राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥

एतत्पुराणं शृण्वन्नभयं प्राप्नोतीत्यभिप्रेत्य पुराणार्थमनुस्मारयति । अत्रेति । अयं भावः । जगतः कर्ता[6] ब्रह्माऽपि यस्य प्रसादजः । प्रसादोऽत्र रजोवृत्तिर्हर्षः । ततो जातत्वात्परतंत्रः[7] । सर्वसंहर्ता रुद्रश्च यस्य क्रोधसमुद्भवो, न तु स्वतन्त्रः । स विश्वस्यात्मा नियन्ता भगवानत्रानुवर्ण्यते । अत एवं भूतं भागवतं[8] शृण्वतः कुतोऽन्यस्माद्भयशंकेति ॥१॥

त्वं तु पुनः कृतार्थ एवेत्यनुस्मारयति । त्वं त्विति । पशुबुद्धिमविवेकं । यस्मान्न नङ्क्ष्यसि । कुत इत्यत आह । न जात इति । यथा देहः प्रागभूत एवाद्यजातो नङ्क्ष्यति च । न चैवं त्वं पूर्वं नाभूर्नचाद्य जातोऽसि अतो न नङ्क्ष्यसि ॥२॥

ननु बीजादंकुरवत् स्वस्मात्पुत्ररूपेणापि स्वयमेव भवति । यथाऽऽह श्रुतिः । "अंगादंगात्संभवसि हृदयादभिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्" (बृह. 3.6-4-9) इति ततः पुनरङ्कुराद्बीजमिव पौत्रादिरूपेणाऽपि[9] स्वयमेव भवति । 'पिता पुत्रेण पितृमान्योनियोनी' इति श्रुतेः । अतस्तेषु नश्यत्सु कथं न नंक्ष्यामीति चेत्राह । न भविष्यसीति । भूत्वा पुत्रपौत्रादिरूपवान् बीजादंकुरवत् न भविष्यसि यस्माद्देहादेर्व्यतिरिक्तस्त्वं यथाऽनलः काष्ठात् । देहाद्देहो जायते नात्मेति भावः ॥३॥

---

1--1 M Ma omit * विजयध्वजरीत्या त्रयोदशश्लोकात्मक अय पञ्चमाध्याय चतुर्थोऽध्याये अन्तर्भावित . 2 M Ma च 3 M Ma 'द 4 M Ma तथा 5 M Ma 'सि , 6 HV 'त्कर्ता . 7 HV 'त्वात्तत्प' . 8 A B J भगवन्तं 9 HV 'त्रः'

जन्मादीनां देहधर्मत्वं दृष्टान्तेन प्रपंचयति। स्वप्न इति। स्वप्ने यथाऽऽत्मनः शिरश्छेदं स्वयं पश्यति एवं जागरणेऽपि। यस्माद्देहस्य पंचत्वादिकं पश्यति [1]ततस्तद्वदेवात्मनः इदं भ्रममात्रम्। वस्तुतस्तु [2]अत्माऽजोऽमरश्चेत्यर्थः। तदुक्तम् - "आत्मनः पितृपुत्राभ्या मनुमेयौ भवाप्ययौ। न भवाप्ययवस्तूना मभिज्ञोऽद्वयलक्षणः" (भाग. 11-24-48) इत्यादि ॥४॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं भागवतीं संहितां संश्राव्य [3]अथ स्मर्तव्यं प्राधान्येन प्रतिपाद्यं निष्कृष्य दर्शयन् देहात्मयाथात्म्यविमर्शनपूर्वकं स्वशरीरकपरब्रह्मानुसंधाननिष्ठोऽस्पृष्टलौकिकदुःखो मुक्तो भविष्यसीत्याह पञ्चमेन - अत्रेत्यादिना - अत्र अस्यां संहितायां हरिराश्रितबन्धहरो भगवाननुवर्ण्यते, ततः किमत इत्यत्र तस्यैव- "कारणं तु ध्येय" (अथ शिखा.3.2-17) इत्युक्तरीत्या अवश्यध्येयत्वख्यापनाय सर्वकारणत्वमाह - यस्येति। यस्य हरे , सोऽनुवर्ण्यत इति सम्बन्धः ॥१॥

निष्कृष्य त्याज्योपादेयविभाग माह - त्वन्त्विति। अनासन्नमरणानां तु सन्त्युपाया, आसन्नमरणस्त्वं इति तुशब्दाभिप्रायः। [4]हे राजन्, मरिष्ये इत्येवंविधां पशुबुद्धि मविवेकं जहि, अहम्प्रत्ययवेद्यस्यात्मनो नित्यत्वात् मरणाभावादिति भावः। तदाह - न जात इति। न त्वं देहवत् प्रागभूतोऽविद्यमानः, अद्य न जातः, नोत्पन्नः, नापि नङ्क्ष्यसि न मरिष्यसीत्यर्थः ॥२॥

भूत्वा उत्पद्य पुनर्बीजाङ्कुरवत् पुत्रपौत्रादिरूपवान् न भविष्यसि, तत्र हेतुत्वेन विशिनष्टि - देहात् व्यतिरिक्त इति। तत्र दृष्टान्तः - यथाऽनल इति, काष्ठादिति शेषः। यथा काष्ठादग्निः व्यतिरिक्तः तथेत्यर्थः ॥३॥

स्वप्नदेहादिवत् जाग्रद्देहादपि आत्मा विलक्षण इत्याह - स्वप्न इति। स्वप्ने यथा आत्मनः शिरश्छेदं स्वयं पश्यति एवं जागरणेऽपि, तत्र यथा द्रष्टा छिद्यमानादेहाद्विलक्षणः, एवं जागरेऽपीति भावः। यस्मात् देहस्य पञ्चत्वादिकं मरणादिकं पश्यति, ततः आत्मा देहाद्विलक्षणः (देहादव्यतिरिक्तः) अतो न जायत इति तथाऽमरः मरणरहितश्च ॥४॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्याः विषयमाह - अत्रेति। कुतोऽस्या इतरेभ्यः श्रैष्ठ्यं येनादरेण ग्राह्या स्यादित्यतो वाऽऽह - अत्रेति। विष्णवभिन्नत्वेन इतरेभ्यः ब्रह्मान्यतमः किं न स्यादित्यत्राह - यस्येति। अनेन 'आत्मा वै पुत्रनामासि' (कौषी. 3. 2-11) इति वाक्यप्राप्त [5]तदात्म शङ्काऽपि दूरीकृतेति ॥१॥

---

1 H V omit ततः. 2 A B J ˚तश्च 3 W omits अथ 4 W omits हे राजन्. 5 M Ma ˚त्मत

ननु, जातो मृतोऽहमिति बुद्धेर्विक्रियायाः कथं चेतनस्य परिणामाद्यवस्थाभाव इत्याशङ्क्य सिंहावलोकनन्यायेन तस्याविकारित्वमाह - **त्वञ्चेति**। म्रीष्येति सन्धिभावेन। घटादिनाशवैलक्षण्यं देहवियोगस्य दर्शयति वैलक्षण्यमेव दर्शयति - नेति। "न जायते म्रियते वा कदाचित्" इत्यादेः देहवदित्येतद् प्रत्येकमभिसम्बध्यते नेति च त्वद्देहवत् न जातः तर्हि प्रागासन्नेत्याह, प्रागिति। देहवत्प्रागभूतोऽनुमन्न अद्य देहवन्न परिणमसि ॥२॥

देहान्तरवत् न भविष्यसि पुत्रपौत्रादिरूपवान् भूत्वा त्वं देहवत् न नङ्क्ष्यसि कथमिव पुत्रादिरूपवानिति तत्राह - **बीजेति**। बीजाङ्कुरपरम्परा यथा तथा कस्मान्नाशाभाव इति तत्राह, देहादेरिति। हेतुगर्भं विशेषणं, अत्रापि निदर्शनं यथाऽनल इति। दार्वादिरिति शेषः। पुत्रादिरूपत्वे तु अभेदोऽपि प्राप्त इत्यतो वाऽऽह, यथा बीजपरम्पराया भेदः प्रमितः तथा प्रकृत इति शेषः प्राग्वत् ॥३॥

ननु, जातो मृत इत्यभेदप्रतीतेःतद्व्यतिरेकः कथमनलदृष्टान्तः परमात्मनि सङ्गत इति तत्राह-**स्वप्न इति**। आत्मनो जीवस्य स्वप्ने स्वशिरश्छेदो यथा मिथ्या पञ्चत्वादि, इदं स्वानुभवसिद्धमित्याह, यस्मादिति। त्वं देहस्य पञ्चत्वादि पश्यसीति यस्मात्तत आत्मा अजो न जातोऽमरो न मृतश्चेति तस्माद्देहस्यैव जन्मादयो न चेतनस्येति सिद्धम् ॥४॥

**घटे भिन्ने यथाऽऽकाश आकाशः स्याद् यथा पुरा।**
**एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ॥५॥**

**मनः सृजति वै देहान् गुणान् कर्माणि चात्मनः ।**
**तन्मनः सृजते माया ततो जीवस्य संसृतिः ॥६॥**

**स्नेहाधिष्ठान वर्त्यग्निसंयोगो[1] यावदीयते ।**
**ततो[2] दीपस्य दीपत्वमेवं देहकृतो भवः ।**
**रजस्सत्त्वतमोवृत्त्या जायते[3]ऽथ नश्यति ॥७॥**

**न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः ।**
**आकाश इव[4] चाधारो[4] [5]ध्रुवोऽनन्तोपमस्ततः[5] ॥८॥**

**श्रीध०** यस्मा देहोपाधिकोऽयमात्मनो जन्मादि संसारभ्रमः तस्मा दुपाधिनिवृत्तौ मुच्यत इति सदृष्टांतमाह । **घट इति**।

1 HV 'विद्यते . 2 MMa ताव दीप' . 3 A.B.G.J.W 'तेऽथकिन' 4- -4 MMa 'चद्भुवाधारो 5- -5 HV ध्रुवोऽनन्तोपमो विभु . MMa ध्रुवो नानाभितस्तत . W ध्रुवोऽनन्तोऽव्ययास्थित

यथा पुरा घटोपाधेः पूर्वमिव पुनर्घटे भिन्ने तदन्तर्वर्त्यवकाश आकाश एव स्याद्यथा। एवं देहे मृते तत्त्वज्ञानेन लीने सति तद्वत्[1] ॥५॥

ज्ञानेन लयं[2] भावयितुं मायाकृतमात्मनो देहाद्युपाधि संबंधप्रकार माह। **मन इति**। मन आत्मनो देहादीन् सृजति। तच्च मनो माया सृजति। ततो मायाद्युपाधिसमुदायात् जीवस्य संसृतिर्न स्वतः[3] ॥६॥

[4]यस्मादुपाधिनिबन्धनो जीवस्य संसारोऽतस्तन्नाशे जीवत्वं[4] गच्छतीति एतदेव सदृष्टांतमाह सार्धेन। **स्नेहेति**। ततो दीपस्य ज्योतिषो दीपत्वं ज्वालारूपः परिणामः। तत्र तैलस्थानीयं कर्म। तदधिष्ठानस्थानीयं मनः। वर्तिस्थानीयो देहः। अग्निसंयोगस्थानीयः चैतन्याध्यासः। दीपस्थानीयः संसार इति योज्यम्। देहकृतो देहनिबंधनः। यद्वा देहकृतो मनसो न त्वात्मनः ॥७॥

अतो दीपवत्संसार एव नश्यति न त्वात्मा ज्योतिर्वदित्याह - **नेति**।[5]ननु तत्र प्रतीयमान आत्मा कुत इत्यत आह - **य इति**। व्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोः परोऽन्यः। यतः स्वयं ज्योतिः। परत्वं प्रपंचयति। **आकाश इवेति**। आधारो देहादेः प्रपंचस्य। ध्रुवो निर्विकारः। नास्त्यन्त उपमा च यस्य सोऽनन्तोपमः। ततो विभुः ॥८॥

**वीर०** अस्त्वेवं, ततः किमित्यत्रैवंविधविवेकयुक्तस्य मुक्तिरेव स्यादित्याह - **घट इति**। यथाऽऽकाशः घटोपहिताकाशः घटे भिन्ने सति यथापुरा आकाशः स्यात् पूर्ववन्निरुपाधिक आकाश स्यादेव जीवोऽपि देहे मृते परमात्मोपासनया निरवशेषं, प्रकृतिसम्बन्धविगमे सति ब्रह्म सम्पद्यते, संशुद्धावस्थो भवतीत्यर्थः। ब्रह्मशब्दोऽत्र मुक्तात्मवाची। "ब्रह्मभूयाय कल्पते" (भ.गी.18-53), "ब्रह्मणो हि प्रतिष्ठाऽहम्" (भ.गी. 14-27) इति प्रयोगात् ॥५॥

कथमनादेर्बन्धस्य निवृत्तिरित्यत्रौपाधिकत्वादित्यभिप्रेत्य तदुपपादयति **मन इति**। गुणान् सत्त्वादिगुणमयान् आत्मनो जीवस्य देहान् सृजति, मनसो देहसृष्टिहेतुत्वं पुण्यपापद्वारेत्याह, कर्माणीति। तन्मनः कर्म माया सृजति, ततो माया मनो देहकर्मभ्यः जीवस्य संसृति र्भवति ॥६॥

एतदेव सदृष्टान्तमुपपादयति - सार्धेन **स्नेहेति**। दीपस्य ज्योतिषः, दीपत्वं ज्वालारूप परिणामः, तत्र तैलस्थानीयं कर्म, तदधिष्ठानस्थानीयं मनः, वर्तिस्थानीयो देहः अग्निसंयोगस्थानीयो देहात्माभिमानः, दीपस्थानीय ससारः इति योज्यम्। एवं भवः संसारः देहकृतः कर्मारब्धदेहेन्द्रियावधिभोग इत्यर्थः। अतो रजस्सत्त्वतमोवृत्या गुणत्रयसंसर्गात् उपाधेरात्मनो जन्ममरणादि, स्वतस्तु, तद्रहितोऽस्तीत्यर्थः। तदेवाह-नेति। तत्र देहे जायमाने नश्यति च सति आत्मा न जायते न नश्यति च तत्र हेतुः-

1 A.B.J omit तद्वत्. 2 H V सम्भा° 3 H V वस्तुत 4-4 H V omit 5 A B J omit नत 6 A B J ननु 7 H V दिप्र° 8 A निरवशेष

व्यक्ताव्यक्तयोः परः व्यक्तं शरीरमव्यक्तं मूलप्रकृतिः ताभ्यां परोऽन्यः। तत्र हेतुः - स्वयं ज्योतिः। स्वयं प्रकाशः विजातीयत्वादिति भावः ॥७-८॥

**विज०** अधुना प्रसङ्गात्सामान्यविशेषमरणावस्थामाह - **घट** इति। घटे भिन्ने कपालीभूते घटाकारपरिमितो घटाकाशो नीलिमाकारबहिस्थाकाशः स्यात्पुरा यथा तथेत्यर्थः। एवं देहे मृते सति जीवः संसारी ब्रह्मतत्त्वं यथाकर्म स्वर्गनरकादिकं सम्पद्यते घटान्तस्थमहाकाशैकदेशो बहिस्थव्योमाकाशो भवति यथा, तथा पुरा जीवः प्राणधारकः परमात्मान्तर्यामी ब्रह्म व्याप्तस्वरूपमाप्नोति घटान्तर्गत भूताकाशः पुरा यथा महाकाशाधीनः पश्चादपि तदधीनतामापद्यते तथा चरमदेहान्तलिङ्गशरीरे मृते नष्टे जीवो मुक्तियोग्यः। आत्मा परं ज्योतिः सम्पद्यते अयमर्थो 'महाकाशो बहिःस्थश्च घटाद्यन्तस्थ एव च" इति तत्त्वसंहिता वचनादवगन्तव्य इति ब्रह्ममोक्षं पुनरावृत्तिशून्यं वा ॥५॥

प्रकारान्तरेण संसारावस्थामाह - **मन** इति। आत्मनो जीवस्य मनः सुरनरादिदेहान् गुणान् कर्माणि आवृत्तिहेतु भूतानि पुण्यपापलक्षणानि च सृजति आपादयति शब्दादिविषयासक्तिहेतुभूतानि वा। एवं विधं मनः सत् किं तत्राह, तदिति। मायाजडप्रकृतिः तन्मन उत्पादयति सृजते,इत्यात्मनेपदप्रयोगेण चिन्मिश्रं मन इति सूचयति ततो जडमनसो जीवस्य संसारो वर्तत इति शेषः ॥६॥

कियन्तं कालं जन्मात्मकः संसार इति तत्राह - **स्नेहेति**। यावत् यावन्तं कालं तैलादिस्नेहद्रव्याधिष्ठानस्थितवर्त्यग्निसंयोगः तावत् तावन्तं कालं दीपस्य दीपत्वं प्रकाशसामर्थ्यम् । एवं देहकृतो देहादिकर्मनिमित्तकृतो भव इत्यन्वयः। तैलाद्यभावेन यथा दीपादेः शून्यता एवं जीवस्यापि देहाद्यभावेन शून्यत्वं आयातं अत्राह, रज इति। मनसो रजआदिगुणोपजीवनेन देहो जायते (?) इत्यादि ॥७॥

तत्र तस्यामवस्थायामपि योऽव्यक्ताव्यक्तयोः देहप्रकृत्योः परो विलक्षणः स आत्मा जीवो न जायते, न वर्धते, न नश्यति कुतः? स्वयं ज्योतिर्ज्ञानात्मा इदानीमुपास्तिप्रकारं विधत्ते, आकाश इति। आकाशवत्ततो व्याप्तो ध्रुवाधारो नित्याधारो ध्रुवो नित्यश्च यः नानामितः तत्तद्वस्तुपरिमाणपरिमितश्च ॥८॥

**एवमात्मानमात्मस्थमात्मनैवामृश प्रभो।**
**बुद्ध्यानुमानगर्भिण्या वासुदेवानुचिन्तया ॥९॥**

1. W. omits परः

**चोदितो विप्रवाक्येन न त्वां धक्ष्यति[1] तक्षकः ।**
**मृत्यवो नोपसर्पन्ति मृत्यूनां मृत्युमीश्वरम् ॥१०॥**

**अहं ब्रह्म[2] परं धाम ब्रह्माहं परमं पदम् ।**
**एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥११॥**

**दशन्तं तक्षकं पादे लेलिहानं विषाननैः ।**
**न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥१२॥**

**एतत्ते कथितं तात[3] यथाऽऽत्मा पृष्टवान्, नृप ।**
**हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥१३॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे पञ्चमोऽध्याय ॥५॥

[4]**श्रीध०** अतस्त्वमेवं चिन्तयेत्याह। **एवमिति**। आत्मस्थं[5] देहाद्युपाधिस्थितम्। आमृश विचारय। अनुमानगर्भिण्या द्रष्टृ [6]दृश्यान्वयव्यतिरेकयुक्त्या ॥९॥

एवं च सति त्वां तक्षको न दहेदित्याह - **चोदित इति**। तत्र हेतवः। मृत्यव इति मृत्युहेतवः ॥१०॥

विमर्शप्रकारं दर्शयन् तक्षकादर्शनं दर्शयति द्वाभ्याम् **अहमिति** योऽसावहं[7] स ब्रह्मैव यद् ब्रह्म तदहमेवेति समीक्षन्। तत्राहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः ब्रह्माहमिति भावनया च ब्रह्मण पारोक्ष्यनिवृत्तिर्भवतीति व्यतिहारदर्शितः[8]। निष्कले निरुपाधौ। आत्मनि ब्रह्मणि ॥११॥

**दशन्तमिति**। विषयुक्तैराननैर्दशन्तं ग्रसन्तं तक्षकम्। लेलिहानं सर्पम्। यद्वा लेलिहानं जिह्वाभिरोष्ठप्रान्तम् सनिष्पेषमास्वादयन्तम्। आत्मनः पृथक् ॥१२॥

**एतदिति**। हरेश्चेष्टां लीलां[9] प्रति आत्मा त्वं यत्पृष्टवांस्तत्ते कथितम्। शिष्यस्य कृतार्थतापरीक्षणाय पृच्छति। किमिति ॥१३॥

---

1 ABGJW यक्ष्यन्ति. 2 M Ma 'क्ष्य चात्मा' 3 MMa 'चात्म'. 4 HV 'स्तमेव 5 HV 'स्थम्' 6 HV 'त्यान्व'. 7 ABJ बोह. 8 HV व्यतीहारार्थ· 9 A B J omit लीला प्रति

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां पञ्चमोऽध्यायः ॥५॥

**वीर०** तत्र दृष्टान्तः आकाश इवेति। यथा घटाद्युपाधेः आकाशः परः तद्वदाधारः, देहस्य धारकः अनन्तः स्वभावतोऽपरिच्छिन्नः, अव्ययः स्वरूपतो विकाररहितः ॥९॥

ततः किमत आह - **एवमिति**। एवं विधमात्मस्थं परमात्मस्थं देहस्थं वा आत्मानं आत्मनैवामृश विचारय प्रत्यक्षत्वा दात्मनैवेत्युक्तिः। **बुद्ध्येति** - अनुमानगर्भिण्या अनुमीयतेऽनेन सूक्ष्मार्थ इत्यनुमानम्। शास्त्रं तद्गर्भिण्या शास्त्रजन्यज्ञानयुक्तयेत्यर्थः। बुद्ध्या आत्मविमर्शनात्मिकया वासुदेवानुचिन्तया च वासुदेवानुचिन्तारूपया बुद्ध्या वा उपलक्षितं त्वां विप्रवाक्येन प्रचोदितोऽपि तक्षकः न धक्ष्यति तव वेदनां न जनयिष्यति इत्यर्थः। मृत्यव इति। ईश्वरो हि मृत्यूनां मृत्युः अतस्ते मृत्यवः मृत्युहेतवः न धक्ष्यन्ति, एवं तद्भावमर्पात्यभिप्रायः ॥१०॥

**अहमिति**। अहं ब्रह्मेति, ब्रह्माहऽमिति च तात्पर्यभेदेन विशेषणप्रधानो विशेष्यप्रधानश्च निर्देशभेदः, परंधाम परमं[1] पदमिति च ब्रह्म विशेषणं, परमं पदं परमं प्राप्यं एवमित्थं समीक्षन् सन्दधानः निष्फले प्राकृतशरीररहिते आत्मनि परमात्मन्यात्मानं प्रत्यगात्मानमाधाय परमात्मशेषतैकरसं ध्यात्वेत्यर्थः।[2] यद्वा अनादिमायाविद्यया जतदेहात्मबुद्ध्यभिभूतनिजस्वरूपं राजानं नित्यं श्रीभगवच्छेषभूतमात्मान देहद्वयविलक्षणं गुणत्रयातीतं जडविलक्षणं सदैव चेतनं नित्यं सदा परमात्मस्वरूपाधीन सत्तास्वरूपं विद्धीत्युपदिशति - अहं ब्रह्मेत्यादिना। धाम निरुपाधिकचेतनं प्रकाशबहुलं तेजोमयं ज्योतिस्स्वरूपं परमं श्रेष्ठं जडविलक्षणं अत एव जडवर्गादतिश्रेष्टमपि पदं स्वरूपं यस्य तत्, अहं अहंतत्त्वं, जीवस्वरूपं ब्रह्मपरं, प्रधानं श्रेष्ठं, मान्यं पूज्यं सेव्यं, यस्य तत् अत एव ब्रह्माहं ब्रह्मणः अहं ब्रह्माहं ब्रह्मणः परमात्मनः शेषिण एवाहं शेषो नान्यस्य तदितरस्य सर्वस्यापि चेतनाचेतनस्य शेषरूपत्वादिति तदभिप्रायः, मम च शेषी ब्रह्मैव परमात्मैव नान्यः। तथा सति सर्वेपि शेषिण एव स्युः, अतो न शेषस्य शेषीति श्रुतावेक एव शेषी वर्णितः "एक मेवाद्वितीयं ब्रह्म, (छान्दो.उ.6-2-1) नेह नानास्ति किञ्चन" ( बृह.उ. 4-4-5) "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यदिश्रुतिः। "न त्वत्समोस्त्यभ्यधिकः कुतोऽन्यः" (भगी. 11-43) इत्यादि श्रीगीतोपनिषत्सु च शेषी एक एव श्रीमन्नारायणः, शेषास्तु बहव एवेति सर्वशेषिणो नियन्तुः आज्ञा शेषभूतैस्सदैव पालनीयेति सूक्ष्मदृशातु अवधारणीयः। अन्यथा शेषस्वरूपमेव न सिद्ध्यतीति दिक्। एवञ्च सर्वस्य शेषी परब्रह्म श्रीमन्नारायण एव नान्य इति। यथा राजपुरुष

---

1 A.B omits परमं ; 2- -2 W omits

इत्यादौ षष्ठीसमासघटितपुरुषस्य अप्राधान्यं प्रसिद्धं, तत्र भेदवादिनः भ्रान्ता एवेति परब्रह्म पराधीनमेतादृशस्वरूपं जीवतत्त्व यत्तस्मिन् स्वस्वरूपे निष्कले आत्मनि जीवस्वरूपे आत्मानमन्तर्यामिणं परमात्मानं श्रीमन्नारायणं निजस्वामिनं श्रीरमानाथं निजनाथं (परमात्मस्वरूपे वा आत्मानं व्याप्य शेषभूतं) समीक्षन् सम्यक् पश्यन् नित्यस्वामिसेवकभावेन सम्यगालोकयन् ध्यानेन दृशा प्रत्यक्षमिव कुर्वन् विश्वासश्रद्धावैराग्यज्ञानानुरागभक्तिनयनैः प्रत्यक्षमेव कुर्वन्नप्यहं जडदेहादिविलक्षणो निर्गुणः शुद्धो मुक्तस्वरूप चिदात्माप्यहं न स्वयं ब्रह्म ब्रह्माहमस्मि किन्तु स्वयं ब्रह्मण सर्वशेषिणः श्रीस्वामिनो दास एवाह मस्मि इति सर्व श्रुतिशास्त्रार्थसारोऽयमर्थः। एतादृशबोधपूर्वकं श्रीभगवध्यानानुरागी त्वं देहं स्थूलदेहं दशन्तं तक्षकं स्थूलं सूक्ष्मं च शरीरमुभयदेहोत्पादकमविद्याप्रधानादिकं सर्वं जगद्विश्वं च तन्नाशादिकरं कालं च न द्रक्ष्यसीत्यनेन श्रीभगवद्व्यतिरिक्तं किमपि न वेत्स्यसि परमात्मानमेव नित्यमात्मन्यन्तर्यामिणं परमात्मनि व्यापके श्रीस्वामिनि वा नित्यव्याप्यभूतं सदा शेषरूपनिजस्वरूपं सम्यगालोचयिष्यसीति सर्वमङ्गलमनवद्यम् ॥११॥

**दशन्तमिति**। विषयुक्ते रानने मुखे लेलिहानमास्वाद्यमानं दशन्तं च तक्षकमात्मन परमात्मनः पृथक्सिद्धं शरीरं विश्वं च न द्रक्ष्यसि भगवत्स्मृत्याह्लादे मग्नतया दुःखादि हेतुभूतं मन्यन्न वेत्स्यसीत्यर्थः ॥१२॥

अखिलप्रश्नोत्तरं निगमयति - **एतदिति**। हे तात ! हे नृप ! हरेश्चेष्टां प्रति यद्यत् आत्मा त्वं पृष्टवान् तत्सर्वं ते तुभ्यं कथितं, कृतार्थतापरीक्षायै पृच्छति - किं भूयः श्रोतुमिच्छसीति। भूयः पुनः ॥१३॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकाया
व्याख्यायां पञ्चमोऽध्यायः ॥५॥

**विज०** एवं विधमाहात्म्योपेतमात्मस्थं स्वहृदयकुहरनिलयमात्मानं परमात्मानमात्मनैव सर्वप्रयत्नेनामृश सम्यग्विचार्योपास्व प्रभो, इत्युपास्ति साम्यार्थमाह - दुर्मरणदोषदुष्टस्य मम देहत्यागेपि मोक्षो नास्तीति न चिन्तयेत्याशयेनाह, बुद्ध्येति। आत्मा स्वस्वेतरवृत्तित्वानाक्रान्तनित्यनिष्ठाधिकरण मेयत्वादात्मवदिति देहः स्वस्वेतरवृत्तित्वानाक्रान्त नित्यनिष्ठाधिकरणं, मेयत्वात् घटवदित्यनुमानगर्भिण्या वासुदेवानुचिन्तया हरेर्निरन्तरसदुपासनया वर्तमानं त्वाम् ॥९॥

विप्रकुमारवाक्येन चोदितः प्रेरितस्तक्षको न धक्ष्यति दष्टदोषं नापादयतीत्यन्वयः। मृत्यूनां मारकाणां मृत्युं मारकं ईश्वरं उप समीपे स्थितं मृत्यवो न सर्पन्ति त्वां न प्राप्नुवन्ति ॥१०॥

**दंशदोषास्पर्शने** प्रकारान्तरेणोपायमाह - अहमिति। न हन्यत इत्यहं न हीयत इति वा कदापि न जहाति स्वशक्ति इति वा, **एवंविधमीश्वरं** विहाय कदापि न तिष्ठन्तदपतीत्याद्यर्थः। उपासनाफलमाह - एवमिति। एवंविधस्त्वं निष्फले आत्मनि परमात्मानं समाधाय संयुज्य समीक्ष्य सम्यक् ध्यायन् ॥११॥

**विषयुक्ताननैः** पदे दशन्तं तक्षकं लोलहानं सर्पं न द्रक्ष्यसि इतरसर्पवदिति शेषः। आत्मनो हरेः पृथक् स्वातन्त्र्येण स्थितं विश्वं शरीरं च न पश्यसीत्यन्वयः ॥१२॥

**विज०** अवान्तरप्रमेयमुपसंहरति - एतदिति। चेष्टेति पाठे सा कथितेति शेषः ॥१३॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां

द्वादशस्कन्धे पञ्चमोऽध्यायः ॥५॥

**(श्रीविजयध्वजतीर्थरीत्या पञ्चमोऽध्यायः न समाप्तः)**

# षष्ठोऽध्याय:

(विजयध्वजरीत्या पञ्चमाध्याय: षष्ठोऽध्यायश्च )

सूत उवाच

एतन्निशम्य मुनिनाभिहितं परीक्षिद् व्यासात्मजेन निखिलात्मदृशा समेन ।
तत्पादपद्ममुपसृत्य नतेन मूर्ध्ना बद्धाञ्जलिस्तमिदमाह स विष्णुरात: ॥१॥

राजोवाच

सिद्धोस्म्यनुगृहीतोऽस्मि भवता करुणात्मना ।
श्रावितो यच्च मे साक्षादनादिनिधनो हरि: ॥२॥

नात्यद्भुतमिदं मन्ये महतामच्युतात्मनाम् ।
अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रह: ॥३॥

पुराणसंहितामेतामश्रौष्म भवतो वयम् ।
यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥४॥

भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् ।
प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ॥५॥

अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे ।
मुक्तकामाशयं चेत: प्रवेश्य विसृजाम्यसून् ॥६॥

अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया ।
भवता दर्शितं क्षेमं परं भगवत: पदम् ॥७॥

सूत उवाच

इत्युक्तस्तमनुज्ञाप्य भगवान् बादरायणि: ।
जगाम भिक्षुभिस्साकं नरदेवेन पूजित: ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठे परीक्षितो मोक्ष: सर्पहोमादि तत्सुतात् । वेदशाखात्रिभागोक्तौ त्रि वेदाव्यासवर्णनम् ॥

1--1 W omits 2 B G H J V मूल 3--3 H V omit M Ma परीक्षिदुवाच 4 A B G J W 'मा' 5 H V भवता' 6 M Ma 'मश्रौष भवतो ह्यहम् । 8 A B G J 'ज्ञाप्य' 9 A सार्धं 10 A B J शाखा 11 H V 'वेद'

**एतदिति**। एतत्पुराणं निशाम्य निखिलात्मा हरिः तं पश्यति निखिलं वाऽत्मनि पश्यतीति तथा तेन अतः समेन पादपद्ममुपसृत्य नतेन अवनतेन मूर्ध्ना, तत्पादमूलमुपसृत्य तस्य पादौ शिरसि निधायेत्यर्थः ॥१॥

**सिद्ध** इति। सिद्धः कृतार्थोऽस्मि। यतोऽनुगृहीतोऽस्मि, अनुग्रहमेवाह। यद् यस्मात् श्रावितः, चशब्दात् प्राप्तिसाधनं च श्रावितम् ॥२॥

करुणात्मतामभिनन्दति द्वाभ्याम् - **नात्यद्भुतमिति** ॥३॥

**पुराणेति**। अश्रौष्म श्रुतवन्तः। वयं भवतः सकाशात् ॥४॥

सिद्धोऽस्मीत्युक्तं तदेवाविष्करोति - **भगवन्निति**। यतस्त्वया दर्शितं ब्रह्म प्रविष्टः। कथं भूतम्। अभयम्। यतो निर्वाणं कैवल्यरूपम् ॥५॥

'किं भूयः श्रोतुमिच्छसि' (भाग.12-5-13) इति यदुक्तं तत्र सिद्धोऽहं न किञ्चिच्छ्रोतु मिच्छामि केवलमनुज्ञां देहीत्याह - **अनुजानीहि** इति। वाचमित्युपलक्षणं सर्वेन्द्रियाणाम्। वाचं नियम्य किं करिष्यसि तदाह। मुक्ताः कामाशयाः तद्वासना येन तच्चेतोऽधोक्षजे प्रवेश्य असून् विसृजामि ॥६॥

ननु किं प्राणत्यागेन किञ्चित्कालं ज्ञाननिष्ठो भवेति चेत्तत्राह - **अज्ञानं चेति**। अज्ञानं चकारात् तत्संस्कारश्च तच्च त्वत्कृपयैवेत्याह - भवतेति ॥७,८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

आत्मनः सिद्धार्थतां कृतज्ञतां चाविष्कुर्वन्नाह राजा इत्याह सूतः - **एतदिति**। मुनिना शुकेन अभिहितं "एतत् किं भूयः श्रोतुमिच्छसि" (भाग.12-5-13) इत्येतन्निशम्य कथम्भूतेन समेनेति भावप्रधानो निर्देशः साम्येन निखिलात्मनः पश्यतीति तथा, तेन नतेन नम्रेण मूर्ध्ना तस्य पादपद्ममुपसृत्य संस्पृश्य स विष्णुरातः परीक्षित् तं मुनिं प्रति इदं वक्ष्यमाणमाह ॥१॥

उक्तिमेवाह - **सिद्ध** इति। सिद्धोऽस्मि सिद्धार्थोऽस्मि। कुतः? यतः भवताऽनुगृहीतोऽस्मि कोऽसावनुग्रहः? मे मह्यं अनादिनिधनो हरिः चशब्दात् तत्प्राप्त्युपायश्च श्रावित इति यदेषः ॥२॥

करुणात्मतामाविष्करोति - **नेति**। अच्युते आत्ममनो येषां तेषां, अत एव महतां यत् वात्सल्यसौशील्यादि - गुणोत्कृष्टानां भवतां, इदं नात्यद्भुतम्। किं तत्? यदज्ञेषु अत एव तापत्रयवशेषु भूतेष्वनुग्रह इत्येतत् ॥३॥

---

1-1 HV स्वात्मनि. 2 ABJ तत. 3 ABJ तत्पा° 4 HV omit श्रावितम् 5 ABJ omit यत. 6 HV कश्चि° 7 ABJ omit अज्ञानं. 8-8 TW omit

**पुराणसंहितामिति** । भवतः सकाशात् अश्रौष्म श्रुतवन्तः । कथम्भूताम्? यस्यां संहितायाम् ॥४॥

सिद्धोऽस्मीत्येतदुपपादयति - **भगवन्निति** । अभयहेतुत्वेन आत्मानं विशिनष्टि, त्वया दर्शितमभयं निर्वाणमानन्दरूपं (मात्रं) ब्रह्म प्रविष्टः तदनुभवमग्न इत्यर्थः ॥५॥

यदुक्तं "किं भूयः श्रोतुमिच्छसि" इति (भाग.12-5-13) तत्र सिद्धोऽहं न किञ्चित् श्रोतुमिच्छामि किन्तु अनुज्ञां देहीत्याह - **अनुजानीहीति** । हे ब्रह्मन्! वाचं यच्छामि मौनं बिभर्मि, मुक्ता कामा आशया तद्वासनाश्च यस्मात्तच्चेत अधोक्षजे निवेश्यासून् प्राणान् विसृजामि तदर्थं मामनुजानीहि ॥६॥

पुनः सिद्धार्थतामेव आविष्करोति - **अज्ञानमिति** । ज्ञानमुपदेशजन्यं विज्ञानं भगवदनुभवात्मकं तन्निष्ठया अज्ञानं देहात्मभ्रमस्वतन्त्रात्मभ्रममूलं निरस्तं भवता क्षेमं केवलसुखरूपं भगवत पदं स्वरूपं यतो दर्शितम् ॥७॥

**इतीति** । तं राजानं अनुज्ञाय अनुज्ञाप्य नरदेवेन राज्ञा पूजित भिक्षुभि मुनिभि सह जगाम ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

श्रीनारायणानुग्रहेण परीक्षितो देहवियोगलक्षणं मरण जनमेजयस्य पितृभक्तिप्रदर्शनाय सर्पयाग शक्तस्य च शक्रस्य स्वविमानपातोपेक्षां कथयत्यस्मिन्नध्याये । तत्रादौ परीक्षित शुकानुज्ञानदानप्रार्थनाप्रकार तत्कृमाह - **एतदिति** । एतत्पुराणं निखिलं पूर्णमात्मानं पश्यतीति निखिलात्मदृक् तेन समस्तस्वामिदृशा वा ॥१॥

सिद्धः सम्पादितपुरुषार्थदहः ॥२॥

दीनेष्वनुग्रह इति यत्तदिदम् ॥३॥

को ऽयमनुग्रह इति तमाह - **पुराणेति** ॥४॥

भयाभावे निमित्तमाह - **प्रविष्ट इति** । निर्वाणमानन्दं प्राकृतशरीररहित वा ॥५॥

कामानामाशयः शयनं यस्मात्तच्चेतो निगृह्याऽधोक्षजे प्रवेक्ष्ये ॥६॥

क्षेमं मङ्गलं 'क्षेमो ना प्राप्तरक्षाया मोक्षेप्यस्त्री तु मङ्गले' इति यादव ॥७,८॥

**परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना ।**
**समाधाय परं दध्यावस्पन्दासुर्यथा तरुः ॥९॥**

**प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः ।**
**ब्रह्मभूतो महायोगी निःसङ्गश्छिन्नसंशयः ॥१०॥**

**तक्षकप्रहितो विप्राः क्रुद्धेन द्विजसूनुना ।**
**हन्तुकामो नृपं गच्छन् ददर्श पथि काश्यपम् ॥११॥**

**तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् ।**
**द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥१२॥**

**ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना ।**
**बभूव भस्मसात् सद्यः पश्यतां सर्वदेहिनाम् ॥१३॥**

**हाहाकारो महानासीद् भुवि खे दिक्षु सर्वतः ।**
**विस्मिता ह्यभवन् सर्वे देवासुरनरादयः ॥१४॥**

**देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः ।**
**ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥१५॥**

**जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् ।**
**था जुहाव सक्रुद्धः सर्पान् सत्रे सहद्विजैः ॥१६॥**

**श्रीध० परीक्षिदिति।** आत्मना बुद्ध्या आत्मानं मन आत्मनि प्रत्यक्प्रकाशे समाधाय परमात्मानं दध्यौ। अस्पन्दासुः लीनप्राणः यथा नु तरुः स्थाणुः ॥९॥

तमेव विशिनष्टि - **प्रागिति।** प्राक्कूले प्रागग्रे बर्हिषि दर्भे ॥१०॥

तदेवं ब्रह्मभूते तस्मिन्, तक्षकागमनादिकं पिष्टपेषणमिवाभवदिति दर्शयति **तक्षक** इति त्रिभिः। हे विप्राः ! ॥११॥

**तमिति।** तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनाय आगच्छन्तं, तत्र मार्गे स्वालीढवटवृक्षस्य भस्मीभूतस्य पुनरंकुरादिक्रमेण उत्थापनाद् विषहारिणं तदपेक्षितद्रविणैः संतर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितस्सन् अदशत् ॥१२॥

तच्च पुत्रकृत्यमिव जातमित्याह - **ब्रह्मभूतस्येति** ॥१३॥

तत्र क्षणं सर्वेषां दुःखं च ततः परमुत्सवं चाह द्वाभ्याम् - **हाहाकार** इति ॥१४,१५॥

---

1 HV ब्रह्म 2 AB क॰ 3 HV ॰रूप्यद॰ 4 HMMaV अ॰ 5 W तदाऽजुहाव 6 ABGJW नागान् 7 W ॰महाद्विजैः 8 ABJ omit मार्गे

प्रासंगिकमाह **जनमेजय** इत्यादि [1] सत्रे सर्पाभिचारसत्रे द्विजैः सह वर्तमानो यथा - [2] **यथावदाजुहाव जुहावेति** वा। [3] सर्वसर्पाह्वाने कारणमाह। संक्रुद्ध इति ॥१६॥

**वीर० परीक्षिदपि** इति। आत्मनि परमात्मनि, आत्मानमात्मनैव सम्यगाधाय परमात्मशेषतैकरसं स्वात्मानमेव ध्यात्वेत्यर्थः ॥९॥

गङ्गातीरे प्रागग्रदर्भेषु उदङ्मुख आसीन यथा तरु तद्वदस्पन्दासु तिरोहितसर्वेन्द्रियव्यापार निस्सङ्ग देहतदनुबन्ध्यभिमान-रहितः छिन्नाः संशयाः देहात्मजीवपरमात्मभेदाभेदादिसंशयाः येन स , महायोगी महासमाधियुक्त ब्रह्मभूत संशुद्धावस्थः ब्रह्मशब्दो मुक्तावस्थ जीवपरः मुक्तोऽभवदिति यावत् ॥१०॥

तदा हे विप्राः ! क्रुद्धेन द्विजसूनुना, प्रचोदितः तक्षक नृपं हन्तुकामो गच्छन् पथि काश्यपं ददर्श ॥११॥

तं विषचिकित्सया परीक्षिद्रक्षणेन (निर्धार्य तत्) द्रव्यार्जनाय गच्छन्त स्वालीढस्य वृक्षस्य भस्मीभूतस्य पुनरङ्कुरादि क्रमेणोत्पादनात् विषहारिणं तदपेक्षितद्रविणैः मन्तर्प्य निवर्त्य द्विजरूपेण तिरोहित सन् अदशत् ॥१२॥

निर्जीवस्य शरीरस्य दंशनेन भस्मीकरणं पुत्रकृत्यमिव जातमित्याह - **ब्रह्मभूतस्येति**। मुक्तावस्थां प्राप्तस्य राजर्षे देहः सर्वदेहिनां पश्यतां सतां सद्य एव गरलाग्निना भस्मसादभवत् ॥१३॥

तत् क्षणं सर्वेषां दुःखं, ततः परमुत्सवश्चाह - [4] द्वाभ्याम् **हा हाकार** इति। भुवि खे आकाशे सर्वत सर्वासु दिक्षु ॥१४॥

[5] **देवदुन्दुभयः** इति। स्वदनेन [5] ध्वनु ॥१५॥

प्रासङ्गिकमाह - **जनमेजय** इत्यादिना। तदा सत्रे क्रोधेन प्रारब्ध सर्पाभिचारयागे सर्पानाजुहाव मन्त्रैराचकर्ष सर्वसर्पाह्वाने कारणं सङ्क्रुद्ध इति ॥१६॥

**विज०** अस्पन्दासुः निश्चलेन्द्रिय विषयव्यापारशून्येन्द्रिय इत्यर्थ ॥९॥

ब्रह्मणि भूतः ॥१०॥

हे विप्राः!॥ ११,१२॥

अहिगरलाग्निना सर्पविषाग्निना ॥१३-१५॥

---

A B J omit सत्रे . 2 A B J omit यथावत् . 3 H V सर्पाह्वाने 4 T W omit द्वाभ्याम् 5-5 T W omit

कथान्तरमारभ्यते - जनमेजय इत्यादिना ॥१६॥

सर्पसत्रे समिद्धेऽग्नौ[1] दह्यमानान् महोरगान् ।
दृष्ट्वेन्द्रं[2] भयसंविग्नः तक्षकः शरणं ययौ ॥१७॥

अपश्यंस्[3]तक्षकं[3] तत्र[4] राजा पारीक्षितो द्विजान् ।
उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥१८॥

तं गोपायति[5] राजेन्द्र! शक्रश्शरणमागतम् ।
तेन संस्तम्भितस्सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥१९॥

पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः ।
सहेन्द्रस्तक्षको विप्राः नाग्नौ किमिति पात्यते ॥२०॥

तच्छ्रुत्वाऽऽजुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे ।
तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥२१॥

इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः ।
बभूव सम्भ्रान्तमतिः सविमानस्सतक्षकः ॥२२॥

[illegible] ।वमानेन सहतक्षकमम्बरात् ।
विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥२३॥

नैष त्वया मनुष्येन्द्र वधमर्हति सर्पराट् ।
अनेन पीतममृत[6]मतोऽयमजरामरः ॥२४॥

**श्रीध०** कस्मात्तक्षको न दह्येतेत्युक्ताः सन्तो द्विजा ऊचुः - **तमिति**। तेनेन्द्रेण। असौ सर्पः ॥१७-१९॥

**पारीक्षित** इति। ऋत्विजः[7] प्रत्याह सहेन्द्र इन्द्रसहितः किमिति न पात्यते ॥२०॥

तद्राज्ञो वचः श्रुत्वा आजुहुवुः -**तदिति** साक्षेपमाह्वानं दर्शयति - **तक्षकेति**। इहाग्नावाशु पतस्व। मरुत्वता मरुद्गणवतेन्द्रेण सह ॥२१॥

---

1 ABGJ °ग्नौ . 2 HV सर्पं अहिः . 3-3 HV °नागत . M.Ma नपश्यत्त° . 4 HV तत्र . 5 M.Ma हन्त . 6 ABGJ °ममृत अ° . MMa अमाजन° .
7 HV प्रति प्रा°

इतीति। ब्राह्मणैरुदिताक्षेपैः परुषवाक्यैः ॥२२॥

तमिति। तं तक्षकं अंगिरसः पुत्रो बृहस्पतिः प्राह ॥२३,२४॥

वीर० सर्पसत्र इति। समिद्धे प्रज्वलिते दह्यमानान् दृष्ट्वा तक्षकाख्यः सर्पः इन्द्रं शरणं ययौ ॥१७॥

अपश्यन्निति। पारीक्षितः परीक्षितः पुत्रः तक्षकमपश्यन् उवाच। उक्तिमेवाह[1] तक्षक इति ॥१८॥

इत्थं पृष्टाः प्राहुः विप्राः, किमिति? हे राजेन्द्र! तं तक्षकं शरणं गतं शक्रः[2] इन्द्रः गोपायति रक्षति[3] तस्मात्तेन शक्रेण संस्तम्भितः निवारितोऽसौ तक्षकः सर्पोऽग्नौ न पतति ॥१९॥

इति विप्रवचः श्रुत्वा पारीक्षित उदारधीः विपुलबुद्धिः पुनः ऋत्विजः प्राह तदेवाह[4] - सहेन्द्र इति। हे विप्राः! इन्द्रसहितः तक्षकः किमिति न पात्यते ॥२०॥

तत्पारीक्षितोक्तं श्रुत्वा विप्राः ऋत्विजः मखे यागे सहेन्द्रं तक्षकमाजुहुवुः आह्वान प्रकारं दर्शयति - तक्षकेति। हे तक्षक, मरुत्वता मरुद्गणावृतेनेन्द्रेण सहाऽग्नावाशु[5] पतस्वेति ॥२१॥

इत्थंभूतैः ब्राह्मणोदिताक्षेपैः ब्राह्मणोक्तपरुषवाक्यैः सविमानः सतक्षकः स्थानात् प्रच्यावितः सम्भ्रान्त मतिः भीतचित्तो बभूव ॥२२॥

तमिति। तमिन्द्रमम्बरात्पतन्तमवलोक्याङ्गिरसः पुत्रो बृहस्पतिः राजानं जनमेजयं प्राह ॥२३॥

तदाह चतुर्भिः[6] - नेति। हे मनुष्येन्द्र! एष सर्पराट् तक्षकः त्वया वधं नार्हति न वध्य इत्यर्थः। तत्र हेतुः अनेन तक्षकेण ॥२४॥

विज० तत्र यज्ञे कुण्डाग्नौ ॥१७-१९॥

हे विप्राः पात्यतामिति शेषः ॥२०॥

मरुत्वता मरुद्भिर्युक्तेन ॥२१॥

ब्रह्मोदिताक्षेपैः ब्राह्मणोत्कर्षणमन्त्रवचनैः ॥२२॥

आङ्गिरसोऽङ्गिरोगोत्रप्रभवः किमिति अत्र इन्द्रेणोपेक्षाकारि स्वपातेन हि इन्द्रस्य ब्राह्मणेभ्योऽभिभवो भवेदेवोत्तमत्वादिति शङ्का न कार्या, जनमेजयस्य ससन्तानोद्भवत्वेन तत्प्रीतिकामेनेन्द्रेण इय मुपेक्षा कृता 'स्वसन्तानोद्भवं कीर्त्या याजयन् जनमेजयम्।

---

[1] TW उक्त. [2] TW शक्रः. [3] TW omit रक्षति [4] TW omit तदेवाह [5] TW omit आशु, [6] TW omit चतुर्भिः

शक्तोप्यशक्तवद्धाष्टुरिन्द्र आसीदुपेक्षकः ॥ एवमेव ऋषीणाञ्च कीर्तिं योजयताऽमुना । कृतोपेक्षा महेन्द्रेण किमु विष्णुः परात्परः ॥ तस्माद्विष्णोरशक्यं न भूतभव्यभवत्स्वपि । न चानिष्टं गुणैरेव पूर्णो नारायणस्सदा ॥" (वामने) इति ॥२३॥

अथ तस्मात् ॥२४॥

**जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा ।**
**[1]राजं स्ततोऽन्यो नान्यस्य[1] प्रदाता सुखदुःखयोः ॥२५॥**
**सर्प[2]चो[3]रादि ग्रहस्त्यम्बु [4]क्षुत्तृड्व्याध्यादिभिर्नृ[5]प! ।**
**पञ्चत्वमृच्छते जन्तुः भुङ्क्ते ह्यारब्धकर्म तत् ॥२६॥**

**तस्मात् सत्रमिदं राजन् संस्थीयेताभिचारिकम् ।**
**सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥२७॥**

**[6]सूत उवाच[6]**

**इत्युक्तः स तथेत्याह महर्षेर्मानयन् वचः ।**
**सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥२८॥**

**श्रीध०** भवतु नामाजरामरः तथाऽपि पितृमारकं धक्ष्यामीति चेत्तत्राह - **जीवितमिति**। गतिः परलोकः अतो दुर्मरणनिमित्ता पितुर्दुर्गतिरनेन कृतेत्यपि न शङ्कनीयमित्यर्थः ॥२५॥

**कथमन्यः** सुखदुःखप्रदाता नास्ति सर्पादीनामुपलभ्यमानत्वादिति चेत्तत्राह । **सर्पेति** सर्पादिना जन्तुः पञ्चत्वं मृत्यु मृच्छते ऋच्छति प्राप्नोतीति यत्[7] तदारब्धं कर्मैव भुङ्क्ते। स्वकृतकर्मप्रयुक्ता एव सर्पादयो न स्वतन्त्रा इति भावः ॥२६॥

**तस्मादिति**। संस्थीयेत समाप्यताम्। आभिचारिकं [8]हिंसादिफलकम्। दिष्टं प्राचीनं कर्म।अतः सर्पादृष्टप्रयुक्तस्य तवाप्ययं नापराध इति भावः ॥२७॥

**इतीति**। वाक्पतिं बृहस्पतिम् ॥२८॥

**वीर०** पितृघातुकतक्षकविषयक्रोधशान्तये तत्त्वमुपदिशति - **जीवित मिति**। जन्तोः प्राणिनः गतिः स्वर्गनरकादिगतिश्च

1-1 HV राजस्तोऽन्यो नास्त्यस्य, MgMa राजस्तेन विना नान्य 2 ABGJ चौ 3 ABGJ विद्युदम्ब 4 ABGJ भक्त्क आ°, MMa भक्ष्ते. आ W भक्षते प्रा° 5 HV च। 6-6 HMMaVW omits 7 ABJ omit कृत 8 ABJ °साफलम्

अतो हे राजन्, तेन स्वकर्मणा विना सुखदुःखप्रदः नान्योऽस्तीत्यर्थः[1] ॥२५॥

नन्वपरोक्षं तक्षकेण[2] मत्पिता दग्धो दृष्टः न तु कर्मणेत्यत आह **सर्पेति**। सर्पादिभिः जन्तु मरणमृच्छति प्राप्नोति इति यत्तदारब्धं कर्मैव भुङ्क्ते स्वकृतकर्मप्रयुक्ताः सर्पादयो न स्वतन्त्रा इति भावः ॥२६॥

**तस्मादिति**। यत एवं तस्माद्धेराजन्, इदमाभिचारिकं सत्र संस्थीयेत समाप्यतां, वृथा निरपराधाः सर्पा दग्धा, कुतः? हि यस्माज्जनैर्दिष्टं प्रारब्धमेव भुज्यते ॥२७॥

**इतीति**। स जनमेजयः महर्षेर्बृहस्पतेर्वचो मानयन् तथेत्याह, सर्पसत्रं[3] समाप्यतां इत्याह - सर्पसत्रादिति। वाक्पतिं, बृहस्पतिम् ॥२८॥

**विज०** मरणं देहवियोगलक्षणं, गतिः परलोकावाप्तिलक्षणा, स्वेन स्वतन्त्रेण हरिणैवोद्बोधितेन[4] स्वानुष्ठितेन[4] कर्मणा तेन स्वकर्मोद्बोधकेन हरिणा विना सुखदुःखयोः प्रदाताऽन्यो नास्ति ॥२५॥

कर्मणः कारणत्वे सर्पादिना मृतो विष्णुमित्र इति कथमुपपद्येतेत्याशङ्क्य तेऽपि कर्म निमित्तीकृत्य कारणमिति भावेनाह - **सर्पेति**। आदिशब्देन वृक्षादिभ्यः पतनं गृह्यते, सुखादिभोगहेतुत्वाच्च कर्म प्रधानकारणमित्याह भुङ्क्त इति ॥२६॥

फलितमाह - **तस्मादिति**। संस्थीयेत समाप्तं भवतु आभिचारिकं जनोपद्रवकारकं कर्म एकस्यापराधेन अनपराधिबहुजननाशेन पापमेव स्यादिति भावेनाह - सर्पा इति। ननु, तज्जातित्वात् तक्षकापराध एषामपराधः तस्मादनागसो न स्युः "एकः पापानि कुरुते फलं भुङ्क्ते महाजन" इत्याशङ्क्य तक्षकस्याप्यपराधो नास्ति, दैवेन तद्दर्शनेन स्वकृतकर्मपूर्वकेण परीक्षितो मरणस्य क्लृप्तत्वादिति भावेनाह, जनैरिति। दिष्टं दैवकृतं कर्मफलम् ॥२७॥

इत्यादि युक्तिपूर्वकेण वचसा वाक्पतिं बृहस्पतिं "वाग्वै बृहती" (वार्तिक. Under अष्टा 6.1.157) इति श्रुतेः। "तद्बृहतोः करपत्योश्चोरदेवतयो" रिति सुट्तलोपश्च ॥२८॥

सैषा विष्णोर्महामाया[5] बाध्यबाधक[5]लक्षणा।
यया[6] मुह्यन्त्यसावात्मा[6] भूतेषु गुणवृत्तिभिः ॥२९॥

---

1 TW omit इत्यर्थः 2 TW omit मत् 3 TW omit सर्प 4-4 A omits 5-5 A B G J बाध्यया:लक्षणा यया H V बाध्यया बध्यलक्षणा
6-6 A.B.G.J मुह्यन्त्यथैवात्मभूता H V यया मुह्यन्त्यात्मभूता

न यत्र दु[1]र्भाव्यतया वि[2]राजिता, मायाऽऽत्म[3]वादेऽसकृदात्मवादिभिः ।
न य[4]द्विवादो विविधस्तदाश्रयो, मनश्च सङ्कल्पविकल्पवृत्ति यत् ॥३०॥

न यत्र सृज्यं सृजतोभयोः परं, [5]श्रेयश्च जीवस्त्रिभिरन्वित[6]स्त्वयम् ।
तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन् विरमेत [7]तन्मुनिः ॥३१॥

परं पदं वैष्णवमामनन्ति तद्, यन्नेति नेतीत्यतदुत्सिसृक्षवः ।
विसृज्य दौरात्म्यमनन्य सौहृदा हृदोपगुह्यावसितं समाहितैः ॥३२॥

**श्रीध०** ननु कथं विदुषामप्येवं संमोहो यतो ब्रह्मकोपात्परीक्षितो मृत्युर्जनमेजयकोपात्सर्पाणामित्यादि तत्राह। **सैषेति**। तस्या महत्त्वं दर्शयति। अलक्षणा न लक्ष्यत इत्यलक्षणा अप्रतर्क्येत्यर्थः। काऽसावित्यत आह। ययाऽस्य विष्णोरेवात्मभूता आत्मांशभूताः प्राणिनो गुणवृत्तिभिः क्रोधादिभिः सह भूतेषु देहेषु मुह्यंति बाध्यबाधकतां व्रजन्तीत्यर्थः। ननु, श्रवणादिना बाधितया तया कुतो मोहः स्यात्तत्राह - अबाध्यया बाधितुमशक्यया ॥२९॥

कथं तर्हि मायातत्कार्य निवृत्तिरित्याशङ्क्य श्रीविष्णुस्वरूपनिरूपणपूर्वकं तद्भजनात् सर्वानर्थनिवृत्तिरिति शास्त्रार्थमुपसंहरति **न यत्रेति** पञ्चभिः। दम्भीति या माया कपटवानयं पुमानित्येवम्भूतायां बुद्धावसकृदुल्लिख्यमाना या मायेत्यर्थः। साऽऽत्मवादे क्रियमाणे आत्मवादिभिर्यत्राभया न विराजिता न प्रकाशिता किन्तु भीतेव स्वकार्यं मोहादिकमकुर्वती कथंचिद्वर्तत इति प्रतिपादितेत्यर्थः। तदुक्तम्। 'तस्मै नमो भगवते वासुदेवाय धीमहि। यन्मायया दुर्जयया मां ब्रुवन्ति जगद्गुरुम्। विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया। विमोहिता विकत्थन्ते ममाहमिति दुर्धियः'। (भाग.2-5-12,13) इति। किञ्च यद्यस्मिंस्तदाश्रयो मायाश्रयो विविधो विवादोऽपि नास्ति। विशेषविषयत्वात् विवादानां तस्य च विशेषातीतत्वादिति भावः। संकल्पविकल्पावृत्तयो यस्य तन्मनोऽपि यत्[8] यत्र नास्ति। संकल्पविकल्पानामपि विशेषविषयत्वात् ॥३०॥

किञ्च **नेति**। सृज्यं कर्म सृजता कारकवर्गेण सहोभयोः सृज्यस्रष्ट्रोः परं साध्यं श्रेयः फलमपि। अतस्त्रिभिः सृज्यस्रष्टृफलैरन्वितो जीवश्चाहंकारात्मको यत्र नास्ति। अत एव उत्सादितौ निरस्तौ बाध्यबाधकौ यस्मिंस्तदेतत्

---

1 A.B.G.H.J.V दम्भीत्यभया, 2 MMa 'राजते, W 'भाव्यते, 3 H V वादेन कृतात्म', 4 W 'कारो 5 W श्रयश्च, 6 A.B.G.J 'स्त्वात्म्, 7 A.B.G.J 'त् स्वयं मुनिः 8 A.B.J omit यत्

स्वयमात्मस्वरूपमित्यर्थः। तत्तस्मात्, ऊर्मीन् अहंकारादीन् निषिध्य मुनिः[1] विरमेत्। विशेषेण क्रीडेदित्यर्थः ॥३१॥

यतस्तद्वैष्णवं पदमामनन्तीत्याह - **परमिति**। यदेतत्तदेव परं वैष्णवं पदं स्वरूपमामनन्ति। के ? अतत् आत्मव्यतिरिक्त मुत्सिसृक्षवः त्यक्तुमिच्छवः। यतोऽनन्यसौहृदाः नास्त्यन्यस्मिन् सौहृदं येषां ते, कुतः दौरात्म्यं देहाद्यहंभावं विसृज्य देहेऽहं - काराभावादन्यत्र सौहृदं नास्ति, अतः त्यक्तुमिच्छव इत्यर्थः। कथं नेति नेतीत्येवम्। अत्र विद्वदनुभवमपि प्रमाणयति। हृदोपगुह्य ध्यानादिना ततः समाहितैः अवसितं निश्चितम्। यद्वा अवसितमवबद्धं आत्मतया गृहीतमित्यर्थः ॥३२॥

**वीर०** ननु, कथं विदुषामप्येवं सम्मोहनं यतो ब्राह्मणक्रोधात्[2] परीक्षितो मृत्युः, जनमेजयकोपाच्च सर्पाणामित्यदि तत्राह - **सैषेति**। बाध्यबाधकेति भावप्रधानो निर्देशः बाध्यत्वबाधकत्वे लक्षयति आपादयति तथा, तत्त्वं न साक्षात् किन्तु जीवमोहनद्वारा इत्यभिप्रेत्याह - ययेति। यया मायया निदानभूतया, भूतेषु, क्रीडाविषयेषु[3] गुणवृत्तिभिः क्रीडादिभिः[4] असावात्मा मुह्यति ॥२९॥

विष्णोर्महामायेति सम्बन्धोक्त्या तस्यापि तया मोहादि शङ्कां वारयन् समाधिदशायां अनुसन्धेयं परमात्मस्वरूपमाह - **न यत्रेति**। आत्मवादिभिः परमात्मस्वरूपनिरूपकैः सकृदप्यात्मवादे परमात्मस्वरूपनिरूपणे क्रियमाणे दुर्भाव्यतया दुर्विभाव्यत्वेन न विभाव्यते न स्वकार्यकरणेनावतिष्ठते सा माया यत्र परमात्मस्वरूपे न स्वकार्यक्षमेति किं पुनर्वक्तव्यमित्यर्थः। किं च यत्रात्र परमात्मनि तदाश्रयः मायाश्रयः मायाप्रयुक्तमोहमूलकः त्रिविधो विकारः कुतर्करूपो नास्ति तस्य तदविषयत्वादिति भावः। यत्रात्र सङ्कल्पविकल्पाभ्यां वर्तत इति तथा, तन्मनश्च नास्ति, न तद्विषयीकरोति निवृत्तसङ्कल्पविकल्पयोगपरिशुद्ध मनोविषयत्वादिति भावः ॥३०॥

**किञ्च नेति**। सृज्यं शरीरं सृजतीति सृजत् कर्म तेन सह सृज्यं यत्र नास्ति कर्म तदायत्तं शरीरं च यत्र नास्तीत्यर्थः। उभयोः कर्म तत्कल्पितदेहयोः परं ताभ्यां साध्यं सुखदुःखादिरूपं फलं च यत्र नास्तीत्यर्थः। वचश्च देवमनुष्यादिशब्दजातं च यत्र न वर्तते तदित्थंभूतं परमात्मस्वरूपमित्यर्थः। ततः किमत आह - जीवः स्वयं त्रिभिरन्वितोऽपि गुणत्रयवश्योऽपि तन्मुनिः तादृशपरमात्मस्वरूपमननपरः एतत्पृथिव्याद्यचिनत्वं निषिध्य परिहृत्य ऊर्मीन् अशनायापिपासा शोकमोहजरामृत्यून् च निषिध्य विरमेत् समाहितमनस्कतया निवृत्तव्यापारो भवेत् उत्सादितबाध्यबाधकर्मिति क्रियाविशेषणं परस्परं उद्भवाभिभवहेतुभूतं गुणत्रयं यथोत्सादितं स्यात्तथा निषिध्येत्यर्थः ॥३१॥

---

1 B H J V omit मुनि । 2 T W कोपात् 3 T W omit क्रीडा 4 T W omit क्रीडादिभि

किञ्च तदेव वैष्णवं पदं परमामनन्ति वैष्णवमित्यभेदसम्बन्धे विशेषणं परं प्रकृतिपुरुषविलक्षणं परं सर्वोत्कृष्टं वा, पद्यत इति पदं स्वरूपं किं तत् यन्नेति नेति प्रकृतिप्राकृत जडाजडवस्तु यादृशं तादृशं न भवतीत्यत उत्सिसृक्षवः तद्व्यतिरिक्त चेतनाचेतनं व्यावर्तयितुमिच्छवः दौरात्म्यं रागद्वेषादिकं अहममाभिमानं वा विसृज्य अनन्यसौहृदाः नान्यस्मिन् भगवद्व्यतिरिक्ते सौहृदं येषां ते, हृदोपगुह्य ध्यानादिना संश्लिष्य समाहितैः समाधिनिष्ठैः अवसितं निश्चितम् ॥३२॥

विज० सुखादे जीवादृष्टमेव मुख्यं कारणं नान्यदित्याशङ्कां परिहरति - सैषेति। याऽदृष्टोद्बोधिका सैषा महामाया महत् अपरिमितं माहात्म्यं तस्य विष्णोः तस्मात् न दुर्गा अत्रोच्यते, बाध्ये स्थितत्वात्। बाध्यात्मत्वेन जानाति सत्त्वादिगुणवृत्तिभिः कारणैः विषयवृत्तिभिः, व्यापारैरिति शेषः ॥२९॥

मुह्यन् आत्मा परमात्मेति शङ्कामपाकरोति - नेति। आत्मवादिभिःउपनिषद्विचारचतुरैः पुरुषैः असकृत् बहुवारमात्मवादे परमात्मविचारे कृते सति मायामोहनशक्तिः यत्र हरौ न विराजते मोहकत्वेन न प्रवर्तते अन्यैर्दुर्विभाव्यतया स्थिता उपक्रमादि तात्पर्यलिङ्गैः क्रियमाण एव विचारो निर्णायको न तु यथाप्रतीतार्थ इत्याह, नेति। विविधो यद्विवादः तदाश्रयो ब्रह्मविषयो न भवति 'अद्वाचानभ्युदितम्" (केन.उ -1-4) इति श्रुतेः। तर्हि मनन समर्थस्य मनसो विषयत्वं स्यादत्राह - मनश्चेति। चोप्यर्थः मनोऽपि यद्ब्रह्म न विषयीकरोति। "यन्मनसा न मनुते" (केन. उ. 1-6) इति श्रुतेः सङ्कल्पविकल्पाभ्यां वृत्तिर्यस्य तत्तथा, अनेन मनसोऽस्थिरत्वेन विषयीकरणसामर्थ्यं नास्तीति सूचितम् "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" (ऐत. उ.1-1-2) इति श्रुतेः। वाचो विषयो नेति किं वक्तव्यमिति कैमुत्यन्ययोप्यदर्शि। अत्र वागादिशब्देन तदभिमानिदेवता व्यपदिश्यन्ते, तासां जडत्वेन प्रवृत्त्यनुपपत्तेः ॥३०॥

सृज्यं विश्वं यत्र न वर्तते, बाधकतयेति शेषः। उभयोर्देवासुरयोः परं विलक्षणं आनन्दलक्षणं श्रेयः सृजता ददता येन वैषम्यनैर्घृण्ये, नाप्येते इति शेषः। त्रिभिः सत्त्वादिगुणैः धर्मार्थकामैर्वा अन्वितो जीवः स्वयं च यत्र न कञ्चन, विशेषमापादयतीति शेषः। यस्तदेतत् ब्रह्म जानाति तन्मुनिः स ज्ञानी षडूर्मीन् निषिध्य विरमेत, कृत्यादिति शेषः। कीदृशं ब्रह्म? उत्सादितबाध्य बाधकं उत्सादितौ बाध्यबाधकौ येन तत्तथा ॥३१॥

किन्नामधेयं ब्रह्मेति तत्राह- परं पदमिति। यन्नेति नेति इति अतदुत्सिसृक्षवो विचक्षणाः यदेवं स्थितं तद्वैष्णवं पदमामनन्ति वदन्तीत्यन्वयः। कीदृशम्? तस्मिन्नेव समाहितैः करणैरवसितं सम्यग्वशीकृतम् ॥३२॥

[1] त एतदधिगच्छन्ति विष्णोर्यत् परमं पदम् ।
अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥३३॥

अतिवादांस्तितिक्षेत नावमन्येत कञ्चन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥३४॥

नमो भगवते तस्मै कृष्णायाकुण्ठमेधसे ।
यत्पादाम्बुरुहध्यानात् संहितामध्यगामिमाम् ॥३५॥ *

(विजयध्वजरीत्या षष्ठोध्याय आरभ्यते)

शौनक उवाच

पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः ।
[2] वेदाश्च कतिधा व्यस्ता एतत्सौम्याभिधेहि नः ॥३६॥

सूत उवाच

[3] समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः ।
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ॥३७॥

यदुपासनया ब्रह्मन् योगिनो मलमात्मनः ।
[4] द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥३८॥

ततोऽभूत्त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट् ।
यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥३९॥

[5] शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् ।
येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥४०॥

श्रीध० एतत्प्राप्तावधिकारिणो दर्शयति। त एतदिति। देहजमहमिति। गेहजं ममेति ॥३३॥

तत्र प्राप्त्युपायमाह - अतिवादानिति ॥३४॥

शास्त्रसमाप्तौ गुरुं प्रणमति - नम इति। कृष्णाय व्यासाय। [6] अध्यगामधीतवानस्मि ॥३५॥

---

1 MMa तदेतद् * अत्र विजयध्वजरीत्या पञ्चमाध्याय समाप्त 2 H M Ma V ॰दा वे 3 H V हृदा॰ 4 H V छित्वा 5 H V श्रोत्रोऽपि MMa श्रोते वा W श्रोत्रेण 6 ABJ ॰मधिगतवा॰

इमां संहितां अध्यगामित्युक्तं तत्र पुराणसंहिताविभागं विशेषतो बुभुत्सुः वेदविभागमपि प्रसङ्गात्पृथक् पृच्छति। **पैलादिभिरिति**। हे सौम्य ! ॥३६॥

तत्र प्रथमं वेदाविर्भावप्रकारमाह **समाहितात्मन** इत्यष्टभिः। ब्रह्मणो हृदि य आकाशः तस्मान्नादोऽभूत्। यः कर्णपुटपिधानेन श्रोत्र[1]वृत्ति निरोधात् अस्मदादिष्वपि विभाव्यते वितर्क्यते ॥३७॥

प्रसङ्गान्नादोपास[2]नया मोक्षफलमाह - **यदिति**। यस्य नादस्य उपासनयाऽऽत्मनो मलं धूत्वा[3] अपोह्य कथम्भूतं मलं, तदाह। द्रव्यमधिभूतं, क्रियाऽध्यात्मं कारकमधिदैवं एवं त्रिधाभूता आख्या यस्येति तथा तत् ॥३८॥

**तत इति**। ततः नादात् [4]त्रिवृत् त्रिमात्रः[4] कंठोष्टादिभिः उच्चार्यमाणस्य ओंकारस्य अक्षरसमाम्नायान्तर्भावात् सूक्ष्मतया तं विशिनष्टि। अव्यक्तः प्रभवो यस्य सः। तदेवाह। स्वराट् स्वत एव हृदि प्रकाशमानः। तमेव कार्येण लक्षयति यत्तदिति। नपुंसकत्वं लिङ्गशब्दविशेषणत्वात्। लिङ्गं गमकम् ॥३९॥

कोऽसौ परमात्मा ? तमाह। **शृणोतीति**। इमं स्फोटमव्यक्तमोंकारम्। ननु जीव एव तं शृणोतु, नेत्याह। सुप्तश्रोत्रे कर्णविधानादिना अवृत्तिकेऽपि श्रोत्रे सति। जीवस्तु करणाधीनज्ञानत्वात् न तदा श्रोता। तदुपलब्धिस्तु तस्य परमात्मद्वारिकैवेति भावः। ईश्वरस्तु नैवम्। यतः शून्यदृक्। शून्येऽपीन्द्रियवर्गे दृक् ज्ञानं यस्य। तथाहि सुप्तो यदा शब्दं श्रुत्वा प्रबुध्यते न तदा जीवः श्रोता लीनेन्द्रियत्वात्। अतो यस्तदा शब्दं श्रुत्वा जीवं प्रबोधयति स यथा परमात्मैव तद्वत्। कोऽसावोंकारः तं विशिनष्टि सार्धेन। येन वाक् बृहती व्यज्यते। यस्य च हृदयाकाशे आत्मनः सकाशात् व्यक्तिरभिव्यक्तिः ॥४०॥

**वीर०** दौरात्म्यं विसृज्येत्युक्त्वा तत्त्यागस्य साधननिष्पादनद्वारा भगवत्प्राप्तिसाधनत्वं सूचितं तत्स्पष्टमेवाह - **एतदिति**। येषां देहगेहजं देहगेहविषयं अहंममेति दौर्जन्यं नास्तीति एते तद्विष्णोः परमं पदं अधिगच्छन्ति उपासनया साक्षात्कुर्वन्ति गत्यर्थाः बुद्ध्यर्थाः यद्वा प्राप्नुवन्ति ॥३३॥

तदेवं बाध्यबाधकभावस्य भागवन्मायाप्रयुक्तत्वं अभिधायाऽथ तदनुप्रसक्तं च परिहृतं तन्मायातितीर्षूणां वृत्तिमाह - **अतिवादानिति**। अतिक्रान्तवादान् विरुद्धवादान् परुषवचांसीति यावत् इमं मर्त्यं देहमाश्रित्य आत्मत्वेन (आत्मीयत्वेन) अभिसन्धाय केनचिदपि वैरं न कुर्यात् ॥३४॥

शास्त्रसमाप्तौ गुरुनमस्कारात्मकं मङ्गलमाचरति - **नम इति**। कृष्णाय कृष्णद्वैपायनाय अकुण्ठमेधसे असङ्गतचितबुद्धये अध्यगां अधिगतवानस्मि ॥३५॥

---

1 A B J omit त्र. 2 A B J 'सकाना'. 3 H V omit धूत्वा. 4-4 A B J omit

**इमां संहितां अध्यगां** इत्युक्तं तत्र पुराणसंहिताविभागं विशेषतो बुभुत्सुः तावत्तन्मूलभूत वेदविभागं पृच्छति शौनक[1] - **पैलादिभिरिति**। वेदाचार्यैः वेदाचारनिरतैः तत्प्रवर्तकैश्च कतिधा व्यक्ताः विभक्ताः एतद्विभागवैविध्यं, नोऽस्मभ्यमभिधेहि ॥३६॥

**इत्थमापृष्टः** तं विभागं विवक्षुः तावत् (यावत्) बादरायणजन्मविभागेनैव प्रवृत्त इति वक्तुं तावद्वेदाविर्भावक्रममाह **अष्टाभिः समाहितेति**। हे ब्रह्मन्! शौनक! भगवति समाहित आत्मा मनो येन तस्य परमेष्ठिनश्चतुर्मुखस्य हृदि य आकाशः तस्मात् नादोऽभूत्[2]। आकाशसंसृष्टवायुपरिणामात्मकप्राणघोष अभूत् आविर्बभूव, नादं विशिनष्टि - यो वृत्तिरोधात् श्रोत्रवृत्तिनिरोधात् विभाव्यते श्रोत्रपिधानात् श्रूयते इत्यर्थः ॥३७॥

किञ्च यस्य नादस्योपासनया योगिनः[3] योगीश्वराः द्रव्यक्रियाकारकाख्यमात्मनो मलं विधूय अपुनर्भवं मोक्षं प्राप्नुवन्ति, ज्ञानोत्पादकत्वात् तदुपासनाया इति भावः। द्रव्यं शरीरं, क्रिया पुण्यापुण्यात्मकं कर्म, कारकं इन्द्रियं, एवं त्रिधा ख्यायते इति तथा देहेन्द्रियतदुभयनिष्पाद्यकर्माख्यं मलमित्यर्थः ॥३८॥

**तत इति**। ततो नादात् त्रिवृदोंकारोऽभवत्प्रथमं साधारणरूपेण प्रतिपन्नः शब्दः प्रणवरूपेण व्यक्तो बभूवेत्यर्थः। त्रिवृत् त्रयाणां अकारोकारमकाराणां वृद्वर्तनं यस्मिन् स, त्रिमात्रो वा। तमेव विशिनष्टि - अव्यक्तप्रभव अयोगिभिर्ज्ञातुमशक्यप्रभवः स्वयमेव राजत इति स्वराट् यत्तद्ब्रह्मणः परमात्मनो लिङ्गं ज्ञापकं वाचकम्। यत्तदिति नपुंसकत्वं लिङ्गविशेषणत्वात् ॥३९॥

कोऽसौ परमात्मेत्यतस्तं वदन् प्रणवस्य तद्वाचकतामाह - **शृणोतीति** सार्धेन। सुप्तश्रोत्रेणेति समस्तं पदं य इमं स्फोटं प्रणवरूपं शब्दं सुप्तश्रोत्रेणाऽपि शृणोति श्रोत्रे पिहिते सत्यपि शृणोतीत्यर्थः। यः श्रोत्रयोर्दृढपिहितयोः सतोरिमं स्फोटं शृणोति स परमात्मैव न तु जीवः तस्य करणायनज्ञानत्वादिति भावः। परमात्मा तु अकरणायनज्ञान इत्याह शून्यदृगिति। शून्येऽपीन्द्रियवर्गे पश्यतीति शून्यदृक् जीवस्य नादोपलब्धिस्तु परमात्मद्वारिकेति भावः। यद्वा प्रणवमेव विशिनष्टि शृणोतीति। शून्यदृगर्थान्तरज्ञान रहितः पिहितकर्णेन विषयान्तरागोचरतया श्रूयमाण इत्यर्थः। येन वाग्व्यज्यते प्रचोदिता मती अभिव्यज्यते यस्यात्मन आकाशो व्यक्तिः शरीरं (स्वरूपम्) यद्वा, येन प्रणवेन वाग्व्यज्यते लौकिकवैदिकराशिः अभिव्यज्यते यस्यात्मनः प्रणवस्वरूपस्य आकाशः हृदयाकाशव्यक्तिः अभिव्यक्तिस्थानम् ॥४०॥

**विज०** अत्र प्रमाणमाह - **तदेतदिति** ॥३३॥

अतिवादान् दुष्टवचनानि ॥३४॥

---

1 W omits शौनक 2 W omits अभूत् 3 W omits योगीश्वराः

**श्रेयः**प्राप्तौ तस्मादिदं प्रकृष्टसाधनमित्याशयेनाह - **नम** इति। श्रीकृष्णचरणारविन्दप्रणतिस्मरणपूर्वकं भागवतपुराणलक्षणसंहिता श्रवणमननादिकं मुख्यसाधनमित्यर्थः ॥३५॥

(विजयध्वजतीर्थग्रन्थेऽत्र पञ्चमोऽध्यायस्समाप्यते)

भगवन्माहात्म्यप्रकटनाय तत्प्रेरितेन चतुर्मुखेन नादादि वेदान्तशब्दराशि मुद्धृत्य अध्यापनेन पुत्रेभ्यो विश्राणनं तच्छिष्येभ्यो विभज्य दानमनुयुगं, पुनरपि तद्विभागं पुराणप्रवर्तनं च निगदति अनेनाध्यायेन। तत्रादौ शौनकः सूतं वेदविभागं पृच्छति **पैलादिभिरिति**। वैपदेन वेदादर्गभिव्यक्तिमूलवेदविभक्तिश्च कथमनेनेति सूचयति - व्यासशिष्यैरित्यनेन । कस्मिन् युगे किं विभक्तवेदान्व्यस्यन् उत अविभक्तानिति । वेदाचार्यैरित्यनेन वेदोपयोगिकल्पप्रणयननिपुणैः इति । महात्मभिरित्यनेन तपोबलात् वेददर्शनसमर्थैरिति। अभिधेहीत्यनेन अन्वर्थनामपूर्वकं वदेति ॥३६॥

तत्रादौ सूचितः सूतः प्रश्नं परिहर्तुं कथामाह - **समाहितात्मन** इति। सं समीचीने निर्दुःखानन्दानुभवे हरावाहित आत्मा मनो यस्य स तथा तस्य ब्रह्मपदस्य अनेकार्थे वृत्तेर्विवक्षितमर्थमाह - परमेष्ठिन इति। शब्दस्य आकाशविशेषगुणत्वेन ततोऽभिव्यक्तिर्युक्तेति सूचयति - हृद्याकाशादिति। तत्सत्त्वे किं प्रमाणम्? अत्राह वृत्तिरोधादिति। स नादः सर्वेन्द्रियवृत्तिस्तम्भाद् वायुवृत्तिनिरोधाच्च विभाव्यते ज्ञायते, योगिभिरिति शेषः ॥३७॥

किममुना नादेन शून्यकल्पेन फलमिति तत्राह - **यदुपासनयेति**। यस्य नादस्य उपासनया योगिनो द्रव्याणि पञ्चभूतानि तन्निर्मितदेहो वा । क्रिया कर्मेन्द्रियं, कारकं ज्ञानेन्द्रियं, एभ्य आख्यातं प्रकाशितं उत्पन्नमिति यावत्, आत्मनो मनसो मलं धूत्वा अपुनर्भवं मोक्षं यान्तीत्यवन्यः । "स्त्रीपुन्नपुंसकात्माऽयं नादो ब्रह्मविनिर्मितः । घण्टादिनादसदृशो मुक्तिस्वर्गादिदो विभुः" ॥ इति वचनादपुनर्भवं तारतम्योपेतं फलमाप्नुवन्तीति भावः ॥३८॥

ततो नादात् घण्टानादानुकारात् त्रीन् अकारोकारामकाराख्यान् वर्णान् वृणोतीति त्रिवृत् ओंकारोऽभूदभिव्यक्तः व्यक्तस्य प्रपञ्चस्य प्रभव उत्पत्तिर्यस्य स तथा, "भूतं भवद्भविष्यदिति सर्व मोंकार एव" (नृसिंह पू. ता.3.4-2) इति श्रुतिः। वर्णपक्षे अव्यक्तस्य हरेः सकाशात् प्रभवो यस्य स तथा, स्वत एव राजतीति स्वराट् स्वयं प्रकाशमानः स्वयं परमात्मानं राजयतीति वा । एतदेवाह - यत्तदिति। यत्तदोंकाराख्यं वस्तु हरेर्लिङ्गं ज्ञापकं "ओं तत्त्ववाची ह्योङ्कारो वक्त्यसौ तद्गुणोततताम्" इति वचनात्। चतुर्मुखव्यावृत्तये परमात्मन इति ॥३९॥

शं ऊनं यापयति दैत्यादिरिति शून्यं परंब्रह्म पश्यतीति शून्यदृक्, स ब्रह्मा परोक्षीयश्च सुप्तः ब्रह्मप्राप्तः स इमं स्फोटं

प्रणवलक्षणं ध्वनिं शृणोति, क इव श्रोतेव भगवानिव, "श्रोता मन्ता" इति श्रुतेः। अनेनास्य सत्त्वे प्रमाणमुक्तं भवति। किञ्च, येनौङ्कारेण वाग्वेदलक्षणा व्यज्यते अकारस्य प्रणवात्मकत्वात् 'अकारो वै सर्वा वाक्' (ऐत. 3.3-6-7) इति श्रुतेः। प्रणवस्य वेदादित्वात् अकारस्यापि सर्वादित्वात् आमेरादिमत्त्वाद्वेति श्रुतेः। आत्मनः परमात्मनः उत्पद्यमान आकाशो यस्य, व्यक्तिः स्थानं "आत्मन अकाशस्सम्भूतः" (तैति 3.2-1-1) इति श्रुतिः। आकाशात् सर्वमुत्पद्यते इति च ॥४०॥

स्वधाम्नो ब्रह्मणस्साक्षात् वाचकः परमात्मनः।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम् ॥४१॥

तस्य ह्यासं स्त्रयो वर्णा अकाराद्या भृगूद्वह।
धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ॥४२॥

ततोऽक्षरसमाम्नायमसृजद् भगवानजः।
अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम् ॥४३॥

तेनाऽसौ चतुरो वेदान् चतुर्भिर्वदनैर्विभुः।
सव्याहृतिकान् सोङ्कारान् चातुर्होत्रविवक्षया ॥४४॥

पुत्रानध्यापयत्तांस्तु ब्रह्मर्षीन्ब्रह्मकोविदान्।
ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यस्समादिशन् ॥४५॥

ते परम्परया प्राप्ताः तत्तच्छिष्यैर्धृतव्रतैः।
चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः ॥४६॥

क्षीणायुषः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य कालतः।
वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः ॥४७॥

अस्मिन्नप्यन्तरे ब्रह्मन् भगवांल्लोकभावनः।
ब्रह्मेशाद्यैर्लोकपालैः याचितो धर्मगुप्तये ॥४८॥

**श्रीध०** किं च **स्वधाम्न** इति। स्वधाम्नः स्वस्याश्रयः कारणं यद्ब्रह्म तस्य, किं च परमात्माशभूतः समस्त

1 MMa गुणानाम॰ 2 HV ततोऽसौ W तेनैताऽसौ 3 W चतुर्वेदान् 4 HV स्तौक्ष॰ मा॰ 5 HV ॰प्राप्ताः 6 A M Ma महर्षिन्ना HV ॰तार्थिवं॰
7 MMa ॰तचोदिता।

**देवतावाचकोऽपीत्याशयेनाह** - स इति। सर्वमन्त्राणामुपनिषद्रहस्यं सूक्ष्मरूपमित्यर्थः। तत्र हेतुः। वेदानां **बीजं कारणं। बीजत्वेऽप्यवि कारितामाह। सनातनं सदैकरूपम्।** तस्य ब्रह्मरूपत्वात् ॥४१॥

इदानीं ततः सर्वप्रपञ्चोत्पत्तिप्रकारमाह - **तस्य हीति**। त्रयस्त्रिसंख्या युक्ता भावा यैरकारोकारमकारैः धार्यन्ते, तत्कारणत्वात्। तानेवाह - गुणाः सत्त्वादयः, नामानि ऋग्यजुस्सामानि। अर्था भूर्भुवःस्वर्लोकाः। वृत्तयो जाग्रदाद्याः ॥४२॥

**तत इति**। ततस्तेभ्यो वर्णेभ्य अक्षरगणं समाम्नायं समाहारम्। तमेवाह। अन्तःस्था यरलवाः। ऊष्माणः शषसहाः। स्वरा अकाराद्या। स्पर्शाः कादयो मावसानाः ह्रस्वदीर्घादिश्च, आदिशब्दात् जिह्वामूलीयादयः, त एव लक्षणं स्वरूपं यस्य तम् ॥४३॥

**तेनेति**। विभुश्चतुर्मुखस्वरूपो भगवान्। असृजदिति पूर्वस्यैवानुषङ्गः। चातुर्होत्रविवक्षया चत्वारो होत्रोपलक्षिता ऋत्विजः चतुर्होतारः, तैरनुष्ठेयं हौत्राध्वर्यवादिकं कर्म चातुर्होत्रं, तद्विवक्षया ॥४४॥

**पुत्रानिति**। पुत्रान् मरीच्यादीन्, तान् वेदान् ब्रह्मकोविदान् वेदोच्चारणादिनिपुणान् ॥४५॥

**त इति**। एवं चतुर्युगेषु प्रायः। द्वापरादौ द्वापरमादिर्यस्य, तदन्त्यांशलक्षणस्य कालस्य तस्मिन्। द्वापरान्ते वेदविभागप्रसिद्धेः, शन्तनुसमकालं, व्यासावतार प्रसिद्धेश्च, व्यस्ता विभक्ताः ॥४६॥

तत्र वेदविभागे[2] हेतुः। **क्षीणायुष इति**। क्षीणायुषो जनान् तर्हि पुरुषबुद्धिप्रभवत्वात् अनादरणीयत्वं स्यादित्याशं - क्याह - हृदिस्थेति ॥४७॥

एवं सामान्यतो वेदविभागक्रममुक्त्वा वैवस्वतमन्वन्तरे विशेषतो निरूपयितुमाह **अस्मिन्नपीति** ॥४८॥

**वीर०** स्वधाम्नः स्वमहिम्नि। प्रतिष्ठितस्य ब्रह्मणः परमात्मनो वाचकः। किञ्च स इति सर्वेषां मन्त्राणामुपनिषदां वेदानां च बीजं कारणं सनातनं इत्यनेन तस्य हृदयाकाशेऽभिव्यक्ति मात्रं न तु उत्पत्तिरित्यभिप्रेतम् ॥४१॥

**तस्येति**। हे भृगूद्वह, तस्य प्रणवस्य अवयवाः त्रयः अकाराद्याः, अकारोकारमकाराः वर्णा आसन् आविर्बभूवुः, यद्वा तस्य प्रणवस्य प्रकृतिभूतास्त्रयो वर्णाः, तान् विशिनष्टि - **धार्यन्ते इति**। **यैरकारादिभिः त्रयो भावा अर्थाः** अनन्यार्ह शेषत्वानन्यशरणत्वानन्यभोग्यत्वरूपाः गुणनाम्नां प्राप्यत्वप्रापकत्वाधारत्वादिगुणप्रतिपादकानां नारायणादिनाम्नां स्वार्थेषु या वृत्तयोऽभिधाश्च धार्यन्ते प्रकाशकतया कारणतया वेति भावः ॥४२॥

---

1 H V °दादय  2 A B J omit वेदविभागे

ततः प्रणवात् अक्षरसमाम्नायं अक्षरसमाहारं असृजत्। अजः चतुर्मुखशरीरकः परमपुरुषः अक्षरसमाम्नायमेव विभज्य विशिनष्टि - अन्तःस्थेति। यरलवा अन्तस्स्थाः, शषसहा ऊष्माणः, अचः स्वराः, कादयो मावसानाः स्पर्शाः, ह्रस्वदीर्घशब्दौ भावप्रधानौ आदिशब्देन प्लुतत्वोदात्तत्वस्वरितत्वादिस्वरधर्मसंग्रहः जिह्वामूलीयोपध्मानीय सङ्ग्रहश्च अन्तः स्थादयो लक्षणं स्वरूपं यस्य तम्। अक्षरसमाम्नायमिति सम्बन्धः ॥४३॥

तेनैवेति। तेनाक्षरसमाम्नायेनैवासौ चतुर्मुखशरीरको विभुश्चतुरो वेदानाविष्कृतवानिति शेषः। ततश्चातुर्होत्रविवक्षया चत्वारो होतारः अध्वर्यूपलक्षिता ऋत्विजः तैरनुष्ठेयं कर्म चातुर्होत्रं, तद्विवक्षया यज्ञप्रकाशनेच्छया इत्यर्थः। सव्याहृतिकान् सप्रणवान् चतुरो वेदान्, पुत्रान् मरीच्यादीनध्यापयत् ॥४४॥

पुत्रानिति। "गति बुद्धि" (अष्टाः1-4-52) इत्यादिना कर्मत्वे द्वितीया। पुत्रान् विशिनष्टि - ब्रह्मकोविदान् वेदोच्चारणादिनिपुणान्। ते तु मरीच्यादयोऽपि वैदिकधर्मोपदेष्टारः स्वपुत्रेभ्यः कश्यपादिभ्यः समादिशन् उपदिदिशुः ॥४५॥

एवं परम्परया तत्तच्छिष्यैः तेषां तेषां शिष्यैः धृतव्रतैः महर्षिभिः चतुर्षु युगेषु प्रतिचतुर्युगपर्यायं प्राप्तास्तत्र प्रतिद्वापरादौ प्रतिद्वापरमादिर्यस्य तत्सम्बन्धितलक्षणकालस्य तस्मिन् द्वापरान्ते वेदविभागप्रसिद्धेः शन्तनुसमकालं व्यासावतारप्रसिद्धेश्च ॥४६॥

कालतः युगधर्मतः क्षीणायुषः अल्पायुष्कान् क्षीणसत्त्वान् अल्पबलान् अल्पबुद्धींश्च जनानवलोक्य व्यस्ता विभक्ता इत्यन्वयः। व्यसनं नामाऽपारेभ्यः चतुर्भ्यो वेदराशिभ्य उद्धृत्य संहिताकरणेन प्रवर्तनम्। तर्हि पुरुषबुद्धि प्रभवत्वात् अनादरणीयत्वं स्यादित्याशङ्क्याह वेदानिति। हृदिस्थेन अच्युतेन चोदिताः वेदान् व्यस्यन् विभक्तवन्तः न तु स्वबुद्ध्येति भावः ॥४७॥

तत्र वैवस्वतमन्वन्तरद्वापरादौ वेदविभागक्रमं विशेषतो निरूपयति - * एतस्मिन्नित्यादिना। एतस्मिन्नन्तरे वैवस्वतमन्वन्तरे अष्टाविंशतिचतुर्युगद्वापरादौ इत्यर्थः। लोकभावनः लोकान् भावयति अभ्युदितान् करोतीति तथा हेतुगर्भमिदं अतः ब्रह्मेशाद्यैरित्यर्थः ॥४८॥

विज० पूर्वं लिङ्गत्वेन तद्विषयत्वमुक्तं अधुना वाचकत्वेनाह - स्वधाम्नः स्वयं प्रकाशस्य ओंकारस्य, सर्वानुमतत्वमाह-स इति। स ओंकारः सनातनं सदातनं सर्वमन्त्रोपनिषद्वेदानां बीजं फललक्षणाङ्कुरजनकशुक्रस्थानीयं स्वीघण्टानादवत् अच्छिन्नत्वेनोच्चार्यमाणं सर्वमन्त्रादीनां जमानां फलदानसामर्थ्यं जनयतीति भावः ॥४९॥

---

W omits एव * एतस्मिन् इति वीरराघवादृत पाठ इति ज्ञायते।

त्रिवृदित्युक्तं विवृणोति - **तस्येति**। अकाराद्यास्त्रयो वर्णाः, तस्य ओंकारस्य अवयवा आसन्नित्यन्वयः। हे त्यनेन सोऽयमात्मा आद्यक्षरमोंकारोऽधिमात्रं पादानां मन्त्राः अकारोकारमकारा इत्यादि प्रसिद्धिमाह। यद्वा, वृत्त्यभिव्यक्तौ प्रत्यारम्भः क्रियत इति सूचयति। "प्रत्यारम्भे प्रसिद्धौ है" (वैज. को 8-7-8)इ। त्यभिधानम्। एभ्यः भूर्भुवःस्वरिति नामाभिव्यक्तिं वक्ति धार्यन्त इति। यैरकाराद्यैः त्रयो भावा व्याहृतिलक्षणा धार्यन्ते व्याहृतिभ्योऽक्षर समाम्नायो व्यज्यते ज्ञानादिगुणानामर्थे विषयभूते हरौ वृत्तिर्येषां ते तथोक्ताः, सर्ववेदोक्तगुणार्णवनारायणलीलाव्याहरणात् व्याहृतय इत्यर्थः। यद्वा भूरादिलोकेषु शब्दादिगुणानां भोगलक्षणप्रायो जनप्रवर्तकाः ॥४२॥

ततो व्याहृतिभ्योऽक्षरसमाम्नायमकारादिहकारान्तानामक्षराणां समीचीनं संप्रदायं गुरुपारम्पर्यक्रममसृजदित्यन्वयः। कोऽसौ क्रम इति तं स्पष्टयति - अन्तःस्थेति। यरलवा अन्तःस्थाः, शषसहा ऊष्माणः, अचः स्वराः, कादयो माऽवसानाः स्पर्शाः, "एकमात्रो भवेत् ह्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो, व्यञ्जनं त्वर्धमात्रकम्"॥ इत्यत आदिशब्दो विवृतः ॥४३॥

तेनाक्षरसामाम्नायेन सव्याहृतिकान् "भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः" (तैत्ति.- उ.1-5-1) इत्यादि व्याहृतिसहितान् साक्षारान् ओमित्येतदक्षरमिदं सर्वमित्याद्योंकारसहितान् विनियोगमाह - चातुर्होत्रेति। चतुर्भिः होतृभिः क्रियमाणं कर्म चातुर्होत्रम् ॥४४॥

ब्रह्मकोविदान् वेद. ' [illegible] ‹क्षणान् ते पुत्रा ॥४५॥

ते वेदाः चतुर्युगेषु तत्तच्छिष्यैः परम्परया प्रामाः यथा चतुर्मुखेनाधीता अध्यापितास्तथा अध्ययनं[1] प्राप्ताः इत्यर्थः। उक्तापवादमाह -अथेति। अथ त्रेतानन्तरं द्वापरादौ महर्षिभिर्वेदा व्यस्ता अभूवन् ॥४६॥

एतदेव विवृणोति - **क्षीणायुष** इति। नन्वेषां स्वातन्त्र्यमापतितमिति तत्राह - हृदिस्थेति ॥४७॥

ननु, सत्यवतीसुतेन वेदाः कस्मिन् युगे व्यस्ता इत्यत्राह - **अस्मिन्निति**। अस्मिन् श्राद्धदेवमन्वन्तरे ॥४८॥

**पराशरात् सत्यवत्यामंशांशकलया विभुः।**
**अवतीर्णो महाभाग[2], वेदं चक्रे चतुर्विधम् ॥४९॥**

**ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य[3] वर्गशः[4]।**
**चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव ॥५०॥**

1 A ? omit प्राप्ता . 2 H V 'भागो . 3 H V सूत्रेम' M Ma सूत्रैर्म' W मालाम' 4 H M Ma V 'णानिव W 'णादिव

तासां स चतुरशिष्यानुपहूय महामतिः ।
एकैकां संहितां ब्रह्मन्, एकैकस्मै ददौ विभुः ॥५१॥

पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ।
वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम् ॥५२॥

साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम् ।
अथर्वाङ्गिरसं नाम स्वशिष्याय सुमन्तवे ॥५३॥

पैलः स्वं संहितामूचे इन्द्रप्रमितये मुनिः ।
बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम् ॥५४॥

चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव ।
पराशरायाग्निमित्राय इन्द्रप्रमितिरात्मवान् ॥५५॥

अध्यापयत्संहितां स्वां माण्डूकेयमृषिं कविम् ।
तस्य शिष्यो वेदमित्रः सौभर्यादिभ्य ऊचिवान् ॥५६॥

**श्रीध० पराशरादिति**। अंशो माया, तस्या अंश सत्त्व तस्य कलया अंशेन अवतीर्ण सन् ॥४९॥

चातुर्विध्यमेवाह **ऋगिति**। ऋगादिमन्त्राणां राशीन् वर्गशः तत्तत्प्रकरणभेदे उद्धृत्य यथाऽनेकविधमणिराशेर्मणिगणाः पद्मरागादयो विविच्योद्ध्रियन्ते तद्वदुद्धृत्य तैर्मन्त्रैः चतस्रः ऋगादिसंहिताश्चक्रे ॥५०॥

**तासामिति**। तासां संहितानां मध्ये एकैकाम् ॥५१॥

**पैलायेति**। ऋक्समुदाय रूपत्वाद्बह्वृचाख्याम्। नितरां प्रश्लेषेण गद्यमानत्वात् निगदाख्यम् ॥५२॥

**साम्नामिति**। साम्नां सम्बन्धिनीं छन्दस्सु गीयमानत्वात् छन्दोगाख्या संहिताम् ॥५३॥

तत्र ऋग्वेदशाखाविभागमाह - **पैल इति**। स्वसंहितां द्विधा विभज्य इन्द्रप्रमितये बाष्कलाय च ऊचे, स बाष्कलोऽपि स्वकां संहितां चतुर्धा व्यस्य बोध्यादिभ्यः चतुर्भ्यः शिष्येभ्य आह। हे भार्गव ! इन्द्रप्रमितिरपि स्वां संहितां स्वसुतं

1 ABGJW पाहूय. 2 ABGJ सी MMe रसा 3 AW स्वां स 4 ABGJMMew मन्त्र 5 ABGHJV देव 6 HV तम्याल
7--7 ABJ omit. 8 ABJ द्विधा. 9 ABJ omit चतुर्भ्यः

माण्डूकेयमध्यापयामास। तस्य माण्डूकेयस्य शिष्यो देवमित्रः ॥५४-५६॥

**वीर०** अतः सत्यवत्यां अंशांशकलयाऽवतीर्णः हे महाभाग, शौनक! ॥४९॥

चातुर्विध्यमेवाह - **ऋगिति**। ऋगादीनां राशीन् स्वयं साक्षात्कृत्येति शेषः। वर्गशः प्रकरणभेदेन राशिभ्यः उद्धृत्य चतस्रः संहिताश्चक्रे। राशेरुधृत्येति पाठः सुगमः। दृष्टान्ते तथा दर्शनात्। यथानेकविधमणिराशेर्मणिगणानुद्धृत्य मालाः कुर्वन्ति तद्वत् ॥५०॥

अथ तासां संहितानां चतसृणां मध्ये एकैकां संहितां चतुरः शिष्यानुपाहूय तत्रैकैकस्मै एकैकां संहितां महामतिः पाराशर्यः ददौ उपदिष्टवान् ॥५१॥

कस्मै कां ददौ इत्यत्राह - **पैलायेति** द्वाभ्याम्। अनेकऋक्समुदायरूपत्वाद्बह्वृचाख्यां "तेषां ऋगत्रार्थवशेन पादव्यवस्था" इति ऋग्लक्षणं तेषां मन्त्रब्राह्मणात्मकवेदैकदेशरूपाणां मध्ये यत्र येष्वर्थभेदेन विशिष्टैकार्थ प्रतिपादकत्वेप्यवान्तरार्थभेदवशात् पादव्यवस्था सा ऋगिति तदर्थः। यजुर्गणस्य नितरां गद्यमानत्वात् निगदाख्यत्वम्। यद्यपि ऋक्सामभ्यां अन्यत् यद् प्रश्लिष्टपठितं मन्त्रजातं तदेव यजुस्तथा च सूचितम् 'शेषे यजुः शब्दः' इति 'उच्चैर्ऋचा क्रियते उपांशु यजुषां' इति यजुष उपांशुपाठस्यैव श्रवणान्निगदाख्यसंज्ञाविरोधश्च तथाऽपि निगदत्वमत्र न यजुषः लक्षणं उच्यते किन्तु यजुस्संज्ञेष्वेव केषुचिन्मन्त्रेषु परसम्बोधन-रूपेषु "प्रोक्षणीरासादय" इत्येवमादिः परसम्बोधनाय नितरां गद्यन्ते इति व्युत्पत्त्या वाचनिकोपांशुत्वबाधेन कार्यबलादुच्चैर्धर्म योग उक्तः ॥५२॥

**साम्नामिति**। अत्र गीत्याधारभूता ऋचः सामशब्दविवक्षिताः 'गीतिषु सामाख्या' इति गीतिमात्रस्य सामत्वसूत्रणात् साम्नां सम्बन्धिनीं [1]छन्दोगसंहितां[1] छन्दोगाख्यां संहितां जैमिनये प्राह, अथर्वांगिरसं नाम शाखां सुमन्तवे, पैलादयोऽपि[2] स्व स्वशाखां स्वशिष्येभ्यः ऊचुरित्याह - पैल इति। स्वसंहितां बह्वृचाख्यां द्वेधा विभज्य स्वपुत्राय इन्द्रप्रमितये शिष्याय बाष्कलाय च ऊचे, स च बाष्कलोऽपि स्विकां संहिताम् ॥५३,५४॥

चतुर्द्धा व्यस्य विभज्य, हे भार्गव! बोध्यादिभ्यः चतुर्भ्य आह आत्मवान् धीमान् इन्द्रप्रमितिरपि ॥५५॥

स्वां संहितां स्वसुतं कविं विद्वांसं मण्डूकेयमृषिं अध्यापयामास तस्य मण्डूकेयस्य शिष्यो वेदमित्रः सौभर्यादिभ्यः शिष्येभ्यः ॥५६॥

---

1--1 W omits. 2 W omits अपि

विज० एतदेव विवृणोति - ऋगिति। ऋगादीनां राशीन् वर्गशो वर्गसङ्ख्ययोद्धृत्य चतस्रः संहिताश्चक्रे सूत्रैः स्यूतान् ॥४९,५०॥

तासां संहितानां मध्ये एकैकाम् ॥५१॥

एकैकामित्युक्तं विशिनष्टि, पैलायेति ॥५२॥

तथा साम्नामुद्धृतां छन्दोगसंहितां जैमिनये प्राह ॥५३-५४॥

इन्द्रप्रमितिरपि स्वसंहितां चतुर्द्धा व्यस्य विभज्य शिष्यान् नाम्ना निर्दिशति - बोध्यायेति। हे भार्गव! इन्द्रप्रमितिरपि, आत्मवान् परमात्मज्ञानी ॥५५॥

कविनाम्ना माण्डूकेयमृषिं च स्वसंहितां अध्यापयत्, तस्य माण्डूकेयस्य ॥५६॥

शाकल्यस्तत्सुतः[1] स्वान्तु पञ्चधा व्यस्य संहिताम् ।
वात्स्य[2]मौद्गल्यशालीयगो[3]खल्यशिशिरेष्वधात् ॥५७॥

[4]जातुकर्णस्तु तच्छिष्यः सनिरुक्तां स्वसंहिताम् ।
[5]बलाकपैज[6]वैताल विरजेभ्यो ददौ मुनिः ॥५८॥

बाष्कलिः प्रतिशाखाभ्यो वालखिल्याख्यसंहिताम् ।
चक्रे [6]बालायनि[6]र्गार्गिः, कासारश्चैव तां दधुः ॥५९॥

बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृता ।
श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥६०॥

वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् ।
यच्चेरुर्ब्रह्महत्यांहः क्षपणं स्वगुरोर्व्रतम् ॥६१॥

याज्ञवल्क्यस्तु[8] तच्छिष्यः आहाहो[9] भगवन् कियत् ।
चरितेनाल्पसाराणां[10] चरिष्येऽहं सुदुश्चरम् ॥६२॥

इत्युक्तो[11] गुरुरप्याह कुपितो याह्यलं त्वया ।
विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥६३॥

1 MMe तान्तु, 2 A B G J W मुद्गल 3 H V विल्य M Me सत्य 4 A B G J M Me जातकर्ण्यश्च W जातुकर्णश्च 5-6 H V बलाकपैज वैताल, M Me बलाकपैजिपैताल, W बलाक पैज्य वैताल 6-6 A B G J बालायनिर्भज्य M Me बालायनिर्गार्ग्य, W पैलायनिर्गार्गि, 7 M Me 'रा', 8 A.B.G.J W 'श', 9 H V स आह, M Me अहाहो 10 M Me दुष्कर 11 H V तोऽप्यमल

**देवरातसुतस्सोऽपि छर्दित्वा यजुषां गणम् ।**
**ततो गतोऽथ मुनयो ददृशुस्तान्यजुर्गणान् ॥६४॥**

**श्रीध० शाकल्य इति।** तत्सुतो माण्डूकेयसुतः। शाकल्यो वात्स्यादिषु पंचस्वधात्। तानध्यापयामासेत्यर्थः ॥५७॥

**जातुकर्ण इति।** तच्छिष्यः शाकल्यशिष्यः स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्यश्चतुर्भ्यो ददौ ॥५८॥

**बाष्कलिरिति।** [1]बाष्कलिः पूर्वोक्तस्य बाष्कलस्य पुत्रः। प्रतिशाखाभ्यः उक्तसर्वशाखाभ्यः। बालायन्यादयः तां दधुः अधीतवन्तः ॥५९॥

ऋक्शाखोपसंहारपूर्वकं तच्छ्रवणफलमाह - **बह्वृचा इति।** एतच्छन्दसां एतेषां छंदसाम् ॥६०॥

यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रस्तावमाह **वैशम्पायनशिष्या** इत्यादिना। चरकनामनिरुक्तिमाह। यच्चेरुरिति। यद् यस्माद् ब्रह्महत्यारूपमंहः क्षपयतीति तथा। तत्स्वगुरोरनुष्ठेयं व्रतं [2]तद्व्रतचरणाच्चरका इत्यर्थः ॥६१॥

**याज्ञवल्क्य इति।** तच्छिष्यो वैशम्पायनशिष्यः। अल्पसाराणामेतेषां चरितेन कियत्। सुदुश्चरमहं चरिष्यामीति ॥६२॥

**इतीति।** विप्राणामवमन्त्रा अवज्ञाकर्त्रा मत्तोऽधीतमाशु त्यजेति ॥६३॥

**देवरातेति।** देवराजसुतो याज्ञवल्क्यः ॥६४॥

**वीर०** तत्सुतः माण्डूकेयसुतः। शाकल्यस्तु स्वां संहितां पञ्चधा विभज्य वात्स्यादिषु पञ्चस्वधात् तानध्यापयामासेत्यर्थः ॥५७॥

तच्छिष्यः शाकल्यशिष्यो जातुकर्ण्यस्तु निरुक्तां संहितां विभज्य निरुक्तं नाम वैदिकपदव्याख्यानं तेन साकं चतुर्धा विभज्येत्यर्थः। बालाकादिभ्यश्चतुर्भ्यो ददौ ॥५८॥

बाष्कलिः पूर्वोक्तबाष्कलस्य पुत्रः प्रतिशाखाभ्यः उक्त सर्वशाखाभ्यः, उद्धृत्येति शेषः। वालखिल्याख्यां शाखां चक्रे ताश्च पैलायन्यादयः त्रय आददुः ॥५९॥

एवमृक्शाखाविभागप्रकारमभिधाय तच्छ्रवणफलमाह **बह्वृचा** इति। एतच्छन्दसां एतेषां छन्दसां व्यासं विभागं श्रुत्वा सर्वैः पापैः प्रमुच्यते ॥६०॥

---

1 HV omit बाष्कलिः, 2 ABJ तच्च°

अथ तैत्तिरीयशाखोत्पत्तिं प्रस्तौति - **वैशम्पायनशिष्या** इति। चरकाध्वर्यवः अध्वर्युशाखाध्ययनादध्वर्यवश्चरका आसन्। तत्र चरकशब्दं निर्वक्ति - ये चेरुरिति। ब्रह्महत्यारूपं अंहः पापं क्षपयतीति तथा, तत्स्वगुरोरनुष्ठेयं व्रतं चेरुः - व्रतचरणात् चरकसंज्ञाश्चाभवन् इत्यर्थः ॥६१॥

**याज्ञवल्क्य** इति। तच्छिष्यः वैशम्पायनशिष्यः याज्ञवल्क्यः अयं पूर्वोक्तादन्यः आह, गुरुमिति शेषः। उक्तिमेवाह - अहो इत्यादिना सुदुष्करं इत्यन्तेन। हे भगवन्, अहो अल्पसाराणां अल्पतपसामेतेषां चरितेन कियदहन्तु सुदुष्करं व्रतं चरिष्यामीति ॥६२॥

**इत्युक्त** इति। विप्रावमन्त्रा विप्रावमानकर्त्रा हेतुगर्भमिदं शिष्येण याज्ञवल्क्येनेतीत्थं उक्तः कुपितो गुरुरप्याह, किमिति त्वयाऽलं, याहि मदधीतं मत्तोऽधीतमाशु त्यजेति ॥६३॥

अथ देवरातसुतो याज्ञवल्क्यः यजुषां गणं छर्दित्वोद्गीर्य गतः ॥६४॥

**विज०** तस्य सुतो वेदमित्रस्य पुत्रः वात्स्यादिषु पञ्चसु अधात् अदात् ॥५७॥

तस्य शाकल्यस्य शिष्यः, सनिरुक्तां निरुक्तसहिताम् ॥५८॥

बाष्कलिः पूर्वोक्तबाष्कलपुत्रः प्रतिशाखाभ्यः पूर्वोक्तसर्वशाखाभ्यः उद्धृत्य वालखिल्याख्यसंहितां चक्रे तां नाम्ना बालखिल्याख्यसंहितां बालायनिप्रभृतयो दधुः अधीतवन्तः ॥५९॥

उक्ता एताः संहिता नाम्ना विशिनष्टि - **बह्वृचा** इति। ऋग्वेदसंहिता किमनेन छन्दसां व्यासेन श्रुतेनाधीतेन निःश्रेयसानुपयुक्तेनेति तत्राह, श्रुत्वेति ॥६०॥

चरकास्तीर्थसेवकाः अध्वर्यवो यज्ञकर्मणि निपुणाः, ऋत्विग्विशेषाः ॥६१॥

तस्य वैशम्पायनस्य शिष्यो याज्ञवल्क्यो गुरुमित्याह - हे भगवन्, गुरो! ब्रह्महत्यायाः क्षपणाय व्रतं चरन्तीति यस्मात्तस्मा दंहः प्रत्यल्पसाराणा मेतेषां चरितेन कियत् किं प्रयोजनं स्यात्, अहं दुश्चरं व्रतं चरिष्ये करिष्यामीति ॥६२॥

ततो गुरुणा किमुक्तमत्राह - **इतीति**। विप्रावमन्त्रा ब्राह्मणावज्ञाकर्त्रा शिष्येण त्वयाऽलं, इतो याहि, किं च मदधीतं आशु त्यज उत्सृजेति ॥६३॥

देवरातसुतः याज्ञवल्क्यः, ततो गुरुकुलात् ॥६४॥

**[2]भूत्वा तित्तिरयो[2] ब्रह्मन् तल्लोलुपतयाऽऽददुः।**
**[3]तैत्तिरीया इति यजुश्शाखा आसन् सुपेशलाः ॥६५॥**

---

1 W °स्त्वाभवन्; 2-2 A B G J W यजूंषि तित्तिरा भूत्वा 3 A तित्ति°

याज्ञवल्क्यस्ततो ब्रह्मन् छन्दांस्यधिगवेषयन् ।
[1]गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥६६॥

याज्ञवल्क्य उवाच

ओं नमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण[2] कालस्वरूपेण[3] च चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिना व्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचित[4] संवत्सर गणेन[5] तोयादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥६७॥

य[6]दु ह वाव विबुधर्षभ, सवितरदस्तपत्यनुसवन महरहराम्नायविधिनोपतिष्ठमानानामखिलदुरित वृजिनबीजावभर्जनम्[7] भगवतः[8] समभिधीमहि[9] तपनमण्डलम् ॥६८॥

य[10] इह वाव स्थिरचरनिकराणां निजनिकेतनानां[11] मन इन्द्रियासु[12]गणाननात्मनः स्वयमात्मान्तर्यामी प्रचोदयति ॥६९॥

य[13]एवेमं लोकमतिकरालवदनान्धकारं संज्ञाऽजगर ग्रहगृहीतं[14] मृतक मिव विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयति; अ[15]निमिषाधिपतिः अ[16]वनि-पतिरिवासाधूनां भयमुदीरयन्नटति ॥७०॥

परित आशापाली स्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥७१॥

अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर[17]भिवन्दितमहमयात याम यजुः काम उपसरामीति ॥७२॥

श्रीध० भूत्वेति। छर्दितस्यादानं विप्ररूपेणानुचितमिति [18]मत्त्वा तित्ति[19]रयो पक्षिविशेषा भूत्वाऽऽददुः, ततश्च तैत्तिरीया इति प्रसिद्धाः। सुपेशला अतिरम्याः। बहुवचनमवान्तरभेदविवक्षया ॥६५॥

कण्वमाध्यंदिनादिशाखा प्रसङ्गमाह याज्ञवल्क्य इत्यादिना। गुरोर्वैशम्पायनस्य व्यासेन विभज्यानुक्तत्वादविद्यमानान्यधि [20]अधिकानि गवेषयन् मृगयन् सूपतस्थे सम्यक् तुष्टाव। ईश्वरं ऋगादिवेदानाम्। तथा च श्रुतिः "ऋग्भिः पूर्वाह्णे दिविदेव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते, वेदैरशून्यस्त्रिभिरेति सूर्यः" (सु.ता.उ.१-५) इति ॥६६॥

---

1 W गुरोरधीतान्यपश्यन्, 2 M Ma °दात्म°, 3 M Ma omit स्व, 4 A B G J °चायचयो°, 5 A B G H J V °नापामादा°, 6 H V °दुत°, 7 A B G H J V °ना, 8 W. °स्वधी°, 9. H V add तव, 10 W उ, 11 W omit मन, 12 AB °नानात्म, 13 H V add एक, 14 A B G J गिलित।, 15 A B G H J V omit अनिमिषाधिपतिः, 16. M Ma omit अवनिपतिरिव, 17 A B G J W omit अपि, 18 A B J omit मत्वा, 19 A B J तितिराः, 20 A B J omit अधि

**ओं नम इति।** ओं नमो भगवते तुभ्यमादित्याय। यो भवानेक एव इमां लोकयात्रामनुवहतीत्यन्वयः। तदेव दर्शयति। अखिलजगतामात्मस्वरूपेणान्तर्हृदयेषु, कालस्वरूपेण च बहिरपि वर्तमान इति। अखिलजगतामित्यस्य प्रपंचः चतुर्विधेति। हृदयान्तर्वर्तित्वेऽपि जीववत्तेनोपाधिना अव्यवधीयमानः अनाच्छाद्यमानः। कालस्वरूपेण चेत्यस्य प्रपंचः क्षणेति। क्षणलवादयो येऽवयवाः तैरुपचिताः संवत्सरा स्तेषां गणेन प्रत्यब्दम् अपामादानं शोषणं विसर्गो वृष्टिस्ताभ्याम्। अनेन गायत्री प्रथमपादोक्त वरेण्यता[1]ऽनुवर्णिता ॥६७॥

द्वितीयपादार्थानुवर्णनेन स्तौति - **यदुहेति** । हे विबुधर्षभ! हे सवितः, यदप्यदो भगवतस्तव मंडलं तपति, तत्समभिधीमहीति सम्यगाभिमुख्येन ध्यायेम। पुनस्तस्यैव संबोधनम्। प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानां यान्यखिलानि दुरितानि तत्फलानि च वृजिनानि, दुःखानि, तेषां बीजमज्ञानं च, तेषामवभर्जन! विनाशक, हे तपनेति ॥६८॥

तृतीयपादेन स्तौति। **य इहेति**। यो भवान् स्थावरजंगमसमूहानां स्वाश्रयाणां जीवानां मनइन्द्रियप्राणगणान् अनात्मनो जडान् स्वयमात्मैवान्तर्यामी सन् प्रचोदयति प्रवर्तयति ॥६९॥

तृतीयपादमेव मंडलस्थपरतया व्याचक्षाणः स्तौति - **य एवेति**। य एक एव भगवान् अतिकरालवदनो योऽन्धकारसंज्ञोऽजगरग्रहः तेन [2]गिलितं, अत एव मृतकमिव विचेतनं स्वधर्माख्यं यदात्मावस्थानं प्रत्यक्प्रवणत्वं तदेव श्रेयः तस्मिन् प्रवर्तयति। किञ्च यो भवानवनिपतिरिवाटति गच्छति ॥७०॥

**परित इति।** आशापालैरिन्द्रादिभिः। कमलकोशयुक्तैः तत्तुल्यैर्वाऽञ्जलिभिः उपहृतार्हणो [3]दत्तार्घः ॥७१॥

**अथेति।** यत एवम्भूतस्त्वमथातः ह स्फुटमयातयामानि अन्यैर्यथाव[4]दविज्ञातानि यजूंषि तत्कामोऽह मुपसरामि भजामि ॥७२॥

**वीर०** अथ मुनयः छर्दितानामादानं विप्ररूपेणाऽनुचितं इति मन्वानाः तित्तिराख्य पक्षिविशेषा [5]भूत्वालोलुपतयाऽऽददुः जगृहु।ः अतो यजुश्शाखाः तैत्तिरीयसंज्ञा आसन् सुपेशला अतिरम्याः बहुवचनमवान्तरभेदविवक्षया ॥६५॥

काण्वमाध्यन्दिनशाखाप्रवृत्तिं प्रस्तौति **याज्ञवल्क्य** इत्यादिना। हे ब्रह्मन्! गुरोरधीतानि छन्दांस्यधिगवेषयन् अन्वेषयन्नप्यपश्यन्, छर्दितत्वादिति भावः। अर्कमादित्यमण्डलान्तर्वर्तिनमीश्वरं सुष्ठु उपतस्थे तुष्टाव ॥६६॥

स्तुतिमेवाह - **ओं नम** इत्यादिना। यो लोकयात्रामनुवहति तस्मै भगवते आदित्याय तुभ्यं नमः इति सम्बन्धः। तदेव

1 HV दर्शिता . 2 HV गृहीत . 3 HV दत्तार्घ्य 4 HV 'दनधि' . 5 A B add ततदा

दर्शयति अखिलेत्यादिना। अखिलजगदात्मत्त्वमेव प्रपंचयति चतुर्विध[1]भूतनिकायानां देवमनुष्यपशुपादपभेदेन जरायुजाण्डजस्वेदजोद्भिज्जरूपेण वा चतुर्वि[2]धानां भूतसमुदायानां किं बहुना ब्रह्मादिस्तम्बपर्यन्तानां अन्तर्हृदयेष्वाकाश इव व्याप्याप्युपाधिना ब्रह्मादिस्तम्बपर्यन्तेन अव्यवधीयमानः [3]अनपोद्यमानः[3] अस्पृष्टव्याप्यगतदोष इत्यर्थः। कालरूपतां प्रपञ्चयति - बहिः क्षणादिभिरवयवैरुपचितेन संवत्सरगणेन तोयादानविसर्गाभ्या[4]मिमां लोकयात्रां लोकवृत्तिमनुवहति निर्वहति ॥६७॥

अखिलजगदात्मस्वरूपेणेत्यनेन अन्तःप्रविश्यप्रेरकत्वरूपो गायत्रीप्रथमपादस्य सवितृशब्दार्थ उक्तः। अथ द्वितीयपादस्य भार्गवशब्दार्थवर्णनेन स्तौति - **यदुह वेति**। उ ह वावेति प्रसिद्धिद्योतको निपातसमुदायः भगवतस्तव यन्मण्डलमधस्तपति तत्स्वधीमहीति सम्बन्धः। स्वधीमहि सुष्ठु ध्यायेमेत्यर्थः। हे विबुधर्षभ! हे सवितः! हे तपनेति त्रीणि सम्बोधनानि। मण्डलं विशिनष्टि - अहरहरनुसवनं त्रिसन्ध्यमाम्नायविधिना वैदिकमार्गेण उपतिष्ठमानानां जनानां यान्यखिलानि दुरितानि पापानि वृजिनानि [6]तन्मूलानि दुःखानि न तान्येव बीजानि। यद्वा दुरितानां बीजमज्ञानं च भर्जयतीति भर्जनं तद्भर्गः तेजो यस्य तत् ॥६८॥

अथ तृतीयपादार्थसर्वधीप्रचोदयितृत्वकथनेन स्तौति, **यदु ह वावेति** उयहवावेति। पूर्ववत् यो भवान् निजनिकेतनानां स्वशरीराणां स्थावरजङ्गमसमूहानां मन इन्द्रियप्राणगणात्मनो जीवांश्च स्वयमात्माधारकोऽन्तर्यामी च सन् प्रचोदयति ॥६९॥

चतुर्विधपुरुषार्थप्रदत्वमाविष्कुर्वन् स्वाभिप्रेतं निवेदयति - **य एवेति**। अतिकरालवदनो योऽन्धकारसञ्ज्ञोऽजगरग्रहस्तेन गृहीतं गिलितमत एव मृतकमिवाचेतनं निःसञ्ज्ञमिमं लोकं अवलोक्यानितरसाधारण्या कृपादृष्ट्या उत्थाप्य अहरहस्त्रिसन्ध्यं स्वधर्मा[6]ख्यात्मावस्थाने स्वधर्माख्यं स्वाराधनधर्माख्यं यदात्मावस्थानं चित्तसमाधानं तस्मिन् श्रेयसि प्रवर्तयिष्यति। यश्च भवानवनीपतिरिव अनिमिषाणां देवानामधिपतिरसाधूनां दुष्टसत्त्वानां भयमुदीरयन् उत्थापयन्नटति। यश्च परित आशापालैर्दिक्पालैः कर्तृभिः [7]कमलकोशाञ्जलिभिः[7] कमलकोशाकारैः अञ्जलिभिरुपहृतं समर्पितमर्हणं यस्य सः, अटतीति पूर्वेणान्वयः ॥७०,७१॥

अथ ह ननु, खलु हे भगवंस्त्रिभुवनगुरुभिः ब्रह्मादिभिरभिवन्दितमुक्तविधस्य [8]तव पदकमलयुगलमहमयात याम यजुःकामः अयातयामानि अन्यैर्यथावदविज्ञातान्यगतसाराणि वा यजूंषि कामयमान उपसरामि भजामीत्युपतस्थे इति पूर्वेणान्वयः ॥७२॥

**विज०** तल्लोलुपतया यजुर्गणग्रहणेच्छावत्त्वेनाददुः स्वीचक्रुः ॥६५॥

---

1 W omits भूत, 2 A B 'धभू', 3--3 W omits 4 W omits इमा 5 W तत्फ' 6 A B 'ख्याव', 7--7 AB omit, 8 A B omit तव

छन्दांस्यधिगवेषयन्नभ्येतुं मृगयन्नर्कं परमानन्दरूपत्वादद्रिरात्मार्चनाच्च सूर्यान्तर्यामित्वाच्च तन्नामान मीश्वरं नारायणं सुष्ठूपतस्थे तुष्टाव ॥६६॥

ओं ब्रह्मनाम्ने "ओं स्याद्ब्रह्मण्यनुज्ञायाम्" (वैज. को.8-7-3) इति यादवः "अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन् गुणाः' इति श्रुतेः। गुणैरोतत्वादोङ्कारस्याप्ययमेवार्थः। इममेवार्थं सूचयति, भगवत इति। भगवते षड्गुणपूर्णाय अयं वसिष्ठादिवदिदानीन्तनो भगवान्नेत्याह, आदित्याय आदिभवाय पुरातनाय। यद्वा, अखण्डितैश्वर्याय, एतत् द्वयमुपपादयति - अखिलेति। यो भगवान् ब्रह्मादिस्तम्बपर्यन्तानां अण्डजादिभेदेन चतुर्विधभूतसमूहानां हृदयेष्वन्त-रखिलजगदात्मस्वरूपेण समस्तजगदन्तर्यामिस्वरूपेण स्थितो बहिरपि क्षणलवनिमेषाद्यवयवोपचितसंवत्स-रगणलक्षणेन कालरूपेणाकाश इव व्यवधीयमानः तोयादानविसर्गाभ्यां प्रत्यब्दं तोयस्य आदानं शोषणं विसर्गो वृष्टिः ताभ्यामिमां लोकयात्रामनुवहति। यद्वा, घटाद्युपाधिना आकाश इव सुरनरादि शरीरोपाधिना व्यवधीयमानः परिच्छिद्यमान इति ॥६७॥

हे विबुधर्षभ! हे सवितः! तव यददोमण्डलमनुसवनं तपति प्रकाशते इह वा, वेत्यलङ्कारार्थः। हे तपन! प्रकाशनशील! तत्समभिधीमहि सम्यक् चिन्तयामः। कीदृशं मण्डलमहरहराम्नायविधिना वेदोक्तप्रकारेण उपतिष्ठमानानां सेवमानाना मखिलानां दुरितानां दुष्पापानां दुःसहानां वृजिनानां दुःखानां बीजानि दुष्कर्माण्यवभर्जयितुं शीलमस्यास्तीति अस्मिन्नेवार्थे ल्युट्प्रत्ययः ॥६८॥

इह भुवि यो वाव स्वनिकेतनानां स्वाश्रयाणां स्थिरचरनिकराणामात्मा स्वामी अन्तः स्थित्वा सुखप्रेरकश्च तत्त्वमनारोपित स्वभावः स्वयं तेषामनात्मन अचेतनप्रायान् मन इन्द्रियासुगणान् प्रचोदयति प्रेरयति[1]। अनेन विशेषण द्वयेन "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्" (मना. ३.11-7)इत्ययं विवृतः यो नो धियो ज्ञानसाधनत्वादिन्द्रियाणि प्रचोदयात्तस्य सवितुर्जगत्स्रष्टुः भर्गः सकलदुःख बीजभर्जनकं वरेण्यं रमणीयं तन्मण्डलं धीमहीति "आप्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च" (ऋक् मण्ड 1-115-1) इति ॥६९,७०॥

अतिकरालं वदनं यस्य स तथा स एवान्धकारः अज्ञानलक्षणः तन्नाम्नाऽजगरग्रहेण गृहीतं ग्रस्तं मृतकमिव शव - वदचेतनकलामिमं लोकं जनमवलोक्य द्रवीकृतचित्तवृत्त्या परमकारुणिको यो भवानीक्षयैव कटाक्षनिरीक्षणेनैव समुत्थाप्यानुदिन

1 AB omit प्रेरयति

मात्मनः परमात्मनोऽवस्थानं प्राप्तिर्यस्मात्तत्तथा तस्मिन् स्वधर्माख्ये श्रेयसि प्रवर्तयत्येव "चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः" (ऋक्. मण्ड.1-115-1) इति श्रुतेः। कालप्रणायनं यश्च भवानाशापालैरिन्द्रादिभिः कमलकुट्मलाञ्जलिभिः तत्र तत्र समुपचितोऽसाधूनां मरणभयमुदीरयन् परितः अटति परिवर्तते "आप्राद्यावापृथिवी अन्तरिक्षं" (ऋक्. मण्ड 1-115-1) इति श्रुतिः। तस्मै तुभ्यं नम इति पूर्वेणान्वयः ॥७१॥

स्वाभिप्रायमुद्गलयति - **अथेति**। यस्मादयातयामयजुष्कामोऽथ तस्मात्त्रिभुवनगुरुभिरभिवन्दितं तव चरणनलिनयुगल-मुपसरामि शरणं गतोऽस्मीति तुष्टावेत्यर्थः ॥७२॥

**सूत उवाच**

एवं स्तुतस्स भगवान् वाजिरूपधरो[2] हरिः।
यजूंष्ययातयामानि मुनयेऽदात्प्रसादितः ॥७३॥

यजुर्भिरकरोच्छाखा[3] दशपञ्चशतैः[4] विभुः।
जगृहुर्वाजसन्यस्ताः[5] काण्वमाध्यन्दिनादयः ॥७४॥

जैमिनेस्सामगस्यासी त्सुमन्तुस्तनयो मुनिः[6]।
[7]सुतन्वां तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥७५॥

सुकर्मा चाऽपि तच्छिष्यः सामवेदतरोर्महान्[8]।
[9]सहस्रं संहिताभेदं चक्रे साम्नां ततो[10] द्विजः ॥७६॥

**श्रीध० एवमिति**। एवं स्तुतः प्रसादितश्च ॥७३॥

**यजुर्भिरिति**। पञ्चदशशाखाः याः शतैरपरिमितैर्यजुर्भिरकरोत्। स तैरिति पाठे स[11] एषः याज्ञवल्क्यः तैर्यजुर्भिरकरोदिति। जगृहुरधीतवन्तः। रविणाऽश्वरूपेण[12] वाजेभ्यः केसरेभ्यो वाजेन वेगेन वा संन्यस्ताः त्यक्ताः शाखा वाजसनेयसंज्ञाः[13] ताः शाखा इति वा ॥७४॥

सामशाखाविभागमाह - **जैमिनेरिति**। तत्सुतः सुमन्तुसुतः। ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह। तच्छिष्यो जैमिनेः शिष्यः। महानतिमेधावी। स[14] हस्र संहितारूपं भेदं चक्रे। साम्नां तं संहिताभेदं ततस्तदनन्तरम्। सुकर्मणः शिष्यः एकः कौशल्यो

1--1 W omits. 2 A H J M Ma रवि °. 3 M Ma °सु तै 4 A प्रभु 5 W °जि° 6 H M Ma V मुने 7 M Ma सुमन्वांस्त. H V सुकर्मास्त°. 8 H V °रो महान्. 9 A B G J सहस्रसं°. 10 H V ततस्सु तम्।. 11 H V omit एष 12 H V वाजि°. 13 A B J °सनी स°. 14 H V °हस्रं स°

हिरण्यनाभः पौष्यंजिर्नामिकस्ती[1] जगृहतुः। आवंत्यश्चान्यस्तस्यैव शिष्यः सोऽपि जग्राह ॥७५,७६॥

**वीर० एवमिति।** स्तुतः प्रसादितश्च। हरिरादित्यशरीरकः भगवान् वाजिरूपधरो मुनये याज्ञवल्क्याय अदात् उपदिदेश॥७३॥

**यजुर्भिरिति।** विभुर्याज्ञवल्क्यः शतैरपरिमितैः यजुर्भिः दशपञ्च पञ्चदश शाखा अकरोत्। स तैरिति पाठे तु स विभुस्तैः वाजिरूपेण हरिणा दत्तैर्यजुर्भिः अकरोत्। ततो वाजिना संन्यस्ताः सम्यक् याज्ञवल्क्ये निहिताः शाखास्ततस्ता काण्वा माध्यन्दिनाश्च जगृहुरधीतवन्तः ॥७४॥

जैमिनेः साम्नां विभागमाह **जैमिनेरिति।** सामगस्य जैमिनेर्मुनेस्तनयः सुमन्तुर्नामासीत्, तत्सुतः सुमन्तुसुतः सुतन्वांस्ताभ्यां तत्पुत्रपौत्राभ्यां चतुर्थ्यन्तमिदं, द्वेधा विभज्येकैकां प्राहेत्यर्थः ॥७५॥

तच्छिष्यः[2] तस्य जैमिनेः शिष्यः महान् माहात्म्ययुक्तः सुकर्मानाम सामवेद एव तरुस्तस्मात्साम्नां सहस्रं संहितानां शाखानां भेदं चक्रे! हे द्विज! ॥७६॥

**विज०** वाजिरूपधरः अश्वरूपधरः अयातयामानि अगतसाराणि वीर्यवन्तीत्यर्थः ॥७३॥

वाजसनः सूर्यः तत आगताः शाखा वाजसन्यः ताः शाखाः काण्वादयो माध्यन्दिनादयश्च ॥७४॥

साम गायतीति सामगः तस्य जैमिनेस्तनयः सुमन्तुर्नाम, तस्य सुमन्तोः सुतः सुमन्वान्नाम, ताभ्यां सुमन्तुसुमन्वाभ्यां पुत्रपौत्राभ्यां क्रमेणैकामेकां प्राह ॥७५॥

सुकर्माऽपि तस्य जैमिनेः शिष्यः महानतिप्रज्ञावान् सामवेदाख्यतरोः साम्नां सहस्रं संहितारूपं भेदं चक्रे ॥७६॥

**हिरण्यनाभः कौसल्यः[3] पौष्पिञ्जिश्च[4] सुकर्मणः।**
**शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः ॥७७॥**

**उदीच्या स्सामगाश्शिष्या आसन्पञ्चशतानि वै।**
**पौष्पिञ्ज्यावन्त्ययोश्चापि[5] तांश्च प्राच्यान्प्रचक्षते[6] ॥७८॥**

---

1 H V पौष्पिं. 2 A B omits तच्छिष्यः. 3 B °श° 4 A B G J M Ma °ष्य° 5 A B G J M Ma पौष्य°. 6 H M Ma W M उदीच्यान्

**लोकाक्षिर्लाङ्गलिः[1] कुल्यः[2] कुसीदः कुक्षिरेव च ।**
**पौष्यिञ्जिशिष्या[3] जगृहुः संहितास्ते[4] शतं शतम् ॥७९॥**

**कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः ।**
**शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान् ॥८०॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे षष्ठोऽध्यायः ॥६॥

**श्रीध० उदीच्या** इति। पौष्यंज्यावंत्ययोरपि। चकाराद्धिरण्यनाभस्यापि पञ्चशतानि शिष्या आसन्। ते तावतीः शाखा यथायथं जगृहुः। तानुदीच्यान्सतः कालतः कांश्चित्प्राच्यांश्च प्रचक्षते इत्यर्थः। यथैवोक्तं वैष्णवे - "उदीच्या सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः। हिरण्यनाभानावन्त्य संहिता यैर्द्विजोत्तमैः। गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः" (विष्णु. पु. 3-6-4,5) इति ॥७७,७८॥

पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्याणां शिष्यान्तरैः शाखाबाहुल्यं दर्शयति - **लौगाक्षिरिति द्वाभ्याम्** ॥७९॥

**कृत** इति। कृतो नाम हिरण्यनाभस्य शिष्यः स्वशिष्येभ्य ऊचे। शेषा अन्या अपि याः प्रसिद्धा श्शाखाः ता आवन्त्यः स्वशिष्येभ्य ऊचे इति ॥८०॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां षष्ठोऽध्यायः ॥६॥

**वीर०** हिरण्यनाभ इति कौसल्य इति हिरण्यनाभविशेषणम् पौष्यिञ्जो[6] नामैकः तौ सुकर्मणः शिष्यौ जगृहतुः। तथा आवन्त्यंश्चान्यस्तस्यैव शिष्यः, स च ब्रह्मवित्तमः सोऽपि जग्राहेत्यर्थः ॥७७॥

**उदीच्या** इति। पौष्पिञ्जावन्त्ययोश्चापि, अपिशब्दाद्धिरण्यनाभस्यापि पञ्चशतानि शिष्या आसन्। तांश्चोदीच्यान् सतः कांश्चित् प्राच्यांश्च प्रचक्षत इत्यर्थः। यथोक्तं वैष्णवे - "उदीच्यास्सामगाश्शिष्याः तस्य पञ्चशतं स्मृताः। हिरण्यनाभश्चावन्त्यः

---

1 A B G J M ma लौगा°, 2 A B G J मांगलि, H V लांगल 3 A B G J M ma पौष्य 4 H V °ताना° 5 H V पौष्य° 6 A B पौष्यिञ्जो, 7 A B पौष्यिञ्जो

संहिता यैर्द्विजोत्तमैः ॥ गृहीतास्तेऽपि चोच्यन्ते पण्डितैःप्राच्यसामगा" (विष्णु.पु.3-6-4,5) इति ॥७८॥

पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्याणां[1] शिष्यान्तरैः शाखाबाहुल्यं दर्शयति -**लोकाक्षिरिति द्वाभ्याम्**। लोकाक्ष्यादय चत्वारः पौष्यिञ्ज[2]शिष्याः शतं शतं संहिता जगृहुरित्यर्थः[3] ॥७९॥

कृतो नाम हिरण्यनाभस्य शिष्यः स च स्वशिष्येभ्यः चतुर्विंशाति संहिता ऊचे। शेषा अन्या अपि याः प्रसिद्धाश्शाखाः ता आवन्त्यः स्वशिष्येभ्यः ऊचे ॥८०॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां षष्ठोऽध्यायः ॥६॥

**विज०** कौसल्यः कोसलपुत्रः हिरण्यनाभश्च पौष्यञ्जिश्च, सुकर्मणः शिष्यौ जगृहतुः सामशाखामिति शेषः। अन्य आवन्त्य उदीच्यश्च, सामशाखां जगृहतुरिति शेषः। पौष्यञ्ज्यावन्त्ययोश्चाऽपि सामगाः पञ्चशतानि शिष्या आसन् ॥७७,७८॥

तेषां समुदितानां मतानां नामानीति पौष्यञ्जिशिष्या लौगाक्ष्यादयः नाम्ना शतं शतं संहिता जगृहुः ॥७९॥

हिरण्यनाभस्य शिष्यः नाम्ना कृतः चतुर्विंशति संहिताः स्वशिष्येभ्यः ऊचे, शेषा अन्याः संहिता आत्मज्ञानवानावन्त्यः स्वशिष्येभ्य ऊचे ॥८०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वादशस्कन्धे षष्ठोऽध्यायः ॥६॥

**(श्रीविजयध्वजतीर्थरीत्या षष्ठोऽध्यायः न समाप्तः)**

---

1 AB omit शिष्याणां ; 2 A B पौष्यि; 3 W omits इत्यर्थ ।

# सप्तमोऽध्यायः

## (विजयध्वजरीत्या षष्ठोऽध्यायः अनुवर्तते)

### सूत उवाच

अथर्ववित् सुमन्तुश्च शिष्यमध्यापयत् स्वकाम् ।
संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥१॥

शौक्लायनिर्ब्रह्मबलिः मोदोषः पिप्पलायनिः ।
वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो श्रुणु ॥२॥

कुमुदः शुनको ब्रह्मन् जाजलिश्चाप्यथर्ववित् ।
बभ्रुः शिष्योऽथाङ्गिरसः सैन्धवायन एव च ।
अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथा परे ॥३॥

नक्षत्रकल्पः शान्तिश्च काश्यपाङ्गिरसादयः ।
एते चाथर्वणाचार्याः शृणु पौराणिकान् मुने ॥४॥

त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः ।
वैशम्पायनहारीतौ षड्वै पौराणिका इमे ॥५॥

अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् ।
एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥६॥

काश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः ।
अधीमहि व्यास पुत्रा च्चतस्रो मूलसंहिताः ॥७॥

पुराणलक्षणं ब्रह्मन् । ब्रह्मर्षिभिर्निरूपितम् ।
शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥८॥

---

1 W स्वि°, 2 M Ma वालि W बिलि 3 H V निर्दोष W मौद्गल 4 H V °न, 5 H V °न°, 6 H V °बा°, 7 H V °ऽप्या°, M Ma °ऽप्यां°, 8 A B G J M Ma क° 9 A B G J M Ma आ° 10 M Ma शिशपा° 11 A B G H J V सर्वा 12 A B G J क° 13 ABGJW शिष्या°, 14 A त्वं

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तमेऽथर्वविस्तारः[1] पुराणव्यसनं ततः। पुराणलक्षणादीनि फलं भागवतश्रुतेः॥

क्रमप्राप्तमथर्ववेदविभागमाह **अथर्वविदिति** शिष्यं कबन्धनामानम् स्वकां स्वकीयां संहिताम्। सोऽपि शिष्योऽपि तां द्विधा[2] विभज्य। तदुक्तं वैष्णवे "अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कबन्धं सोऽपि च[3] द्विधा। कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्" (विष्णु.पु.3-6) इति॥

तत्र वेददर्शः स्वसंहितां चतुर्धा विभज्य चतुरः शिष्यानध्यापयामास। पथ्यश्च त्रिधा विभज्य त्रीनित्याह सार्धेन - **शौक्लायनिरिति** ॥२॥

**कुमुद** इति। अङ्गिरसः शुनकस्य शिष्यो बभ्रुः सैन्धवायनश्च। तदुक्तं "शुनकस्तु द्विधा कृत्वा ददावेकां बभ्रवे। द्वितीयां संहितां प्रादात् सैन्धवायनसंज्ञिने" (विष्णु. पु.3-6-12) इति सावर्ण्याद्याः सैन्धवायनादीनां शिष्याः ॥३॥

**नक्षत्रेति**। नक्षत्रकल्पः शान्तिकल्पश्चेति द्वौ। तदुक्तम् "नक्षत्रकल्पो वेदानां संहितानां तथैव च। चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः" (विष्णु. पु.3-6-13,14) इति। नक्षत्रकल्पादीनां कर्तारस्तत्तन्नामभिरुच्यन्ते[4] ॥४,५॥

**अधीयन्तेति**। मत्पितुर्मुखादिति। प्रथमं व्यासः षट्संहिताः कृत्वा मत्पित्रे रोमहर्षणाय प्रादात्, तस्य च मुखादेते त्रय्यारुण्यादय एकैकां संहितामधीयन्त। एतेषां षण्णां शिष्योऽहं, ताः सर्वाः समधीतवान् ॥६॥

**काश्यप** इति। रामशिष्यो योऽकृतव्रणः एवं चत्वारो वयम्। मूलसंहिता इत्यनेन तत्र संहिताबाहुल्यं सूचितम् ॥७॥

शुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्भेदकथनाय दर्शयति - **पुराणेति** ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ क्रमप्राप्तमथर्ववेदविभागमाह - **अथर्वविदित्यादिना**। शिष्यं कबन्धनामानं स्विकां संहितामध्यापयत् सोऽपि शिष्योऽपि तां द्विधा विभज्य, तदुक्तं वैष्णवे - "अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कबन्धं सोऽपि च द्विधा। कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्" (विष्णु.पु.3-6-9) इति ॥१॥

स्वसंहितां चतुर्द्धा विभज्य शौक्लयन्यादींश्चतुरोऽध्याययामास पथ्यस्तु त्रिधा विभज्य त्रीनित्याह - सार्धेन, शौक्लायनिरिति। हे ब्रह्मन्! ॥२॥

तत्र शुनकेन द्विधा विभक्तां स्वसंहितां ततो बभ्रुसैन्धवायनौ अधीतवन्तौ इत्याह - **कुमुद** इति। बभ्रुः।

---

1 HV °थोधर्म, 2 HV द्वेधा, 3 HV तद्विधा 4 ABJ omit तत

सैन्धवायनश्चाङ्गिरसगोत्रप्रभवः शौनकशिष्यावित्यर्थः। सावर्ण्याद्याः सैन्धवायनबभ्व्रोः शिष्याः ॥३॥

आद्यशब्दविवक्षितानाह - **नक्षत्रकल्प** इति। नक्षत्रकल्पः शान्तिश्च नक्षत्रकल्पः शान्तिकल्पश्चेति द्वौ तदुक्तं नक्षत्रकल्पो वेदज्ञो[1] शान्तिकल्पस्तथैव च" (विष्णु.पु.3-6-13) इति। काश्यपाः कश्यपगोत्रोद्भवाः आङ्गिरसाः तद्गोत्रोद्भवाः। एते नक्षत्रकल्पादीनां कर्तृत्वात्तन्नाममभिरुच्यन्ते ते अथर्वणाचार्या अथर्ववेदशाखा[2]विभजनेन[2] तत्प्रवर्तका इत्यर्थः। इत्थं वेदसंहिताविभागमभिधायाऽथ पुराणसंहिताप्रपञ्च शुश्रूषामालक्ष्य तावत्तत्प्रवर्तकान् श्रोतुं प्रचोदयति - **शृणु पौराणिकान्मुने** इति। हे मुने! ॥४॥

कं पुनस्ते इत्यत्राह - **त्रय्यारुणिरिति**। त्रय्यारुण्यादय इमे षट् मत्पितुर्मुखादेकैकां संहितां पुराणसंहितामधीयन्त मत्पितुर्मुखादित्यनेन तावद्बादरायणः षट् संहिता रोमहर्षणाय प्रोवाच । तस्मादेते षडध्यैषत इति सूच्यते। अहन्तु एतेषां षण्णां शिष्यो भूत्वा सर्वाः षडपि संहिता अध्यागामधीतवानस्मि ॥५-६॥

किञ्च, काश्यप इति रामस्य भार्गवस्य शिष्यो योऽकृतव्रणः त एते चत्वारो वयं व्यासपुत्रात् श्रीशुकाच्चतस्रो मूलसंहिता अधीमहि ॥७॥

'अधीमहि मूलसंहिता' इत्यनेन पुराणसंहिताबाहुल्यं सूच्यते तदग्रे स्पष्टीकरिष्यन् तावत् शुकपरीक्षित्संवादनिरूपितमपि पुराणलक्षणं तद्भेदकथनाय दर्शयति, पुराणेत्यादिना। वेदशास्त्रानुसारेण निरूपितं पुराणलक्षणं बुद्धिमाश्रित्य शृणु अवहितमनाः शृणु इत्यर्थः ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

सोऽपि सुमन्तो शिष्योऽपि पथ्याय ॥१॥

कुमुदादय पथ्यशिष्या बभ्रुसैन्धवायनौ पथ्यशिष्यस्य अङ्गिरसोऽङ्गिरो गोत्रे विद्यमानस्य शुनकस्य शिष्यौ अधीयेतां अधीतवन्तौ - "शुनकस्तु द्विधा कृत्वा ददावेकान्तु बभ्रवे। द्वितीयां संहितां प्रादात्सैन्धवायनसञ्ज्ञिने" (विष्णु.पु.3-6-12) इति॥ सावर्ण्याद्याश्च सैन्धवायनादीनां शिष्याः ॥२,३॥

आथर्वणाचार्याः अथर्ववेदाचार्याः पाठतोऽर्थतश्च अथर्ववेदप्रवर्त्तका इत्यर्थः। पौराणिकान् पुराणाचार्यान् ॥४-५॥

मत्पितुर्मुखात्पुराणसंहितामधीयन्त त्रय्यारुण्यादयः कथं एकैकामधीतवन्तःत्वन्तु कथं सर्वानधीतवानिति? तत्राह अहमिति। अहमेतेषां शिष्यः सर्वां पुराणसंहितामपठम् ॥६॥

व्यासपुत्रात् श्रीशुकात् ॥७॥

---

1 W वेदानां . 2-2 AB विभागजननेन

प्रसङ्गात्पुराणलक्षणं वक्तुं प्रतिजानीते, पुराणेति ॥८॥

**सर्गो[1]ऽस्याथ विसर्गश्च वृत्ति[2]रक्षान्तराणि च ।**
**वंशो वंशानुचरितं संस्था हेतुरपाश्रयः ॥९॥**

**दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः ।**
**[3]क्वचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया ॥१०॥**

**अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः ।**
**भूतसूक्ष्मे[4]न्द्रियार्थानां सम्भवस्सर्ग उच्यते ॥११॥**

**पुरुषानुगृहीतानामेतेषां वासनामयः ।**
**विसर्गो[5]ऽयं समाहारो [6]बीजाद्बीजं चराचरम्[6] ॥१२॥**

**श्रीध० सर्ग** इति। अस्य विश्वस्य। "[7]अत्र सर्गो विसर्गश्च स्थान पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः (भाग.2-10-1) इत्यत्रोक्ते स्थानपोषणे वृत्तिरक्षाशब्दाभ्यां उच्येते। अन्तराणि मन्वन्तराणि, वंशो वंश्यानुचरितं इतीशानुकथाः संस्था निरोधः। अनेनै[8]वात्यन्तिकी लयरूपा मुक्तिरप्युक्ता। हेतुशब्देन जीवाश्रयवासनाशब्दवाच्या ऊतयो गृहीताः ॥९॥

**दशभिरिति**। दशभिरेतैर्लक्षणैरर्थैर्युक्तं महापुराणं विदुः। [9]केचित्पञ्चविधम्। "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंश्यानुचरितं चेति पुराणं पञ्चलक्षणम् इति"। पुराणं महत् अल्पं चेति व्यवस्थया। यत्र दशापि लक्षणानि [10]पृथक् पृथङ् निरूप्यन्ते तन्महापुराणम्। यत्र त्वन्येषां पञ्चस्वेवान्तर्भावस्य विवक्षा तदल्पमिति व्यवस्थयेत्यर्थः ॥१०॥

सर्गादिलक्षणानि व्याचष्टे - **अव्याकृतेत्यादिना**। अव्याकृतस्य प्रधानस्य गुणानां क्षोभाद् [11]यो महान् तस्माद्[11] यः त्रिवृदहंकारः तस्मात् भूतमात्राणां सूक्ष्माणामिन्द्रियाणाञ्च तदर्थानाञ्च स्थूलानां [12]तद्धतानाञ्च सम्भवः, सर्गः कारणसृष्टिसर्ग इत्यर्थः। उच्यत इति यथाऽपेक्षमुत्तरत्राप्यनुषङ्गः ॥११॥

विसर्गं व्याचष्टे **पुरुषेति**। पुरुषेण ईश्वरेण अनुगृहीतानामेतेषां महदादीनां पूर्वकर्मवासनाप्रधानोऽयं समाहारः। कार्यभूतश्चराचरप्राणिरूपो बीजाद्बीजमिव प्रवाहापन्नो विसर्ग उच्यत इत्यर्थः ॥१२॥

**वीर०** किं तदित्यत्राह - **सर्गश्चेति** दशभिः। सर्गादिभिर्लक्षणैर्युक्तं तदेव पुराणमिति तद्विदः पुराणलक्षणविदः अत्र

---

1 HV सर्गोऽप्यस्य, M Ma सर्गश्चैव W सर्गश्चाथ, 2 A G वृत्ती 3 A B G J के 4 B G J मात्रे 5 M Ma र्गोऽय 6–6 M Ma जीवो जीवश्चराचरः, 7 B omits वत्र, 8 H V "क", 9 A B J के, 10 H V omit पृथक् 11–11 H V omit 12 A B J omit तत्

विदुः। स्थानपोषणे वृत्तिरक्षाशब्दाभ्यामुच्येते। अन्तराणि मन्वन्तराणि, वंशो वंश्यानुचरितं च, संस्था निरोधः, अनेनैव आत्यन्तिकप्रलयरूपा मुक्तिरप्युक्ता, हेतुशब्देनोतयः पृथग्गृहीताः। केचिदिति ब्रह्मन्! महदल्पव्यवस्थया क्वचित्पञ्चविधश्च लक्षणम्, महापुराणस्योक्तानि दशलक्षणानि, अल्पपुराणन्तु - सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम्॥ इत्युक्तविधमित्यर्थः ॥९-१०॥

क्रमेण सर्गादीनां स्वरूपं निरूपयति - **अव्याकृतेत्यादिना**। अव्याकृतस्य मूलप्रकृतेः गुणानां सत्त्वरजस्तमसां क्षोभाद् यो महान् गुणत्रयपरिणामरूपः तस्मादहङ्कारः त्रिधाभूतः तस्माच्च भूतानामाकाशादीनां तत्सूक्ष्माणां शब्दादीनां इन्द्रियाणां चेत्यर्थानां वस्तूनां यः सम्भवः स सर्ग इत्युच्यते ॥११॥

विसर्गं निरूपयति - **पुरुषानुगृहीतानामिति**। पुरुषेण परमपुरुषेण अनुगृहीतानामाहितसृष्टिसामर्थ्यानां, एतेषां महदादितत्त्वानां, यः समाहारः महानतपरिणामः, स विसर्ग इत्यर्थः। कोऽसौ समाहारः? इत्यतस्तं दर्शयति, चराचरात्मकमिति। चराचरात्मकं जगदेव तत्समाहार इत्यर्थः। तत्र दृष्टान्तः बीजाद्बीजमिति। कारणबीजात् कार्यबीजमिव कारणादव्याकृतान्महदादि क्रमेण चराचरात्मकं यत्कार्यजातं स विसर्ग इत्यर्थः। विसर्गस्य जीवकर्मवासनाप्रयुक्तत्वात् वासनामयत्वम् ॥१२॥

**विज०** वृत्तिश्च रक्षा च अन्तराणि च वृत्तिरक्षान्तराणि ॥९॥

पुराणस्य महदल्पव्यवस्थया क्वचित्स्थले पञ्चविधं पञ्चलक्षणप्रकारोपेतम् ॥१०॥

तत्र सर्गादिकं क्रमेण [illegible] - **अव्याकृतेति**। अव्याकृतगुणक्षोभात् प्रकृतिगुणानां अन्योन्यसंयोगलक्षणसङ्कलनात् महतः महत्तत्त्वस्य वैकारिकादिभेदेन त्रिवृतोऽहम् अहङ्कारस्य भूतसूक्ष्मेन्द्रियार्थानां पञ्चभूतसूक्ष्मेन्द्रियविषयाणां सम्भवो जन्मभूतमात्रेन्द्रियधियां जन्मेत्यधस्तादुक्तम् ॥११॥

पुरुषेण भगवतानुगृहीतानां अनुप्रवेशलक्षणानुग्रहवतामेतेषां तत्त्वानां सकाशात् वासनामयो यः समाहारः तत्कर्मवासनानुसृतिः सृष्टिः स विसर्गो, जीवः अजीवश्च चेतनाचेतनलक्षणः चराचरः चराचरात्मको ब्रह्माण्डसर्गः "ब्रह्मणो गुणवैषम्यात् विसर्गः पौरुषः स्मृतः (भाग.2-10-3) इति ॥१२॥

**वृत्तिर्वृत्तानि भूतानां चराणामचराणि च।**
**कृता स्वेन नृणां तत्र कामाच्चोदनयाऽपि वा ॥१३॥**

1 M Ma कृतेशेन

**रक्षाऽच्युतावतारेहा विश्वस्यानु युगे युगे ।**
**तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥१४॥**

**मन्वन्तरं मनुर्देवा[1] मनुपुत्रा स्सुरेश्वराः ।**
**ऋषयोऽशावतारश्च हरेष्षड्विधमुच्यते ॥१५॥**

**राज्ञां [2] ब्रह्मप्रसूतानां[3] वंशस्त्रैकालिकोऽन्वयः ।**
**वंशानुचरितं तेषां वृत्तं वंशधराश्च ये ॥१६॥**

**श्रीध० वृत्तिरिति** । चराणां भूतानां सामान्यतोऽचराणि । चकाराच्चराणि च कामात् वृत्तिः । तत्र तु नृणां स्वेन[4] स्वभावेन कामाच्चोदनयापि वा या नियता वृत्तिः जीविका कृता, सा वृत्तिरुच्यत इत्यर्थः ॥१३॥

**रक्षेति** । तिर्यङ्मर्त्यर्षिदेवेषु येऽच्युतावताराः तेषामीहा लीला, सा विश्वस्य रक्षोच्यते इत्यर्थः । यैरवतारैरिति समासान्निष्कृष्य कथंचित्सम्बन्धः । त्रयीद्विषो दैत्याः ॥१४॥

**मन्वन्तरमिति** । षड्विधं मन्वन्तरमुच्यते । षड्विधत्वमेवाह - **मनुरिति** । मन्वादयः षडेते वर्गाः स्वस्वाधिकारेण यत्र[5] प्रवर्तन्ते तन्मन्वन्तरमित्यर्थः ॥१५॥

वंशमाह- **राज्ञामिति** । ब्रह्मणः सकाशात्प्रसूतिर्येषां शुद्धानामित्यर्थः । तेषामन्वयो वंशः तेषां वृत्तम् । ये च तद्वंशधराः तेषां च वृत्तं वंशानुचरितमुच्यते ।[6] वंश्यानुचरितम् इति पाठे वंशे भवाः वंश्याः, तेषां वृत्तमित्यर्थः[6] ॥१६॥

**वीर०** वृत्तिं निरूपयति - **वृत्तिरिति** । चराणां भूतानां, अचराणि भूतानि वृत्तिर्जीवनोपाय इत्यर्थः । सा च ईशेन ईश्वरेण कृता, सा च नृणां कामात् रागाद् तत्राऽपि चोदनया विधिना, न केवलं रागप्राप्ता शास्त्राविरुद्धा चेत्यर्थः । कृता स्वेनेति पाठे स्वेन ईश्वरेणैव कृतेत्यर्थः ॥१३॥

अथ रक्षामाह - प्रतियुगं तिर्यगादिषु अच्युतस्य अवतारः तच्चेष्टा विश्वस्य रक्षेत्यर्थः । अवतारतच्चेष्टितानां विश्वरक्षारूपत्वं दर्शयति, हन्यन्त इति । **यैरवतारैः**[7] तच्चेष्टितैः त्रयीद्विषःवैदिकधर्मविरोधिनः हन्यन्ते ॥१४॥

अन्तराणि लक्षयति- मन्वन्तरमिति । षड्विधं मन्वन्तरमुच्यते इति सम्बन्धः । मन्वादयः षडेते यत्र तन्मन्वन्तरमुच्यत इत्यर्थः । षड्विधत्वमेवाह, मनुरिति । हरेरंशावताराश्चेति सम्बन्धः । सुरेश्वरा इन्द्राः ॥१५॥

---

1 A.G.H.J.V °र° , 2 M Ma मनु, 3 H V °तो°, 4 H V omit स्व, 5 ABJ यदा, 6- -6 A omit, 7 A B °तार चेष्टि°

**वंशमाह राज्ञामित्यर्धेन**। मनोः प्रसूतानां राज्ञां यः त्रैकालिकः कालत्रयगोचरोऽन्वयः स वंशः इत्यर्थः। तदनुचरित **मेवाह, वंशानुचरितमिति**। ये च वंशधराः वंशनिर्वाहकाः तेषां वृत्तं वशानुचरितं उच्यत इत्यर्थः ॥१६॥

**विज० पञ्चानां** भूतानां पञ्चभूतान्येवान्योन्यं वृत्तिर्जीवनमन्नमित्यः। तेजोवृत्तिः पार्थिवानि दारूणीत्यादि। यद्वा, भूतानां पिशाचानां, भूतानि मनुष्यलोकस्थानि शरीररुधिराणि "पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" (अमःको.1-1-11) इत्यमरः। चराणां गतिमतां, अचराणि स्थावरतुल्यानि व्रीह्यादीनि वृत्तिः ईशेन हरिणा कृता कल्पिता- अहस्तानि सहस्तानां सहस्तानि चतुष्पदाम्। अणूनि तात! महतां जीवो जीवस्य जीवनम् ॥ (भाग.1-13-46) इत्युक्तम्। तत्रैव स्थितिर्नृणां वृत्तिः कामादिच्छातः फलमूलादीनि चोदनया विधिना तत्तत्क्रियानुसारेण विहिता चरुपुरोडा- शादिलक्षणा ॥१३॥

युगे युगे विश्वस्य अनुयोग्या अच्युतावतारेहा हरे रवतारेण चेष्टा परिरक्षणं रक्षा, "यदा यदा हि धर्मस्य" (भ.गी.4-7) इति गीतायाम्। कुत्रेति तत्राह - तिर्यगिति। यैरवतारैः, त्रयीद्विषः वेदवैरिणोऽसुराः हन्यन्ते तेषां चरितवर्णनं रक्षणमित्यर्थः। "स्थितिर्वैकुण्ठ विजय" इति। 'पोषणं तदनुग्रह" इति च ॥१४॥

एतन्मन्वन्तरं षड्विधमुच्यते, षण्णां कथाकथनं मन्वन्तरमित्यर्थः। तत्रांशकानामिति शेषः। मन्वन्तरेषु **तद्धर्मा इति,** मन्वादिधर्मकथनमित्यर्थः ॥१५॥

मनुप्रसूतानां राज्ञां अन्वयो वंशः इत्युच्यते। कीदृशः? त्रैकालिको भूतभविष्यद्वर्तमानविषयः, एतत्कथनमत्रेति, वंशस्यानुचरितं नाम तेषां राज्ञां वृत्तिकथनं, ये वंशधरा उत्सन्नवंशं धृतवन्तस्तेषां च वृत्तम् ॥१६॥

**नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः।**
**संस्थेति कविभिः प्रोक्ता चतुर्धाऽस्य स्वभावतः ॥१७॥**
**हेतुर्जीवो[2]ऽस्य सर्गादेरविद्याकर्मकारकः।**
**यं[3] चानु[4]शायिनं प्राहुरव्याकृतमुतापरे ॥१८॥**
**व्यतिरेका[5]न्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु।**
**माया[6]मयेषु तद्ब्रह्म जीववृत्तिष्वपाश्रयः ॥१९॥**

---

1. MMa वृत्तं ; 2 MMa °वस्य , 3. M Ma या°, 4 A.B.G.H.J.V श° 5 A B G J °य°, 6 M Ma मयासु

**पदार्थेषु[1] यथा द्रव्यं तन्मात्रं[2] रूपनामसु ।**
**बीजादि पञ्चतान्तासु ह्यवस्थासु युतायुतम् ॥२०॥**

**श्रीध० नैमित्तिक** इति। अस्य विश्वस्य। स्वभावतो मायातो निष्पन्नस्य यद्वा मायातः यश्चतुर्विधो लय इति ॥१७॥

**हेतुरिति**। अस्य जगतः सर्गादेर्हेतुर्निमित्तं जीवः। सोऽत्र हेतु रुच्यत इत्यर्थः। तस्य निमित्ततामाह। अविद्यया कर्मकारकः कर्मकर्ता। जीवादृष्टप्रयुक्तत्वाद्विश्व[3]सर्गादिः स तु तत्र हेतुरित्यर्थः नन्वनुशयी निमित्तमिति केचित्। अव्याकृतमित्यपरे। तत्राऽह - यमिति चैतन्यप्राधान्येनअनुशयिनमुपाधिप्राधान्यविवक्षयाऽव्याकृतम् ॥१८॥

अपाश्रयमाह **व्यतिरेकेति**। जाग्रदादिष्ववस्थासु जीवतया वर्तन्त इति जीववृत्तयो, विश्वतैजसप्राज्ञास्तेषु मायामयेषु साक्षितयाऽन्वयः, समाध्यादौ च व्यतिरेको यस्य तद्ब्रह्म संसारप्रतीतिबाधयोरधिष्ठानावधिभूतमपाश्रय उच्यत इत्यर्थः ॥१९॥

एत देव सदृष्टान्तं प्रपञ्चयति - **पदार्थेष्विति**। पदार्थेषु घटादिषु द्रव्यं मृदादि यथा युतमन्वितमयुतं च बहिरप्यवस्थानात्। रूपनामसु च सन्मात्रं सत्तामात्रं यथा। एवं बीजं गर्भाधानमादि यासां, पञ्चता अन्ते च यासां तासु देहावस्थासु [4]"निषेकगर्भजन्मानि बाल्यकौमार यौवनम्। वयो मध्यं जरामृत्युरित्यवस्थास्तनोर्नव"[4] एतासु नवस्वप्यधिष्ठानत्वेन साक्षित्वेन च युतमयुतं च यत्तदपाश्रय इति ॥२०॥

**वीर० संस्थामाह - नैमित्तिक** इति। स्वभावत कालकर्मस्वभावत् अस्य विश्वस्य सर्गादि चतुर्धा चतुर्विधः नैमित्तिकादिरूपो लयः संस्थेति कविभिः प्रोक्तः ॥१७॥

हेतुं निरूपयति, **हेतुरिति**। अविद्याकर्मकारकः अज्ञानमूलकं पुण्यापुण्यात्मकं कर्म करोतीति तथा स जीवः एकत्वं जात्यभिप्रायकं अस्य विश्वस्य सर्गादि हेतुर्जीवस्य कर्मफलानुभवार्थत्वात्सर्गादिस्तन्निमित्तत्वं तस्यातः स हेतुरित्यर्थः। हेतुत्वख्यापनाय जीवं विशिनष्टि, यमिति। अनुशयो भुक्तफलकर्मावशेषः सोऽस्यास्तीति अनुशयी तथाभूतं यं जीवं प्राहुः भुक्तावशेषकर्मवासनायुक्तं प्राहुः उतापि चापरेयमव्याकृतं देवादिनामरूपरहितं प्राहुः सृष्टेः पूर्वं देवादि(वासना) नामरूपरहितं प्राहुः, सृष्टेः पूर्वं देवादिनामरूप रहिता वासनायुक्ताः जीवा अस्य सर्गादिर्निमित्तमिति सहेतुरित्यर्थः ॥१८॥

अथापाश्रयमाह - द्वाभ्याम्। **व्यतिरेकान्वयाविति**। मायामयेषु प्रकृतिकार्येषु शरीरेषु जाग्रदादिषु जीवस्य वृत्तिषु यस्यान्वयव्यतिरेकौ तद्ब्रह्म अपाश्रयः सर्वाधारत्वादपाश्रय इत्युच्यत इत्यर्थः। ब्रह्मणो जीववृत्तिनिर्वाहकतयाऽवस्थानात्तास्वन्वयः।

---

1 W पदा°. 2 ABGHJV स°. 3 HV विश्व°. 4-4 ABJ omit. 5 W omits सर्गादि

**अवस्थाभिरस्पृष्टत्वात् व्यतिरेकश्च भवति, ब्रह्मणस्तत्तच्चिदचिद्विशिष्टतारूपेण सर्वावस्थान्वयः स्वेन रूपेण ताभिर्व्यतिरेकश्चेत्युक्तं भवति ॥१९॥**

अत्र दृष्टान्तमाह - **पदार्थेष्विति**। बीजादि पञ्चत्वान्तास्ववस्थासु जन्मादिविनाशान्तासु अवस्थासु रूपनामसु नामरूपवत्सु पदार्थेषु घटपटादिषु यद्द्रव्यं तन्मात्रं तद् द्रव्यमात्रं जन्माद्यवस्थाभिः युतायुतं तत्त्वादिविशिष्टतारूपेण जन्मादियुतं तत्प्रहाणदशायां विशेष्यमात्ररूपेण जन्मादिरहितं च तद्वदित्यर्थः ॥२०॥

**विज०** अस्य जगतः स्वभावतश्चतुर्धा लयः संस्थेति कविभिः प्रोक्ता ॥१७॥

यं च प्रलये परमात्मानमनुविश्य शायिनं स्वपन्तमाहुः अपरे अव्याकृतं अव्याकृताकाशवन्निर्विकारं प्राहुः, सोऽविद्यया कर्मकारकः कर्मकर्ता अस्य जगतः सर्गादिनिमित्तभूतो जीवो हेतुरित्युच्यते जीवसमुदायः सुखदुःखप्राप्तये तं हेतुं कृत्वा जगतः सृष्ट्यादिकं प्रवर्तत इति। "निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः" (भाग.2-10-6) इति ॥१८॥

अपाश्रयं लक्षयति - **व्यतिरेकान्वयाविति**। अपगत आश्रयो यस्य स तथा अद्वितीय इत्यर्थः। अद्वितीयत्वं कथमुच्यते, अन्वयव्यतिरेकाभ्यां ज्ञायत इति यस्य हरेर्जीववृत्तिषु जीवानां जीवनोपायभूतासु जाग्रत्स्वप्नसुषुप्तिषु व्यतिरेकान्वयौ स्तः, जाग्रदाद्यभावेपि विद्यत इति। व्यतिरेकः तद्भावेऽप्यस्तीत्यन्वयः। मया मायासु श्रीहरीच्छारचितासु तद्ब्रह्मव्यपाश्रय इत्युच्यते ॥१९॥

प्रकारान्तरेण आश्रयं लक्षयति - **पदार्थेष्विति**। रूपनामयुक्तेषु पदार्थेषु यद्द्रव्यमुपादानादिकारणभूतं प्रकृत्याख्यं तन्मात्रं पदार्थस्वरूपं तस्मिन् द्रव्ये बीजादि पञ्चतान्तासु जन्मादिमरणावसानास्ववस्थासु युतायुतं अन्वयव्यतिरेकाभ्यां यद्वर्तते तद्ब्रह्मापाश्रयम्। यद्वा, रूपनामप्रपञ्चपदार्थेषु युतायुतमन्वयव्यतिरेकलक्षणानुमानेन यत्तन्मात्रं विज्ञानानन्दमात्रं द्रव्यं द्रुतं ज्ञेयं यत् बीजत्वाद्यावस्थासु वस्तुनः पञ्चत्वावसानलक्षणावस्थासु युतायुतं वर्तते तद्ब्रह्मेति ॥२०॥

**विरमेत यदा चित्तं हित्वा वृत्तित्रयाश्रयम्।**
**योगेन वा तदाऽऽत्मा नं वेदेहाया निवर्तते ॥२१॥**

**एवं लक्षणलक्ष्याणि पुराणानि पुराविदः ।**
**मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥२२॥**

---

1--1 W omits. 2 A सर्वासु. 3 A B G H J V श्रय स्वयम् * वेदात्मा तन्निवर्तते वीरराघवव्याख्यानुसारेण तदादृतः पाठः। 4 M Ma वेदनात्मा

**ब्राह्मं पाद्मं वैष्णवं च शैवं[1] लैङ्गं[2] सगारुडम् ।**

**नारदीयं भागवतमाग्नेयं[3] स्कान्दसंज्ञितम् ॥२३॥**

**भविष्यं[4] ब्रह्मवैवर्तं[5] मार्कण्डेयं सवामनम् ।**

**वाराहं[6] मात्स्यं कौर्मं[6] च ब्रह्माण्डाख्यमिति त्रिषट् ॥२४॥**

**ब्रह्मन्निदं[7] समाख्यातं शाखाप्रणयनं मुनेः[8] ।**

**शिष्याशिष्य[9] च प्रशिष्याणां ब्रह्मतेजोविदीपनम् ॥२५॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे सप्तमोऽध्यायः ॥७॥

**श्रीध०** एवं दशाऽपि लक्षणानि व्याख्याय इदानीं[10] "दशमस्य विशुद्ध्यर्थे नवानामिह लक्षणम्। वर्णयन्ति महात्मानः" (भाग.2-10-2) इति यदुक्तं तदाह - **विरमेतेति**। यदा सर्गादीनां मायामयत्वानुसन्धानेन वामदेवादेरिव स्वयमेव चित्तं विरमेत[11] इहैवानुष्ठितेन योगेन वा देवहूत्यादिवत् तदा विक्षेपाभावादात्मानं वेद। तदा चाविद्यानिवृत्तेरीहायाः संसाररूपाया निवर्तत इत्यर्थः ॥२१॥

पुराणविभागप्रस्तावेन तल्लक्षणादिकं[12] प्रासंगिकमुक्त्वा प्रस्तुतमाह **एवमिति**। एवं विधैर्लक्षणैर्लक्ष्याणि ॥२२-२३॥

**भविष्यमिति**। त्रिषडष्टादश ॥२४॥

उपसंहरति - **ब्रह्मन्निति**। मुनेर्व्यासस्य शिष्यादीनां च ब्रह्मतेजो ब्रह्मवर्चसम्। तद्विवर्धनम्, श्रोतृणामिति शेषः ॥२५॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तमोऽध्यायः ॥७॥

**वीर०** यदुक्तं "दशमस्य विशुद्ध्यर्थे नवानामिह लक्षणम्" (भाग.2-10-2) इति। तदाह- **विरमेतेति**। वृत्तित्रयाश्रयमिति भावप्रधानो निर्देशः। यदा चित्तं जाग्रदादिवृत्तित्रयाश्रयत्वं हित्वा स्वयमयत्नतः योगेन योगाभ्यासयत्नेन वा विरमेत विषयेभ्य इति शेषः। तदात्मानमाश्रयाख्यं वेद आत्मा चित्तं तत् ततः निवर्तते वेदेहाया निवर्तते इति पाठान्तरं, तदा आत्मानं वेद ततः ईहायाः संसाररूपायाः निवर्तत इत्यर्थः। वैदेहाया निवर्तत इति पाठान्तरं तदा यस्य चित्तं विरमेत स आत्मानं वेदेति शेषः। ततः वैदेहाय विदेहभावाय प्राकृतदेहाभावायेति यावत्। निवर्तते संसारबन्धान्निवर्तते मुच्यत इत्यर्थः ॥२१॥

1 M Ma लिङ्ग, 2 H M Ma V च, 3 M Ma स्क, 4 H V ष्यत्, 5 H V W कै, 6-6 W त्स्यमात्स्यकौर्माणि 7 H V न्नेतत्, M Ma णैतत्, 8 M Ma मुने!, 9 A B G J M Ma शिष्यशिष्यप्र, 10 A B J omit इदानीं 11 H V त्, 12 A B J omit क

तदेवं पुराणसंहिताविभागप्रसङ्गेन तल्लक्षणान्यभिधाय प्रस्तुतमाह - **एवमिति**। एवंविधैः दशभिः पञ्चभिर्वा लक्षणैः लक्ष्याणि महान्ति क्षुल्लकानि अल्पानि च अष्टादशपुराणानि पुराविदः पूर्वकालाभिज्ञाः मुनयो विदुः ॥२२॥

कानि पुनस्तानि अष्टादशेत्यत्राह - **ब्राह्ममिति** द्वाभ्याम्। मात्स्यकौर्म्यमिति समाहारद्वन्द्वः मात्स्यं कौर्म्यं चेत्यर्थः। इतीत्थं त्रिषट् अष्टादश ॥२३-२४॥

वेदपुराणसंहिताविभागोपपादनं निगमयति - **ब्रह्मन्निति**। हे ब्रह्मन्! मुनेर्बादरायणस्य[1] शिष्याणां प्रशिष्याणां शाखाप्रणयनं[2] वेदपुराणसंहिताप्रवर्तनं तच्च श्रोतॄणां ब्रह्मतेजसः ब्रह्मवर्चसस्य विदीपनमुद्दीपनमिति फलकीर्तनम् ॥१५॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां सप्तमोऽध्यायः ॥ ७ ॥

**विज०** एतादृशब्रह्मप्राप्तिः कदा स्यादिति तत्राह - **विरमेतेति**। वृत्तित्रयाश्रयं जाग्रत्स्वप्नसुषुप्तिलक्षणवृत्तित्रयविरूढं चित्तं हित्वा वृत्तित्रयाद्विरमेत उपरतं भवति, तदा योगेन ध्यानलक्षणया उपासनया निरन्तरं श्रीनारायणकथाश्रवणलक्षणोपासनया चात्मानं परमात्मानं वेद जानाति, लभते प्राप्नोति च। ततः किमत्राह - नेति। आत्मा जीवः पुनर्निवर्तते नैव "न च पुनरावर्तते न च पुनरावर्तते" (छान्दो.उ.8-15-1) इति श्रुतेः ॥२१॥

उपसंहरन्नेव पुराणानां क्षिप्रप्रवृत्तये संख्यामाह - **एवमिति**। क्षुल्लकानि लोकसंख्यापरिमितानि नत्वर्थतः, कानिचिदर्थतः शब्दतः फलतोऽपि महान्ति ॥२२॥

तानि क्रमेण निर्दिशति - ब्राह्ममित्यादिना ॥२३॥

त्रिषट् अष्टादश ॥२४॥

अत्र शिष्यप्रशिष्यैः शाखाप्रणयनं वेदपुराणकर्तृब्रह्मणोऽनभिमतं कृतमिति माशङ्कीत्याह - **ब्रह्मणेति**। शिष्यादीनामेतच्छाखाप्रणयनं ब्रह्मणैव समाख्यातं, कथितं कीदृशं ब्रह्मतेजोविदीपनं, ब्रह्मतेजसः प्रकाशकं निरर्थकं प्रणयनं, किमर्थं कृतमित्यतो वाह - ब्रह्मेति। ब्रह्मणः परमात्मनस्तेजसः प्रभावस्य विदीपनं प्रकाशनकरम् ॥२५॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वादशस्कन्धे सप्तमोऽध्यायः ॥७॥

**(श्रीविजयध्वजतीर्थरीत्या नवमोऽध्यायः न समाप्तः)**

---

1 A.B °सः . 2 A B add इति

# अष्टमोऽध्यायः

## शौनक उवाच

सूत!जीव चिरं साधो वद नो वदतां वर ।
तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥१॥

आहुश्चिरायुषमृषिं[1] मृकण्डुतनयं जनाः ।
यः कल्पान्तेप्युर्वरितो[2] येन ग्रस्तमिदं जगत् ॥२॥

स वा [3]अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः[4] ।
नैवाधुनापि भूतानां सम्प्लवः कोऽपि जायते ॥३॥

एक एवार्णवे भ्राम्यन् ददर्श पुरुषं किल ।
वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ॥४॥

एष नः संशयो भूयान् सूत[5]!कौतूहलं यतः ।
तं नश्छिन्धि महायोगिन्, पुराणेष्वपि सम्मतः ॥५॥

## सूत उवाच

प्रश्नस्त्वया महर्षेऽयं कृतो[6] लोकभ्रमापहः[8] ।
नारायणकथा यत्र गीता[7] कलिमलापहा ॥६॥

प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात् ।
छन्दांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः ॥७॥

बृहद्व्रतधरः शान्तो जटिलो वल्कलाम्बरः ।
बिभ्रत् कमण्डलुं दण्डमुपवीतं समेखलम् ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टमे तु तपश्चर्या मार्कण्डेयस्य मोहकैः ।
कामादिभिरसंमोहो नरनारायणस्तुतिः ॥१॥

पुराणविभागप्रसंगेन पुराणकर्तुर्मार्कण्डेयस्य चरित[9]प्रश्नमाह - **सूतेति**। त्वमेव वक्तुं योग्य इत्याह। तमसि संसारे भ्रमतां

---

1 A ˚ष्ड. 2 ABGJ ˚न्तेप्युर्व˚. 3 W आत्मकु˚. 4 W ˚भ˚ 5 M Ma जात 6 H V भया˚ . W मला˚ 7 H V ˚ता. 8 H.V ˚हा˚,
9 H V त पृच्छति

**पारदर्शनस्तन्निवर्तकः** ॥१॥

वक्तव्यमाह - **आहुरिति**। उर्वरितोऽवशिष्टः। येन कल्पान्तेन। एतत्कथं घटत इत्येकः प्रश्नः ॥२॥

प्रलयाभावादप्येतन्न घटत इत्याह - **स वा** इति। यतो भार्गवर्षभः। कोऽपि प्राकृतिको नैमित्तिको वा ॥३॥

अन्यदप्यघटितमेवेत्याह - **एक एवेति**। तोकं बालकम् ॥४॥

**एष** इति। कौतूहलमौत्सुक्यम्। तं संशयम्। न केवलं त्वं महायोगी, किन्तु पुराणेष्वपि ज्ञातृत्वेन सम्मतः ॥५॥

प्रश्नमभिनन्दति - **प्रश्न** इति। हे महर्षे! अयं प्रश्नः। तत्र हेतुः नारायणेति। यत्र प्रश्नविषये ॥६॥

तत्र मार्कण्डेयस्तपसा भगवन्तमाराध्य मायाप्रदर्शनं वव्रे। ततश्च तेनैव भगवन्मायया सप्तकल्पाः दृष्टा नान्यैरित्युत्तरं वक्तुमादित आरभ्य तस्य चरितमाह - **प्राप्त** इत्यादिना। मार्कण्डेयो मृत्युं जिग्ये इति पंचमश्लोकेनान्वयः। मध्यमग्रन्थेन तस्य धर्मः कथ्यते। प्राप्तो द्विजातिसंस्कार उपनयनाख्यो येन सः। पितुः सकाशाद् गर्भाधानादिक्रमात्, छन्दांसि वेदान् ॥७॥

**बृहद्व्रतधर** इति। बृहद्व्रतधरो नैष्ठिको ब्रह्मचारी सन् ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

पुराणगणनायां मार्कण्डेयपुराणमित्युक्तं, तत्र तत्पुराणकर्तुः मार्कण्डेयस्य मुनेः चरित्रं बुभुत्सुः तत्कथनाय सूतं स्तौति शौनकः - **सूतेति**। हे सूत! हे साधो! हे वदतां वर! चिरञ्जीव। नोऽस्मभ्यं वद, यदन्यच्छुश्रूषितं तद्वदेत्यर्थः। यतस्त्वमपारे तमसि अज्ञाने, तत्कार्ये संसारे वा भ्रमतां नृणां जनानां तत्पारं दर्शयतीति तथाभूतस्त्वमेव; अतो वदेत्यर्थः ॥१॥

किं तच्छुश्रूषितमित्यत्राऽह - **आहुरिति**। चिरायुषमेव दर्शयितुं विशिनष्टि - यः कल्पान्तेऽप्युर्वरितः अवशिष्टः, येन भगवतेदं जगत् ग्रस्तं, तच्च ददर्शेति शेषः। यद्वा, येनेदं जगत् कल्पान्ते ग्रस्तं, तेनोर्वरितोऽवशेषितो यः इति सम्बन्धः। मार्कण्डेयस्य एतत्कल्पप्रसूतत्वे शास्त्रान्तरविरोधपरिहारो द्रष्टव्यः। एतत्कल्पप्रसूतो मार्कण्डेयोऽन्यो वा स्यादित्यविरोधः ॥२॥

तत्र आत्मनस्संशयमुद्धाटयति - **स वा** इति। हे भार्गवर्षभ! स वै मार्कण्डेयः अस्मिन्नेव कल्पे स्वकुलोत्पन्नः, ततः किम्, अत आह - नैवेति। अधुनाऽपि भूतानां सम्प्लवः प्रलयः कोऽपि नैव जायते। अस्मिन्नेव कल्पे जातः। कथ मसञ्जातं सम्प्लवमद्राक्षीदिति संशय इत्यर्थः ॥३॥

उर्वरितत्वमेव प्रपञ्चयति - **एक** एवेति। अर्णवे प्रलयार्णवे भ्राम्यन् वटपत्रस्य पुटे तले शयानं तोकमर्भकं बालकं पुरुषं

---

1 HV कर्तव्य. 2 J मि. 3 HV °क्त. 4 W °यमि°. 5 W omit मुने. 6 AB चरित. 7 W omit जनानां. 8 AB अस्मत्कु°. 9 AB संकर्षम°

ददर्श। बालस्याल्पत्वसूचनाय तोकमित्युक्तम्। अतो न पौनरुक्त्यम् ॥४॥

इत्थं संशयमाविष्कृत्य तन्निरासाय चोदयति - **एष** इति। एषः "स वा आत्मकुलोत्पन्नः" इत्यादिनोक्तः, यतः संशयात् महत्कौतूहलं यद्वृत्तान्तश्रवणौत्सुक्यं भवति तन्नोऽस्माकं संशयं छिन्धि। न केवलं त्वं योगी किन्तु पुराणेष्वपि ज्ञातृत्वेन सम्मतः ॥५॥

इत्थमापृच्छ्य तच्चरित्रं विस्तरतो विवक्षुः, तावत्प्रश्नमभिनन्दति सूतः, - **प्रश्न** इति। हे महर्षे! त्वया कृतोऽयं प्रश्न लोकस्य मलमपहन्तीति तथा। तत्र हेतुः, यत्र यत् प्रश्नोत्तरे कलिमलं कलियुगप्रयुक्तं मलमपहन्तीति तथाभूता नारायणकथा गीता भविष्यति ॥६॥

आदितस्तच्चरित्रं वर्णयति - **प्राप्तेत्यादिना** यावद्दशमाध्यायसमाप्ति। मार्कण्डेयो मृत्युं विजिग्ये इति पञ्चमेनाऽन्वयः। क्रमाद्गर्भाधानादि संस्कारक्रमात्प्राप्तः द्विजातिसंस्कारः उपनयनसंस्कारो येन सः धर्मेण शास्त्रोक्तविधिना छन्दांसि वेदानधीत्य तपसा स्ववर्णाश्रमोचितेन स्वाध्यायेन वेदेन च संयुक्तः ॥७॥

बृहद्व्रतधरः नैष्ठिकब्रह्मचर्यव्रतधरः नियमर्द्धये नियमस्य स्वधर्मस्य ऋद्धिः वृद्धि स्तस्यै कमण्डल्वादिकं बिभ्राणः सन्ध्ययो स्सायंप्रातस्सन्ध्ययोः अन्यादिषु हरि मर्चयन् तत्रात्मा स्वहृदयं गुर्वर्थं भैक्षमाहृत्य तेनाऽनुज्ञातश्चेत्तर्हि बुभुजे, सकृदेकवारं[1] नो चेदननुज्ञातश्चेदुपोषितो भवति ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये मार्कण्डेयकथाव्याजेन हरेर्निरतिशयमाहात्म्यं ब्रूते। पुराणविभागप्रसङ्गेन पुराणकर्तुर्मार्कण्डेयस्य चरित तत्र शौनकः सूतं पृच्छति - **सूतेति**। वद भगवत्कथाद्योतिनीं, कथामिति शेषः ॥१॥

येन कल्पान्तेन इदं जगद्ग्रस्तं तस्मिन् कल्पान्तेऽप्युर्वरितः अवशिष्टः ॥२॥

अस्मत्कुलसम्बन्धित्वात्तच्चरितमवश्यं श्रवणार्हमित्याशयवानाह - **स वा** इति। तस्य भूतानां मध्ये कोपि सम्प्लवो नाश इति वा ॥३॥

तस्यामवस्थायां प्रलय इवार्णवे पुरुषं ददर्श किलेति वा ॥४॥

यतः संशयान्महाकौतूहलविषयोऽर्थः मम संशयच्छेदनं कथमुपपद्यत इति तत्राह - **पुराणेष्विति**। ज्ञातृत्वेन सम्मतो भवानिति ॥५॥

---

1. W omits एकवारं

मार्कण्डेयकथाया लोकाज्ञाननिवारणसामर्थ्यं कुतः? इत्यत्राह - नारायणेति। यत्र मार्कण्डेयकथायां तत्कथाविषयः प्रश्नः ॥९॥

पितुर्मृकण्डोः प्राप्तद्विजातिसंस्कारः अन्नप्राशनोपनयनान्तब्राह्मण संस्कारान्प्राप्तः ॥७॥

बृहद्व्रतधरः ब्रह्मचारिव्रतधरः ॥८॥

कृष्णाजिनं साक्षसूत्रं[1] कुशांश्च नियमर्द्धये ।
अग्न्यर्कगुरुविप्रा[2]त्मस्वर्चयन् सन्ध्ययोर्हरिम् ॥९॥

सा[3]यं प्रातस्स गुरवे भैक्ष्यमाहृत्य वाग्यतः।
बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ॥१०॥

एवं तपःस्वाध्याय[4]परो वर्षाणामयुतायुतम्।
आराधयन् हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥११॥

* ब्रह्मा भृगुर्भवो दक्षो ब्रह्मपुत्राश्च येऽपरे ।
नृदेवपितृभूतानि तेनाऽसन्नतिविस्मिताः ॥१२॥

इत्थं [5]बृहद्व्रतधरः तपःस्वाध्यायसंयमैः।
दध्यावधोक्षजं यो[6]गी ध्वस्तक्ले[7]शान्तरात्मना ॥१३॥

तस्यैवं युञ्जतश्चित्तं महायोगेन योगिनः।
व्यतीयाय महान्कालो मन्वन्तरषडात्मकः ॥१४॥

एतत्पुरन्दरो ज्ञात्वा सप्तमेऽस्मिन्किलान्तरे ।
तपोविशङ्कितो ब्रह्मन्नारेभे तद्विघातनम् ॥१५॥

गन्धर्वाप्सरसः कामं वसन्[8]तमलयानि[8]लौ।
मुनये प्रेषयामास रजस्तोकमदौ त[9]था ॥१६॥

श्रीध० कृष्णाजिनमिति। [10]तन्नियमर्द्धये [11]धर्माभिवृद्धये। अग्न्यादिषु पञ्चसु हरिमर्चयन् ॥९॥
सायमिति। भैक्ष्यं गुर्वर्थमाहृत्य तेनाऽनुज्ञातश्चेत्तर्हि बुभुजे। नो चेत् सकृत् कदाचित् उपोषितो भवति ॥१०,११॥
ब्रह्मेति। तेन [12]मृत्युंजयेन ॥१२॥

1. H V कुशान्सवि॰, 2 M Ma ०प्रांश 3 H V ॰तस्स्व॰, 4 H V ॰रतो * This verse is not found in W edition, 5 H V ब्रह्मव्रत, 6 H V ०ग M.Ma गात्, 7 M.Ma ॰शोऽन्त॰, 8 H M Ma V ॰न्त मलयानिलम्।, 9 H V तदा।, 10 A B J omit तत्, 11 A.B.J धर्मवृ॰, 12 A B J मृत्यु

**इत्थमिति**। योगेन[1] ध्वस्ताः क्लेशाः रागादयो यस्य तेनान्तरात्मना प्रत्याहृतेन[2] मनसा ॥१३,१४॥

तस्य तपोनिष्ठामितिहासेनवर्णयति - **एतदित्यादिना**। अस्मिन् सप्तमे मन्वन्तरे। तपसा मत्पदं ग्रहीष्यतीति विशङ्कितः ॥१५॥

**गन्धर्वेति**। मुनये मुनिं भ्रंशयितुम्।[3] रजसस्तोकमतिप्रियमपत्यं, लोभो मदश्च तौ ॥१६॥

**वीर०** एवमिति सुदुर्जयं सुतरां दुःखेनापि जेतुमशक्यं मृत्युं जिग्ये, जितवानित्यर्थः ॥९-१२॥

**इत्थ** मिति। योगेन ध्वस्ताः क्लेशा रागादयो यस्य तेनाऽन्तरात्मना प्रत्याहृतेन मनसा अधोक्षजं दध्यौ ध्यातवान् ॥१३॥

**तस्येति**। युञ्जतः समादधत्तः सतः महान् भूयान् तदेवाह मन्वन्तरषडात्मकः व्यतीयाय व्यतिक्रान्तोऽभूत् ॥१४॥

तस्य तपोनिष्ठादार्ढ्यमितिहासेन वर्णयति - **एत दित्यादिना**। पुरन्दर इन्द्रः एतत्तपश्चरणं ज्ञात्वा सप्तमेऽस्मिन् मन्वन्तरे वैवस्वतमन्वन्तरे हे ब्रह्मन् तपसा विशङ्कितः किं वाऽयं मत्पदं जिघृक्षेदिति[4] सञ्जातशङ्कः[4] तद्विघातनं[5] तपोविघातमारब्धवान् ॥१५॥

**गन्धर्वांश्चाऽप्सरसश्च** ताः मुनये मुनिं भ्रंशयितुं गन्धर्वादीन् प्रेषयामास स्वयं रजस्तोकमदौ रजस्तोको लोभः तस्य रजोगुणप्रभवत्वात्, तञ्च मदश्च तौ प्रेषयामास ॥१६॥

**विज०** हरिं, स्मरन्निति शेषः ॥९॥

नो चेदनुज्ञाभावे ॥१०,११॥

तेन कर्मणा॥१२॥

मनोयोगादन्तरात्मनाऽन्तर्यामिणा ध्वस्तक्लेशः ॥१३,१४॥

अस्मिन् सप्तमे मन्वन्तरे तपसो विशङ्कितः तद्विघातनं तस्य तपसो विघ्नम् ॥१५॥

रजोगुणं स्तोकमदौ व्यर्थकर्मदर्पौच। अत्र कामादयो मूर्तिमन्तो निर्दिश्यन्ते ॥१६॥

**ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे।**
**[6]पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो! ॥१७॥**

---

1 A.B J omit योगेन . 2 ABJ °हृतम्°. 3 B रज°. 4-4 AB सशयं प्राप्त . 5 W तस्य . 6 M Ma पुष्प°

तदाश्रमपदं[1] पुण्यं पुण्यद्रुमलता[2]ञ्चितम् ।
पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम् ॥१८॥

मत्तभ्रमरसङ्गीतं मत्तकोकिलकूजितम् ।
मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम् ॥१९॥

वायुः प्रविष्ट आदाय हिमनिर्झर[3]शीकरान् ।
सुमनोभिः परिष्वक्तो ववावुत्तम्भयन् स्मरम् ॥२०॥

उद्यच्चन्द्रनिशावक्त्रः प्रवालस्तबकालिभिः ।
गोपद्रुमलताजालै स्तत्राऽसीत्कुसुमाकरः ॥२१॥

अन्वीयमानो गन्धर्वै गीतवादित्र[4]यूथिकैः ।
अदृश्यताऽऽत्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः ॥२२॥

हुत्वाग्निं[5] समुपासीनं ददृशुश्शक्रकिङ्कराः ।
मिलिताक्षं दुराधर्षं मूर्तिमन्तमिवाऽनलम् ॥२३॥

ननृतुस्तस्य पुरतः स्त्रियो[6]ऽथो गायका जगुः ।
मृदङ्गवीणापणवैः वाद्यं चक्रुर्मनोरमम्[7] ॥२४॥

**श्रीध० तदिति** । तदाश्रमं पदं प्रविष्टो वायुर्ववाविति तृतीयेनाऽन्वयः । पुण्यै द्रुमै र्लताभिश्चा[8]र्चितम् पूजितम् । पुण्यानां[9] द्विजानामृषीणां कुलैः आकीर्णम् व्याप्तम्[10] पुण्या अमला जलाशया यस्मिन् तत् ॥१७,१८॥

**मत्तेति** । मत्तभ्रमराणां सङ्गीतं यस्मिन्, मत्तकोकिलानां कूजितं यस्मिन्, मत्ता बर्हिण एव नटा स्तेषामाटोपो [11]नृत्यसम्भ्रमो[12] यस्मिन् । मत्तानां द्विजानां पक्षिणां कुलैराकुलं व्याप्तम् ॥१९॥

**वायुरिति** । एवम्भूतं तदाश्रमपदं प्रविष्टस्सन् वायुः मलयाऽनिलो ववौ प्रससार । उत्तम्भयन् उद्दीपयन्, तत्र वृक्षेषु प्रवेशान्मान्द्यं, हिमनिर्झरकणानामादानाच्छैत्यं पुष्पपरिष्वङ्गात्सौगन्ध्यञ्चोक्तम् ॥२०॥

किञ्च **उद्यदिति** । उद्यंश्चन्द्रो यस्मिन् तत् निशावक्त्रं रजनीमुखं यस्मिन्सः । प्रवालस्तबकानामालयः श्रेणयो येषु

1 MMa तत्राश्र° . W गत्वाश्र 2 HV °तार्चितम् MMa °तान्वितम्, 3 MMa गाधन्दुम° . 4 ABGJ यूथकै ; MMa यूथपैः . 5 HV तमु° . 6 HV °वै. 7 HV हरम् . 8 ABJ °ऽर्चितम् . 9 ABJ °व्यद्वि° . 10 A omits व्याप्तम्, 11 HV omit नृत्य . 12 HV °सद्वि°

तैः। गुप्यन्ति विटपैः संश्लिष्यन्तीति गोपा, द्रुमा लताश्च तेषां जालैः समूहैरुपलक्षितकुसुमाकरः वसन्तः आसीत् आविर्बभूव ॥२१॥

किञ्च **अन्वीयमान** इति। तदा गीतवादित्रयूथिकैगायकादिसमुदायिभिर्गन्धर्वैरन्वीयमानः। तथा स्वःस्त्रियोऽप्सरसः, तासां यूथस्य पतिः आत्तः चापः इषुश्च येन स, स्मरश्च तत्राऽदृश्यत ॥२२॥

**हृत्वेति**। दुराधर्षमभिभवितुमशक्यम् ॥२३,२४॥

**वीर०** ते वा इति। गन्धर्वादयः हिमाचलस्योत्तरे पार्श्वे तत्राऽपि यत्र पुष्पभद्रा नाम नदी तत्रापि, यत्र च चित्राख्याशिला तत्र तदाश्रमं मार्कण्डेयाश्रमं जग्मुः। हे विभो इति सम्बोधनम् ॥१७॥

**तादिति**। तस्य मार्कण्डेयस्य आश्रमपदं प्रविष्टो वायुर्ववाविति तृतीयेनान्वयः। आश्रमपदं विशिनष्टि - पुण्यं पुण्यावहं पुण्यैर्द्रुमैर्लतादिभिश्चाऽश्चितं पूजितं आकुलमिति पाठान्तरम्। पुण्यानां द्विजानामृषीणां कुलैस्समूहैराकीर्णं, पुण्या अमलाश्च जलाशया यस्मिंस्तत् ॥१८॥

मधुपानमत्तानां भ्रमराणां सङ्गीतं यस्मिन्, मत्तकोकिलानां कूजितं यस्मिन्, मत्ता बर्हिणो मयूरा एव नटाः तेषामाटोपः सम्भ्रमो यस्मिन् मत्तानां द्विजानां पक्षिणां कुलैः आकुलं व्याप्तम् ॥१९॥

इत्थम्भूतं तदाश्रमपदं मलयानिलः शीतलगिरिनदीशीकरानादाय सुमनोभिः कुसुमैः परिष्वक्तः स्मरं काममुत्तम्भयन् उद्दीपयन् ववौ ससार। एवं मलयानिलस्य व्यापार उक्तः ॥२०॥

अथ वसन्तस्य तमाह **उद्यदिति**। उद्यंश्चन्द्रो यस्मिंस्तत् निशावक्त्रं रजनीमुखं यस्मिन् स प्रवालानां पल्लवानां स्तबकानां गुच्छानाञ्च अलयः श्रेणयो येषु तैः। गोपद्रुमलताजालैः गुप्यन्ते विटपैः संश्लिष्यन्ते इति गोपाः द्रुमाः लताश्चेति तेषां जालैः समूहैरुपलक्षितः कुसुमाकरो वसन्तः तत्र प्रादुर्बभूव ॥२१॥

अथ कामस्य तमाह - **अन्वीयमान** इतिगीत। वादित्राणां मृदङ्गादीनां यूथं येषामस्तीति तथा तैः मत्वर्थीयष्टन्, गन्धर्वैरन्वीयमानः युज्यमानः गृहीतधनुर्बाणः स्वःस्त्रीणामप्सरसां यूथस्य पतिः स्मरः कामः अदृश्यतालक्ष्यत ॥२२॥

**हृत्वेति**। उपासीनं तं मार्कण्डेयं मूर्तिमन्तं पुंविग्रहधारिणम् अनलमिव स्थितं ददृशुः ॥२३॥

**ननृतु** रिति तस्य मार्कण्डेयस्य अथो अथ वाद्यं स्तुतिसूचकं ध्वनिं चक्रुः ॥२४॥

1--1 A B J omit. 2 ABJ "च". 3 ABJ आत्त चाप. 4 W भद्राख्या. 5--5 W omits 6--6 W omits 7 W omits व्याप्तम्. 8 W omits काम

विज० आटोपं सविलासनृत्यम् ॥१७-१९॥

उत्तम्भयन् वर्धयन् ॥२०॥

उद्यच्चन्द्रो यस्य स तथा, स च निशावक्त्रः प्रदोषे यस्य स तथा, कुसुमाकरः वसन्तः प्रवालस्तबकालिभिः भृङ्गैः गायन् द्रुमलतामुकुलैः सहाऽसीत् 'आवि' रिति शेषः ॥२१॥

आत्तचापेषुः धनुर्ज्यासहितबाणः, स्वःस्त्रीयूथपतिः स्वर्गस्त्रीगणनाथः ॥२२॥

अग्निं हुत्वोपासीनमग्निसमीपे तिष्ठन्तं, दुराधर्षं चलितेन्द्रियं कर्तुमशक्यम् ॥२३,२४॥

सन्दधेऽस्त्रं स्वधनुषि कामः पञ्चमुखं तदा।
मधुर्मदोरजस्तोक इन्द्रभृत्या व्यकम्पयन् ॥२५॥

क्रीडन्त्याः पुञ्जिकस्थल्याः कन्दुकैः स्तनगौरवात्।
भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः ॥२६॥

इतस्ततो भ्रमद्दृष्टेश्चलन्त्या अनुकन्दुकम्।
वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥२७॥

वि[illegible] पर्ज तदा [illegible] मत्वा तं स्वजितं स्मरः।
सर्वं तत्र [illegible] धमनीशस्य यथोद्यमः ॥२८॥

त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने।
दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥२९॥

इतीन्द्रानुचरैर्ब्रह्मन् धर्षितोऽपि महामुनिः।
यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥३०॥

दृष्ट्वा निस्तेजसं कामं सगणं भगवान् स्वराट्।
श्रुत्वाऽनु भावं ब्रह्मर्षेर्विस्मयं समगात्परम् ॥३१॥

तस्यैवं युञ्जतश्चित्तं तपः स्वाध्यायसंयमैः।
अनुग्रहायाऽविरासीन्नरनारायणो हरिः ॥३२॥

A [illegible] J H J V मनो, 2 M Ma पुञ्जक, 3 M Ma विप्र', 4 H V वल्गन्त्या, 5 M Ma ततो 6 H V स इन्द्रानु', 7 M Ma 'हत्स्वपि।

**श्रीध० सन्धत्ते इति।** शोषण[1] दीपन सम्मोहन[1] तापनोन्मादनाख्यानि पञ्चमुखानि यस्य तदस्त्रं सन्दधे। **तदैव मधुर्वसन्तः** रजस्तोकश्च, पुंस्त्वमार्षम्। अन्येचेन्द्रभृत्यास्तस्य मनो व्यकम्पयन् ॥२५,२६॥

**किश्च इत इति** वायुर्मलयानिलः पुञ्जिकस्थल्या स्तत्सूक्ष्मं वासो जहार ॥२७॥

**विसस्सर्जेति।** सर्वं तेषां कर्म तत्र तस्मिन्, मोघं व्यर्थम्, अनीशस्य निर्दैवस्य ॥२८॥

**त इति।** मुनेरपकुर्वन्तः प्रतिकूलमाचरन्तः। हे मुने ॥२९॥

**इतीति।** अहमोऽहङ्कारस्य। भावं विकारम् ॥३०॥

**दृष्ट्वेति।** निस्तेजसं म्लानवदनम्। स्वराडिन्द्रः ॥३१॥

**तस्यैति।** नरनारायणरूपो हरिः ॥३२॥

**वीर०** सन्दध इति। पञ्च अरविन्दादीनि मुखानि यस्य तदस्त्रं स्वे धनुषि सन्दधे। मधुर्वसन्तः रजस्तोको लोभो मदश्चेति एते इन्द्रभृत्याः व्यकम्पयन् अक्षोभयन् ॥२५॥

क्रीडन्त्या इति। पुञ्जिकस्थलीनामाऽप्सराः तस्याः कन्दुकैः क्रीडन्त्याः स्तनभाराद्भृश मुद्विग्नमध्यायाः चलन्मध्यायाः केशेभ्यो विस्रंसिता। स्रक् यस्या स्तस्याः ॥२६॥

कन्दुकमनुसृत्य इतस्ततो भ्रमन्त्यौ दृष्टी यस्याः तस्याः चलन्त्याः अत एव त्रुटिता मेखला यस्मिन् तत् सूक्ष्मं वासो वस्त्रं वायुर्जहार ॥२७॥

**विससर्जेति।** तदा पुञ्जिक[illegible]न्त्याः नम्रतादशायां तत्र तस्मिन् मुनौ सर्वमेतत्कृत्यं मोघ व्यर्थमभवत्। यथा अनीशस्य निर्धनस्य उद्यमस्तद्वत् ॥२८॥

**त इति।** हे मुने! मुनेः मुनये इत्थमपकुर्वन्तः तस्य मुनेस्तेजसा दह्यमाना निववृतुः निवृत्ता बभूवुः। यथाऽर्भकाःऽहिं सर्पं प्रबोध्य ततो निवर्तन्ते तद्वत् ॥२९॥

चित्रमेतदहो तस्य जितेन्द्रियत्वमिति विस्मयमानमालोक्याऽह - **इतीति।** हे ब्रह्मन् धर्षितः प्रलोभितोऽपि यदहमोऽहङ्कारस्य भावं विकारं मोहं नाऽगादिति न प्रापेत्येतन्महत्सु न चित्रम् ॥३०॥

**दृष्ट्वेति।** स्वराडिन्द्रः निस्तेजसं परिम्लानवदनं कामं दृष्ट्वा, ब्रह्मर्षे मार्कण्डेयस्य प्रभावं श्रुत्वा च परंभृशं विस्मय मगात् ॥३१॥

---

1-1 HV मोहन सन्दीपन

तस्येति नरनारायणो नरसहितः श्रीनारायणः ॥३२॥

**विज०** पुञ्जिकस्थल्याः अप्सरसां प्रधानायाः कस्याश्चिदप्सरसः केशविभ्रंशितस्रजः केशभागात् विभ्रंशिता विभ्रष्टा स्रक् यस्याः सा तथा तस्याः ॥२६॥

अनुकन्दुकं उत्पतत् कन्दुकानुकूलं यथा भवति तथा चलन्त्याः सूक्ष्ममणुतरं त्रुटितमेखलं त्रुटिता छिन्ना मेखला काञ्ची यस्याः तत्तथा तत् ॥२७॥

स्वेन आत्मना जितम् ॥२८॥

अर्भका अहिं प्रबोध्येव ॥२९॥

अहमोऽहङ्कारस्य भावं नाऽगात् कपालमुक्तनारिकेलफलवद्देहाभिमानरहित इत्यर्थः ॥३०॥

निस्तेजसं दुर्बलम्। स्वर्गाडिन्द्रः ॥३१॥

नरेण युक्तो नारायणः नरनारायणः ॥३२॥

तौ शुक्लकृष्णौ नवकञ्जलोचनौ चतुर्भुजौ रौरववल्कलाम्बरौ ।
पवित्रपाणी उपवीतकं त्रिवृत् कमण्डलुं दण्डमृजुञ्च वैणवम् ॥३३॥

पद्माक्षमाला मुत जन्तुमार्जनं वेदञ्च साक्षात्तप[1] एकरूपिणौ ।
[2] तटिद्वर्णौ शङ्गरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥३४॥

[3] ते वै भगवतो रूपे नरनारायणा वृषी ।
[4] वीक्ष्योत्थायादरेणोच्चैर्ननामाङ्गेन दण्डवत् ॥३५॥

[5] स तत्सन्[6]दर्शनानन्दनिर्वृतात्मेन्द्रियाशयः ।
हृष्टरोमाश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥३६॥

उत्थाय प्राञ्जलिः प्रह्व औत्सुक्यादाश्लिषन्निव ।
नमो नम इतीशानौ बभाषे गद्गदाक्षरम् ॥३७॥

तयो रासन मादाय पादयो रवनिज्य च ।
अर्हणेनाऽनुलेपेन धूपमाल्यै रपूजयत् ॥३८॥

---

1 ABGHJV एव. 2 ABGJMMa तडि 3 HV तौ 4 ABGJ दृष्ट्वो 5 MMa एतस्य 6 MMa नियता. 7 ABGHJV र I. 8 HV मानीव

**सुखमासनमासीनौ[1] प्रसादाभिमुखौ[2] मुनिः[3] ।**

**पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥३९॥**

**मार्कण्डेय उवाच**

**किं वर्णये तव विभो यदुदीरितोऽसुः संस्पन्दते तमनुवाङ्मन इन्द्रियाणि ।**

**स्पन्दन्ति वै तनुभृतामजशर्वयोश्च[4] स्वस्याप्यथापि भजतामसि भावबन्धुः ॥४०॥**

**श्रीध०** तावनुवर्णयति द्वाभ्यां ताविति । रौरवं कृष्णाजिनं, वल्कलश्चाऽम्बरं ययो स्तौ, पवित्रे पाण्यो र्ययोस्तौ । त्रिवृत् त्रिगुणं, नवतन्तुकमिति वा । 'त्रिवृद्बहिः पवमान' मित्यादौ नवके प्रयोगात्[5] । उपवीतकादीन्दधानौ ॥३३॥

**पद्मेति** । [6]जन्तुमार्जनं सूक्ष्मतन्त्वादिमयम्[6] । वेदं दर्भमुष्टिम् । किञ्च साक्षात्तप एव तौ । तत्र हेतुः तपत्तटिद्वर्णं देदीप्यमानविद्युत्सङ्काशं यत्पिशङ्गं रोचिः तेन, रुपिणौ मूर्तिमन्तौ । तादृक्तेजोयुक्तमूर्तिभ्यां तपोमयत्वेन प्रकाशमानावित्यर्थः । प्रांशू उन्नतौ ॥३४॥

**ते** इति उच्चैर्महताऽऽदरेण ॥३५॥

**स** इति । तयोस्सन्दर्शनेन य आनन्दस्तेन निर्वृता उपशान्ता आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य सः । न सेहे नाऽशक्नोत् ॥३६॥

**उत्थायेति** । आश्लिषन्नाऽलिङ्गन्निव ॥३७॥

**तयोरिति** । पादयो रवनिज्य पादौ प्रक्षाल्य । अर्हणेनाऽर्घ्येण । ३८॥

**सुखमिति** । पादाभ्यां पादावानम्य गरिष्ठौ पूज्यतमौ तौ[7] प्रति ॥३९॥

अन्तर्यामिण स्तस्यैव प्राणादिप्रवर्तकत्वादात्मन तत्[8]स्तुतावस्वातन्त्र्यं पश्यन्नाह - **किमिति** हे[9] विभो तव त्वां कि महं वर्णये कथं स्तौमि । यत् येन त्वयैवोदीरितः प्रेरितो[10]ऽसुः प्राणः संस्पन्दते प्रवर्तते, तमनु च वागादयः स्पन्दन्ति । अत्र हेतुः, वै अन्वयव्यतिरेकाभ्यां 'श्रोत्रस्य श्रोत्रं' मित्यादि श्रुतिभिश्चैतत्प्रसिद्ध मित्यर्थः । न केवलं प्राकृतानां तनुभृतां, किन्तु अजशर्वयोश्च, अतः स्वस्य ममापि तथैव । एवं यद्यपि न [11]क्वचिदपि कस्याऽपि स्वातन्त्र्यमथापि दारुयन्त्रवत्त्वत्प्रवर्तितैरपि वागादिभिः भजतां पुंसां त्वं[12] भावबन्धु रात्मबन्धुरसि, न तु पित्रादिवद्देहमात्रबन्धुः । अहो कृपालुता तवेत्यर्थः ॥४०॥

---

1 W 'ने आ' . 2 MMa मुखो. 3 A B G J मुनी. 4 MMa 'बद्ध 5 H V 'तक द' 6- -6 ABJ omit. 7 H V omit तौ 8 H V omit तत्, 9 A B J omits हे विभो. 10 B omits प्रेरित . 11 A B J omit क्वचिदपि. 13 A B J omit त्व

**वीर०** ताविति। तौ नरनारायणौ वीक्ष्य, उत्थायेत्युपरिष्टात्सम्बन्धः। [1]कथम्भूतौ शुक्लकृष्णौ। तत्र नरः शुक्लः श्रीनारायणः कृष्णवर्णः रौरवं कृष्णाजनं वल्कलश्च ते अम्बरे ययोस्तौ पवित्रे पाण्योः ययोस्तौ त्रिवृत् त्रिगुणं, नवतन्तुकमिति वा, तदुपवीतम्। द्वितीयान्तानां दधाना वित्युपरिष्टात्सम्बन्धः। ऋजुमवक्रं वैणवं दण्डम् ॥३३॥

पद्माक्षाणां मालाम् उताऽपि च जन्तुमार्जनं मशकादि जन्त्वपनोदनवस्त्रं वेदं दर्भमुष्टिश्च [2]दधानौ, साक्षात्तप एव एकं रूपं मूर्तिरनयोरस्तीति तथा, तपनटिद्वर्णं दीप्यमानतटिद्वर्णसदृशं यत्पिशङ्गरोचिस्तेन प्रांशू प्रगता [3]व्याप्ता अंशवो ययो स्तौ विबुधश्रेष्ठैः [4]ब्रह्मादिभिरर्चितौ ॥३४॥

ते इति। रूपापेक्षया नपुंसकनिर्देशः, वीक्ष्येति। उच्चैर्महताऽङ्गेन [5]देहेन ॥३५॥

स मार्कण्डेयस्तयोः सन्दर्शनेन यो आनन्दस्तेन निर्वृताः सुखिताः शान्ता वा आत्मेन्द्रियाशयाः देहेन्द्रियमनांसि यस्य सः दृष्टानि उत्पुलकितानि रोमाणि यस्य सः तावत्तौ [6]नरनारायणौ[6] द्रष्टुमपि न सेहे न शशाक ॥३६॥

उत्थायेति। प्रह्वः नम्रः आश्लिषन्निव परिरम्भमाण इव केवलं गद्गदाक्षरं नमो नम इति वाक्यम् ईश्वरौ प्रति आबभाषे। गद्गदाक्षरमिति क्रियाविशेषणम् वा ॥३७॥

तयो रिति। आधाय निधाय पादयो रवनिज्य पादौ प्रक्षाल्य अर्हणेन योग्येनाऽनुलेपेन चन्दनेन धूपैर्माल्यैः कुसुमैश्च अपूजयत् ॥३८॥

सुखं यथा तथा आसीनः गरिष्ठौ पूज्यतमौ प्रति इदं वक्ष्यमाण मब्रवीत् ॥३९॥

उक्तिमेवाह - किमित्यादिना यावदध्यायसमाप्ति। युवयोर्दर्शनं न मे तपःफलं तस्याऽपि सर्वेन्द्रियप्राणप्रचोदयित्रा त्वयैव कारितत्वात्। अतः केवलं त्वत्कृपाफल मेवेत्यभिप्रेत्याह - किमिति। हे विभो! तव त्वां किं वर्णये कथं स्तौमि, यतः स्वस्य मम तनुभृतां, किं बहुना, अजशर्वयोः ब्रह्मरुद्रयोश्च असुः प्राणः यतो येन त्वयोदीरितः प्रेरितः संस्पन्दते चलति स्वव्यापारक्षमो भवति तं स्पन्दमानं प्राणमनुसृत्य वागादीनि स्पन्दन्ति। अनुदात्तेत्वलक्षणस्याऽत्मनेपदस्य अनित्यत्वात्परस्मैपदम्। यद्येवं तर्हि सर्वेऽपि त्वमिव किं न मा मुपासते इत्यत्राह - अथाऽपीति। प्राणिमात्रस्य प्राणादिप्रचोदयितृत्वेऽपि भजतां पुंसामेव भावबन्धुः, भाव स्त्वदुपासनारूपोऽभिप्रायविशेषः, तं बध्नाति स्थिरीकरोतीति तथा त्वयि किञ्चिदानुकूल्ययुक्तानामेव भावबन्धुस्त्वमिति भावः ॥४०॥

---

1. W omits कथम्भूतौ. 2 W omits दधानौ।. 3 W omits व्याप्ता 4 W omits ब्रह्मादिभि. 5 W omits देहेन. 6-6 W omits. 7 W omits अब्रवीत्

विज० ऊरोर्विद्यमानं रौरवं वल्कलश्च अम्बरं वा ययोस्तौ ॥३३॥

जन्तुमार्जनं पिञ्जरचितपुञ्जि चामरविशेषमित्यर्थः। वेदं दर्भमुष्टिं,तपती प्रकाशमाना तडित्तपत्तडित् तद्वद्वर्णेन पिशङ्गरोचिषा कपिलप्रभया तप एकरूपिणौ प्रांशू अत्युच्छ्रितौ दधानौ, जग्मतुरिति शेषः। उपवीतादिकञ्च दधानौ, रूपविशेषणम् ॥३४॥

तौ नरनारायणावृषी वीक्ष्य ननाम। नमने हेतुमाह ते इति। ते हरे रूपे वै यस्मा त्तस्मात् ॥३५॥

तयो स्सन्दर्शनादुत्पन्नेनानन्देन नियतात्मेन्द्रियाशया यस्य स तथा ॥३६॥

गद्गदाक्षरं वचः ॥३७,३८॥

पादाभ्यां पादावुद्दिश्य, गरिष्ठौ गुरुणां ब्रह्मादीनामपि गुरुः ॥३९॥

अपरिमितमहिम्नोर्युवयोः पुरतो यत्किञ्चि द्वर्णनं किं वर्णये न किमपि; माहात्म्यानामनन्तत्वात्तदेकदेशमपि वर्णयितुं न शक्तोऽस्मि वागादीन्द्रियाणां त्वन्नियतत्वेन, त्वत्प्रसादायत्तत्वादिति शेषः। एतत्कथमित्याशङ्क्य सर्वेन्द्रियनायकः प्राणोऽपि भगवन्नियत एव चेष्टते किमुतान्यानीति भावेनाह - यदुदीरित इति। येन त्वयोदीरितः प्रेरितोऽसुः प्राणः तमनु प्राणमनु तनुभृतां मन इन्द्रियाणि यत्प्रेरितानि स्पन्दन्ति चेष्टन्ते किञ्च। अजशर्वयोश्चेन्द्रियाणि येन प्रेरितानि अनेनाऽजशर्वयोः समत्वेन त्वदप्रेरितानि विषयेषु प्रवर्तन्ते। अतो व्यभिचीर्णो हेतुरिति निरस्तम्। अथाऽपि त्वदिन्द्रियप्रवृत्तौ हेतोर्व्यभिचारस्तदवस्थ इति मन्दाशङ्कां परिहरति - स्वस्येति। स्वस्येन्द्रियाण्यपि त्वत्प्रेरितानि यद्यप्येवं स्वतन्त्रोऽसि, स्वतन्त्रोऽपि भजतां पुंसां भावबद्धोऽसि भक्तिबद्धोऽसि तस्मात्परतन्त्र इव प्रतीयसे मादृशानामित्यर्थः ॥४०॥

**मूर्ती इमे भगवतो भगवं स्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै।**
**नाना बिभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः ॥४१॥**

**तस्याऽवितुः[1] स्थिरचरेशितुरङ्घ्रिमूलं यत्स्थं न कर्मगुणकालरजः[2] स्पृशन्ति।**
**यद्वै स्तुवन्ति विनमन्ति यजन्त्यभीक्ष्णं ध्यायन्ति वेदहृदया मुनयस्तदाप्त्यै ॥४२॥**

**[3]नाऽन्यं तवाङ्घ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितोभिय[4] ईश विद्मः।**
**ब्रह्मा बिभेत्यलमतो द्विपरार्थधिष्ण्यः[5] कालस्य ते किमुत तत्कृतभौतिकानाम् ॥४३॥**

---

1 W यस्मात्र. 2 A.G.J 'रजः. 3 M Ma नान्यत्त. 4 M Ma 'भय. 5 A B J M Ma 'रार्ध्य'

*** तद्वै[1] भजाम्यृतधियस्तव पादमूलं हित्वेदमात्मच्छदि[2]मात्मगुरोः परस्य।**
**देहाद्यपार्थ[3]मसदन्त्यमभिज्ञमात्रं [4]विन्देत ते तर्हि[4] सर्वमनीषितार्थम् ॥४४॥**

**श्रीध०** ननु कथमावां प्राणादिप्रवर्तकौ धर्मपुत्रत्वादावयोरिति चेत् [5]न कस्यापि पुत्रः[5] इत्या[6]ऽऽह - **मूर्ती इति**। हे भगवन्! भगवतस्तव इमे मूर्ती त्रिलोक्याः क्षेमाय पालनाय तापविरमाय च दुःखनिवृत्यै मृत्युजित्यै मोक्षाय च। न तु त्वं कस्याऽऽपि पुत्र इत्यर्थः। अत्र दृष्टान्तः यथेदं विश्वमवितुं मन्या स्तनू [7]मूर्तीः मत्स्यकूर्मादिलक्षणा नाना अनेकप्रकारा बिभर्षि, तद्वत्। न केवलं [8]पालनादिमात्रं तव कर्म किन्तु सृष्टिलयावपीत्याह सृष्टेति। तत्राऽप्यन्यनिरपेक्षत्वे दृष्टान्तः ऊर्णनाभिरिवेति ॥४१॥

यस्मा देवम्भूतस्त्वं, तस्मात्तवाङ्घ्रिमूलं भजामीत्याह - **तस्येति**। तस्याऽवितुः पालकस्य स्थावरजङ्गमानामीश्वरस्य अङ्घ्रिमूलं भजमीति तृतीयश्लोकस्थस्या[9]ऽनुषङ्गः। कथम्भूतमङ्घ्रिमूलम्? यत्स्थं यत्र स्थितम्। कर्मगुणकालानां रजो मलम्। अन्ये च पूर्वोक्तास्तापादयो न स्पृशन्ति रुज इति वा पाठः। यतो वेदाः हृदये येषां ते वेदतात्पर्यविदो मुनयो यदेव स्तुवन्ति नितरां नमन्ति [10]तदाप्त्यै [11]तत्प्राप्तये [12]एव स्तवनानि कुर्वन्ति ॥४२॥

ततोऽन्यः पुरुषार्थो नाऽस्तीत्याह - **नाऽन्यमिति**। [13]तव अङ्घ्र्युपनयात् श्रीमच्चरणप्राप्तेरन्यं विद्यः क्षेमं। परितः सर्वेष्वपि लोकेषु भीर्यस्य तस्य जनस्य। तदेवाह। द्विपरार्धं धिष्ण्यं स्थानं यस्य स ब्रह्माऽपि ते कालस्य त्वद्भ्रूविजृम्भरूपात्कालादलं बिभेति। अतः किमुत वक्तव्यं [14]तेनैव ब्रह्मण कृतानां भौतिकानां प्राणिनां भयमिति ॥४३॥

यस्मादेवं तदिति तत्तस्मात्तव पादमूलमेव भजामि। कथम्भूतस्य? ऋतधियः सत्यज्ञानस्वरूपस्य। यद्वा [15]ऋता सत्या धीर्यस्य यस्मिन्वा तस्यात्मगुरोः जीवनियन्तुः अतः कारणात्परस्य। किं कृत्वा आत्मच्छदि स्वात्मावारक[16]मपार्थञ्च निष्फलमसञ्च तुच्छमन्त्यञ्च नश्वरमिदं दे[17]हगेहादिकं हित्वा देहादिभजनं त्यक्त्वा। असच्चेत् कथं [18]प्रतीयेत? तत्राह - अभिज्ञमात्रम्। नाह्यत्यन्तमसत्, किन्त्वात्ममात्रम्, न ततः पृथगस्तीत्यर्थः। नन्वपवर्गाय भवतु मद्भजनं, फलान्तरार्थं त्वन्यभजनं कार्यमेव। तत्राह तर्हीति। यदि त्वां भजति पुरुषस्तर्हि ते त्वत्त एव सर्वं मनीषितमर्थं विन्देतेति ॥४४॥

**वीर०** ननु प्राणादीनामुद्दीपयिता ईश्वरः नाह मित्यत्र भगवदवतारभूतावेव युवामित्यभिप्रयन् अवतार प्रयोजनमाह -

---

1 A.B.G.J 'त्त्विदमा', H V त्वेदमा, 2 A B G J च्छदि चाऽऽत्म, M Ma 'च्छिदमाऽऽत्म, W 'हितमात्म' 3 M Ma 'समदित्वनभि' W दमत्यमभि', 4-4 H V विन्देत तर्हिन्देसतु, MMa विदेय चेत्तर्हि, 5--5 A B J omit 6 A B J तत्राऽऽह 7 A B J omit मूर्ती, 8 A B J पालनमा', 9 H V 'केनानु', 10 H V. omit तदाप्त्यै, 11 H V च, 5 A B J 'नादि, 12 A B J omit तव 13 A B J तेन, 14 A B J omit एव, 15 A B J omit ऋता, 16 A.B J 'च', 17 A B.J 'हादि, 18 H V प्रतीयते * Viraraghavis commentory records it as तद्वा

मूर्ती इति। हे भगवन्! भगवतः षाड्गुण्यपूर्णस्यैव इमे मूर्ती अवतारौ किमर्थं त्रिलोक्याः क्षेमाय सुखाय तापविरमाय ज्ञानोपदेशेन आध्यात्मिकादि तापविघाताय, मृत्युजित्यै मृत्युजयाय, मोक्षायेति यावत्। अत्र दृष्टान्तान्तरालाभात् तदवतारा नेव दृष्टान्तयति नाना बिभर्षि इति। यथा नाना विधा अन्यतनूः रामकृष्णादितनू इदं जगदवितुं रक्षितुं विभर्षि तद्वत्। न केवलं जगद्रक्षैव त्वद्व्यापारः, किन्तु सृष्टि संहारावपीत्याह, सर्वं इदं जगत्सृष्ट्वा पुनर्ग्रससि। ननु किं तवैकस्यैव स्रष्टृत्वं, पुन रतृत्वं च दृष्टम्। इत्यतो दृष्टान्तमाह - इवोर्णनाभिरिति, ऊर्णनाभिरिवेत्यर्थः ॥४१॥

यतः सर्वजगत्कारणभूतःअत स्त्वामेव **कारणं तु ध्येयः** (अथ.शिखा उ. 2.17) इत्यादिवेदार्थतात्पर्यज्ञा ध्यायन्तीत्याह - **तस्येति**। तस्य सृष्टिसंहारकर्तुरवितुः स्वाऽवतारै रक्षितुः चराचराणामन्तः प्रविश्य धारणेन नियन्तुश्च तव यत्पादमूलं तद्वै भजामीति उपरिष्टात् सम्बन्धः। कथम्भूतम्? यस्माद्यदुपासनादित्यर्थः। न कर्मगुणकालरजः स्पृशन्ति कर्मगुणकालानां रजो मलं यदुपासकान् न स्पृशन्ति[1] 'रुज'[2] इति पाठे तदा कर्मादयो यदुपासकं न स्पृशन्ति। यदुपासका कर्मादीन् न स्पृशन्तीति वा। तत्र कर्म पुण्यपापात्मकं तस्य[3] कर्मणो रजः रजोवत् ज्ञानावारकत्वात् सुखदुःखे गुण रजश्शब्देन रज आदि गुणकार्यं कामक्रोधादिकं [4]विवक्षितम्[4]। कालशब्देन तत्प्रयुक्तशीतातपवर्षादयो विवक्षिताः। रुज इति पाठे रुजो रोगाः। किञ्च वेदहृदयाः वेदा हृदये येषान्ते, वेदतात्पर्यविदो मुनय इत्यर्थः। यजन्ति[5] आराधयन्ति च। किमर्थम्? तदाप्त्यै तत्पादमूलप्राप्त्यै ॥४२॥

किं तदाप्त्या? इत्यतः तस्या एव निरतिशयपुरुषार्थरूपतामाह - **नाऽन्यमिति**। 'अभिय' इति छेदः। हे अपवर्ग - मूर्ते! निरतिशय पुरुषार्थरूप! हे ईश परितो न भीर्भयं यस्मात्त्वदङ्घ्र्युपनयात् त्वदङ्घ्रिप्राप्ते रन्यं क्षेमं श्रेयो न विद्मः। भिय इति छेदः, परितोभिय इति समस्तं पदं जनस्य विशेषणम्। ननु चतुर्मुखलोकप्राप्तिरपि क्षेम एवेत्यत आह - आब्रह्मेति। अलं नितरां कालस्य कालरूपस्य ते त्वत्तः बिभेति। कुतः? यतस्सोऽपि द्विपरार्धधिष्ण्यः द्विपरार्धकालावस्थायिलोकः, अतो बिभेतीति सम्बन्धः। यतो ब्रह्मण एव भयं, किमुत तत्कृतानां तत्सृष्टानां भौतिकानां भूतपरिणामात्मकदेहभाजाम् ॥४३॥

यतस्त्वदङ्घ्र्युपनय एव क्षेमः। ततस्तव पादमूलमेव तत्प्राप्तये भजामीत्याह - **तद्वा** इति। ऋतधियः सत्यसङ्कल्पस्य परमात्मनो गुरोश्च परस्य सर्वस्मात्परस्य च तवाऽत्महितं तदेतत्पादमूलं भजामि। ऋतधिय इत्यनेन "तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" (भ.गी.12-7) इत्युक्तविधसत्यसङ्कल्पत्वं विवक्षितम्। आत्मगुरोरित्यनेन अन्तः प्रविश्य नियमनेन साधुकर्मकारयितृत्वं, ज्ञानोपदेशेन उपकर्तृत्वञ्च प्राप्यत्वोपयुक्तम्। तथोक्तम् - "हित्वैतदात्महितमात्मगुरोः परस्य देहाद्यपार्थ मसदत्यमभिज्ञमात्रम्"[6] इति पाठे अत्यमत्यन्तम् असद्दृष्टमपार्थं निष्फलञ्च देहादि हित्वा अपास्य आत्महितं पादमूलं भजामीति

1 W adds कश्चित्, 2 W पाठान्तरम् 3 A B तथा 4-4 W omits कर्मण, 5 W omit 6 A B omits किमर्थम्?

सम्बन्धः। हित्वेदमात्मच्छदिमात्मगुरोः इति पाठेतु आत्मच्छदिमात्मज्ञानावरकं देहादि [1]हित्वा भजामीत्यर्थः। 'देहापार्थ प्रसदित्यनभिज्ञमात्रम्' इति च क्वचित्पाठः। तथा अपार्थमसदिनिच भवत्यभिज्ञामात्रम्। यस्मात्तद्देहादि हित्वेत्यर्थः। ज्ञान शब्दस्य आर्षो ह्रस्वः। यद्येवं ते त्वां, यो भजेदिति शेषः। तर्हि स एव सर्वं मनीषितार्थ मभिमतं सर्वं पुरुषार्थं विन्देत लभेत। आद्यपाठेतु यस्येति शेषः। यस्य ते अभिज्ञामात्रं त्वत्पादमूलविषयक ज्ञानमात्रमस्ति तर्हि स एव सर्वमनीषितार्थं विन्देत । विन्दन्ति ते सर्वमनीषितार्थम् इति च पाठो दृश्यते। तदा अभिज्ञमात्रमित्यस्य येषामित्यादिः ते विन्दन्ति लभन्त इति सम्बन्धः ॥४४॥

विज० भावबद्धत्वं दर्शयति - **मूर्ती** इति। हे भगवन्! भक्तवत्सलस्य भगवत इमे मूर्ती नरनारायणासंज्ञे त्रिलोक्याः क्षेमाय रक्षायै, शत्रुकृतसन्तापनाशाय, मृत्युजित्यै संसाराख्य शत्रुजयाय भवतः। किञ्च त्वं नाना अनुपमाऽन्यतनूः नानाविधा अनुपमा असदृशी रन्या अनयो रितरा स्तनू मूर्ति र्बिभर्षि, त्रिलोकीक्षेमादिकार्यायेति शेषः। किञ्च ऊर्णनाभिरिव इदं सर्वं यथापूर्वं सृष्ट्वा पुनर्यथापूर्वं ग्रसास। अनेन मायाविवृतबहुरूपग्रहणं न चित्रं स्यादिति शङ्का परिहृता। सत्यप्रपञ्चस्रष्टुरीश्वरस्य तन्नियमनार्थं तावद्रूपग्रहणोपपत्तेः, "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" (तैति.उ.2.6) इति श्रुतेः। यद्वा। अतनूः अप्राकृतशरीरस्त्वं यथा सर्वमिदं सृष्ट्वा पुन र्ग्रससि तथाऽनुपमानि नानाविधानि शरीराणि बिभर्षि ग्रससि अन्तर्गतानि करोषि त्रिलोकीक्षेमोदये भरणं क्षेमाद्यनन्तरमेकीकरणमिति विशेषः। भगवत इमे मूर्ती च तथेति ॥४१॥

एत मर्थं प्रमाणयति - **तस्येति**। यत्स्थं यस्मिन् पादमूले स्थितं पुरुषं कर्म गुणकालरजः दुष्कर्मगुणाः सत्त्वादयः कालो जन्मादिहेतुः रजः आर्तवम् शुक्रशोणिताख्यम् एकवद्भावविवक्षया एकवचनम्, न स्पृशन्ति नोत्तपन्ति, न दुःख मापादयन्ति। वेदस्य हृदयं येषान्ते वेदहृदयाः वेदतात्पर्यज्ञा मुनयो ब्रह्मादयः स्थिरचरेशितुरवितुः पालकस्य तव अङ्घ्रिमूलं स्तुवन्ति। "पादोऽस्य विश्वा भूतानि त्रिपादस्याऽमृतं दिवि" (पु.सू.2) इति नितरां नमन्ति 'नमो विष्णवे महते करोमि' (सह.वै.3.16) इति यजन्ति 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्' (मना.उ.13-187) इति ध्यायन्ति। आत्मानमेव लोकमुपास्ते इति यद्यस्मात् तस्मात्त्वदङ्घ्रिसेवायां तदेव मानं वा इत्यर्थः। तस्य यदङ्घ्रिमूलं यत्स्थं कर्मादयो - न स्पृशन्ति तत्तव पादमूलं भजामीत्येकवाक्यं वा ॥४२॥

किमर्थमेतदेव स्तुवन्ति, निर्दुःखसुखावाप्तये अन्यत्किं न स्यात् इति तत्राऽह - **नेति**। ईश। अपवर्गमूर्ते! पुरुषार्थस्वरूप! यस्त्वं परितोऽभयः सर्वस्मादभयः जनस्य तवाङ्घ्र्युपनयात् अङ्घ्रिशरणप्राप्तेरन्यत् क्षेमं न विद्मः। परितो भिय इति वा पाठः,

---

1 W व

जनस्येति विशेषणम्। सर्वस्माद्भीर्भयं यस्य स तथा तस्य। ननु त्वदन्यः क्षेमकर्ता ब्रह्माऽस्ति "प्रजापते न त्वदेतान्यन्यः" (मना.उ.13.16) इति श्रुतेः। अत्राह ब्रह्मेति। यतः परितो भयः अतो द्विपरार्धसम्बन्धि धिष्ण्यं यस्य सः तथा। स ब्रह्मा कालस्य ते तव सकाशाद्बिभेति "यन्मां निशाम्य सदनादुरुकम्पमानम्" "यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः" (तैत्रि. ३.1.2.13) इति श्रुतेः। भूतग्रामस्य विचित्रादृष्टत्वात्कस्यचिन्निर्भयत्वोपपत्तेः ब्रह्मणस्तु लोकविडम्बनत्वेन तथा भावः किं न स्यात् इति मन्दाशङ्कां कैमुत्यन्यायेन परिहरति किमुतेति। अत इत्युत्तरत्रापि सम्बध्यते। ब्रह्माऽप्यलं बिभेति यतोऽतः तत्कृतभौतिकानां तेन ब्रह्मणा कृतानि भौतिकानि शरीराणि येषां ते तथा तेषां प्राणिनां भयमस्तीति किमुतेत्यन्वयः ॥४३॥

सेवायामित्थम्भावमाह - तद्वै इति। ऋतधियः एक प्रकार बुद्धेर्निश्चलबुद्धेरित्यर्थः। आत्मगुरोः जीवगुरोः परस्य परमात्मन स्तव पादमूल मेतद्देहाद्यभिमानं हित्वा यदि भजामि तर्हि ते तव प्रसादात्सर्वं मनीषितार्थं विन्देय इत्यन्वयः। कीदृशम्? आत्मच्छिदम् आत्मनाशहेतुम् अत एवाऽपार्थं पुरुषार्थलक्षणप्रयोजनशून्यम्, असदभद्रम्, अनभिज्ञमात्रं केवलाज्ञाननिर्मितं केवलाविद्वत्कृतं वा। अनेन देहेऽहम्भावो मुक्तिहेतुरिति कथितं भवति ॥४४॥

सत्त्वं रजस्तम इतीश तवात्म[1]बन्धो माया[2]कृताः स्थितिलयो[3]द्भवहेतवोऽस्य ।
लीला धृता यदपि सत्त्व[4]मयी प्रंशान्त्यै नान्येनृणां व्यसनमोहभियश्च या[5]भ्याम् ॥४५॥

तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं [6]स्वदयितां कुशला भजन्ति ।
यत्सात्वताः पुरुषरूपमुशन्ति सत्त्वं लोको यतोऽभय मुतात्मसुखं न चाऽन्यत् ॥४६॥

तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदेवतायै ।
नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥४७॥

यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः सन्तं [8]स्वकेष्वसुषु हृद्यपि दृक्पथेषु ।
[9]त्वन्माययाऽऽवृतमतिः स उ [10]एव साक्षा दा'द्य स्तवाखिलगुरो [11]रुपसाद्य' वेदम् ॥४८॥

यद्दर्शनं निगम आत्मरहःप्र[12]काशं मुह्यन्ति यत्र कवयोऽजपरा यतन्तः ।
तं सर्ववादविषयप्रतिरूपशीलं [13]वन्दे [14]महापुरुषमात्मनिगूढबोधम् ॥४९॥

---

1 HV बन्धो । 2 ABGJMMa 'मया 3 ABGJMMa 'दय 4 MMa 'मय 5 W ताभ्याम् 6 HV च द' 7 W लोकाय' 8 ABGJMMa स्वके' 9 ABGHJV तन्मा' 10 HV वेद 11 MMa 'पद्य' 12 W काशो 13 MMa वन्दामहे 14 W आ'

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे अष्टमोऽध्यायः ॥८॥

**श्रीध०** ननु ब्रह्मरुद्रावपि ममैव मूर्ती, अतो मामेव किमित्यत्यन्तमाद्रियसे तत्राह - **सत्त्व** मिति। यदपि यद्यपि तवैव माया कृता एता लीला स्त्वयैव धृताः तथाऽपि या सत्त्वमयी सैव प्रशान्त्यै मोक्षाय, न केवलमस्य[1] प्रशान्त्यभावमात्रमन्यभजने, किन्तु अनिष्टं[2] किञ्चित्[2] अन्यथात्वे भवेदित्याह - व्यसनेति ॥४५॥

तदेव सदाचारेण द्रढयति - **तस्मा दिति**। हे भगवन् तव शुक्लां तनुं श्रीनारायणाख्याम्। अथ तावकानाञ्च शुक्लां तनुं नराख्याम्। यत् यस्मात् सात्त्वता[3] सत्त्वमेव पुरुषस्याधीश्वरस्य रूपमुशन्ति मन्यन्ते। न त्वन्यत् रजस्तमश्चेति। अत्र हेतुः यतः सत्त्वात् लोको वैकुण्ठाख्यः लोकत्वे सत्यपि अभयश्च, भोगे सत्यपि आत्मसुखश्च ॥४६॥

अतस्तं प्रणमति - **तस्मै नम** इति। हंसाय शुद्धाय संयतगिरे[4] नियतवाचे। अथ च निगमेश्वराय वेदमार्गप्रवर्तकाय ॥४७॥

वेदार्थसम्प्रदायप्रवर्तने हेतुत्वं वदन् स्तौति - **यमिति**। वितथाक्षपथैः[5] कपटेन्द्रियमार्गैः[5] भ्रमद्धीः विक्षिप्तबुद्धिः **प्रमान्** स्वेन्द्रियादिषु नियन्तृत्वेन सन्तमपि यं त्वां न वेद। दृक्पथेषु विषयेषु बुद्धिविक्षेपे हेतुः। तन्मायया तस्य तवैव मायया आवृता आत्मनिष्ठा मतिर्यस्य, स उ सोऽपि आद्य एव पूर्वं[6] मविद्वानेव अखिलगुरोस्तव त्वत्प्रवर्तितं वेदमुपसाद्य प्राप्य तं त्वां साक्षाद्वेद ॥४८॥

वेदेनैव त्वज्ज्ञानमिति उपपादयन्प्रणमति - **यदिति**। यस्य तव दर्शनं निगमे भवति। कथम्भूतम्? आत्मनस्तव रहो[7] रहस्यं तस्य[8] प्रकाशकम्[9]। अन्यथा दुर्ज्ञेयतामाह। अजपरा ब्रह्ममुख्याः कवयोऽपि सांख्ययोगादिभिर्यतमाना यत्र त्वयि स्वयं[10] मुह्यन्ति। कुत इत्यत आह सर्वेषां सांख्यादि[11]वादानां[11] ये विषया भेदादयः तेषां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम्। कुतः आत्मना देहादिसङ्घातेन निगूढो बोधो यस्य तम्। एवम्भूतं महापुरुषं त्वां वन्दे इति ॥४९॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां अष्टमोऽध्यायः ॥८॥

---

1 HV omit अस्य, 2--2 ABJ omit 3 ABJ स्वेश॰, 4 HV ॰यमित, 5--5 HV omit, 6 HV मज्ञातैव, 7 HV रहः प्रका॰, 8 HV add सत्त्वप्रकाशकम्, 9 HV अस्य, 10 ABJ omit स्वयं, 11--11 ABJ ॰वादिनां ये वादास्तेषां विषया

**वीर०** ननु ब्रह्मरुद्रावपि ममैव मूर्ती। अतस्तौ हित्वा मामेव किमिति भजसे इत्यत आह - **सत्त्व मिति**। हे ईश! हे आत्म बन्धो! जीवसखे [1]यदपि यद्यपि अस्य जगतः स्थितिलयोदयहेतवः तव विद्यः। रुद्रब्रह्मतनव इति विशेष्यमध्याहर्तव्यम्। शुक्लां तनुमित्यग्रे दर्शनात् ताश्च सत्त्वं रजस्तम इति। या तव माया तथैव कृताः, लीलाधृताः लीलयैव धृताः। लीलापदेन विष्ण्वाद्याख्य तनुसम्बन्धस्य कर्ममूलत्वव्यावृत्तिः तथापि तत्र सत्त्वमयी या तनुः सैव नृणामुपास्यमाना शान्त्यै मोक्षोपयुक्त शान्तये भवति नान्ये अन्ये ब्रह्मरुद्राख्ये तन्वौ न प्रशान्त्यै भवतः, प्रत्युत ताभ्याम् उपास्यामानाभ्यां व्यसनमोहभियो भवेयुः। व्यसनं दुःखं, भी र्भयम्। यद्यप्यत्र स्थितिहेतुभूताया विष्ण्वाख्यतनोरपि मायाकृतत्वोक्त्या अप्राकृतसत्त्वगुणपरिणामरूपत्व मवगम्यते। तच्च "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इति श्रीभगवद्विग्रहे प्रतिषिद्धं, तथाप्यत्र सत्त्वमिति या माया रजस्तमश्चेति च या माया ताभ्यां मायाभ्यां कृता इति योज्यम्। तत्र तत्त्वशब्देन स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणमित्युक्तम्। शुद्धसत्त्वमयं त्रिगुणात्मकप्रकृतिद्रव्यविलक्षणं विवक्षितम्। इत्थं योजनार्थ मेव सत्त्वं रज स्तम इति व्यस्तनिर्देशः कृतः। प्रबन्धोपक्रमेऽपि "सत्त्वं रज स्तम इति" (भगी. 14.5) "प्रकृते र्गुणास्तैर्युक्तः परः पुरुष एक इहाऽस्य धत्ते (भाग.1.2.23) इत्यत्रायमेवार्थः। रजस्तमश्शब्दाभ्यां सत्त्वमिश्रौ तौ विवक्षितौ ॥४५॥

यतस्सत्त्वमय्येव प्रशान्त्यै नत्वन्ये। [2]तस्मात् निपुणबुद्धयस्तामेव उपासते - **तस्मादिति**। अथ, ननु हे भगवन्! तावकानां त्वद्भक्तानां स्वदयितां स्वस्य तव च दयितां शुक्लां शुद्धसत्त्वमयीं तनुं कुशला भजन्ति। [3]काऽसौ शुक्ला तव तनुरित्याह।[3] यत्सात्त्वताः पुरुषरूपमुशन्ति सत्त्वं लोका इति सात्वताः पञ्चरात्रसिद्धान्ततत्त्वाभिज्ञालोका जना नरनारायणाख्यं यत्पुरुषरूपं पुरुषाकृत्याऽवस्थितं रूपं पुरुषस्य तव रूपं वा सत्त्वं विशुद्धं सत्त्वमुशन्ति, उपास्यत्वेनेच्छन्ति [4]सैव शुक्ला तनु[4]रित्य तद्विशिनष्टि-यतः पुरुषरूपात् सत्त्वादुपास्यमानादभयं संसृतिभयाभावः उतापि चात्मसुखं आत्मानुभवसुखं न चान्यदन्यद्भय मिश्रसुखं नास्ति ॥४६॥

[5]इत्थमनन्तकल्याणगुणगणं त्वां स्तोतुमहं न शक्नोमीत्यभिप्रेत्य उपस्थितै र्गुणै र्विशिषन् प्रणमति - **तस्मा** इति। पुरुषाय पुरु[6]षिणोसि[7] ददासीति तथा। चतुर्विधपुरुषार्थप्रदायेत्यर्थः। भूम्ने सर्वान्तरात्मत्वेन भूमगुणविशिष्टाय, अत एव विश्व विश्वरूपेणावस्थिताय, अत एव विश्वगुरवे विश्वस्य हितकराय, आत्मनः शरीरहिताचरणशीलत्वादिति भावः। परदेवतायै इत्यनेन ततोऽधिक देवतान्तरव्यावृत्तिः, नारायणायेत्यनेन प्राप्यत्वं [8]प्रापकत्वञ्च विवक्षितम्। ऋषय इत्यनेन सर्वज्ञत्वं नारायणा

1 W omits एव 2 W अत 3-3 W omits 4-4 W omits 5 AB omis त्वा 6 W र्ति 7 W र्ति 8 A omits प्रापकत्व

**सममिव्याहृतनरोत्तमशब्देन** शिष्याचार्यरूपेण अखिलाध्यात्मविद्या **प्रवर्त्तकवरवर्तनद्वारा** जगदुज्जीवयितृत्वं **विवक्षितम्।**[1] **हंसायेत्यनेन आश्रित दोषनिराकर्तृत्वं**, **संयतगिर** इत्यनेन "सर्वं मिद मभ्यात्तोऽवाक्यनादरः (छान्दो.3.3.14.2,3) **इत्यत्रैव परिपूर्णता प्रयुक्तमजल्पाकत्वं** निगमेश्वरायेत्यनेन वेदाचार्यत्वञ्च[2] विवक्षितमिति[2] ॥४७॥

ननु त्वमिव मामित्थम्भूतं सर्वेऽपि किं न विदन्ति अत आह - **यं वा** इति। त्वन्माययाऽऽवृतामतिर्यस्य, **अत एव वितथे निरर्थके रसपथैरिन्द्रियमार्गैर्भ्रमन्ती** धीर्यस्य स , देहात्मभिमानिनी धीर्यस्येत्यर्थः। **भ्रमद्भिरिति** पाठे **विषयप्रावण्येन चलद्भि र्वितथाक्षपथैः**। यं त्वां न वेद, कथम्भूत मपि, [3]स्वकेषु स्वेन्द्रियादिषु[3] स्वकेष्वसुषु प्राणेषु हृदि हृदये दृक्पथेषु विषयेषु नियन्तृतया सन्तमपि। तर्हि न कोऽपि वेदेत्यत्राह - य - स्त्वाखिलगुरो गद्यः प्रथमं त्वत्प्रवर्तितो यः तं वेद मुपसाद्य, स्थित इति शेषः। स उ स एव सद्यैव त्वां साक्षा द्वेदवेदान्तविहितोपासनाविशुद्धमनसा वेदेत्यर्थः ॥४८॥

वेदेनैव ज्ञानमित्युपपादयन् प्रणमति - **यदिति**। यस्य दर्शनोपायभूतो निगमो वेद आत्मरहस्यप्रकाशकः। अन्यथा दुर्ज्ञेयतामाह - **अनपरा** इति। अजो ब्रह्मा पर उत्कृष्टः प्रधानो येषां ते ब्रह्ममुख्याः[4] कवयो यतन्तः सांख्ययोगादिभिर्यतमाना अपि। यद्वा। हिरण्यगर्भकपिलादय योगसांख्यादितन्त्रप्रणयनेन त्वत्स्वरूपविमर्शनाय यतमाना अपि यत्र त्वयि विषयभूते मुह्यन्ति, त मित्थम्भूतं सर्ववादविषयप्रतिरूपशीलं सर्वेषां वादा योगसांख्यादिवादाः प्रकृत्युपादानत्वलपुरुषनिमित्तत्वादिवादाः तेषां प्रतिक्षेपकं रूपं स्वरूपं शीलं स्वभावः सार्वज्ञ्य सर्वशक्तित्वादि प्रकृतिपुरुषादिष्वसम्भावितो। यस्य तम् आत्मनि स्वस्मिन् गूढ स्तैरविज्ञातः बोधः अपरिच्छेद्यज्ञान वैभवो यस्य तं महापुरुषं वन्दे ॥४९॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां
व्याख्यायां अष्टमोऽध्यायः ॥ ८ ॥

**विज०** देहाहम्भावस्य निमित्ते रजस्तमसी तदभावस्य सत्त्वं त्वन्नियतमिति भावेनाऽह - **सत्त्व** मिति। हे ईश! आत्मबन्धो सत्त्वं रजस्तम इति गुणास्त्वया लीलाधृताः जगन्निर्माण क्रीडायै धृता अङ्गीकृताः। ननु जीववदनिष्टं किं कर्तुं शक्ताः, येन धार्याः स्युरिति तत्राऽह - स्थितीति। अस्य जगतः स्थित्यादिहेतवः किमात्मका इति तत्राऽह मायामया इति। इच्छात्मकाः यदपि यद्यपि तथाऽपि सत्त्वमयः सात्त्विकः प्रशान्त्यै मुक्तये भवति, अन्ये राजसतामसाः प्रशान्त्यै न स्युः, किन्तु देहाहम्भावेन संसाराय स्युरित्यर्थः। यद्वा, सत्त्वादन्ये रजस्तमसी शान्त्यै न स्यातां, पुनः कस्मै भवत इति तत्राह नृणामिति। याभ्यां रजस्तमोभ्यां नृणां

1 W omits विवक्षितम् . 2--2 W omits. 3--3 W omits. 4 W मुख्या

व्यसनादयःस्युः। च एवार्थे। त्रिविधानां नृणां मध्ये सत्त्वमय एव इति वा ॥४५॥

उपसंहरन्नेव सत्त्वं स्तौति - **तस्मादिति**। यस्मात्सत्त्वमेव निःश्रेयसहेतुस्तस्मादिह कुशलाः। भगवन् अथ कल्याणानां तावकानां उपासायोग्यां स्वतो दयितां शुक्लां तव तनुं भजन्ति। तावकानामिति किं विशिष्योच्यत इति तत्राह - यत्सात्त्वता इति। सात्त्वताः साधुगुणयुक्ताः पुरुषाः सत्त्वं सत्त्वगुणप्रवर्तकं पुरुष इति रूपं शब्दो यस्य तत्तथा पुरुषशब्दवाच्यमित्यर्थः। उशन्ति कामयन्त इति यद्यस्मात्तस्मात् विशेषवचनम्। यतः पुरुषरूपात् लोकोऽभयं विन्दति आत्मसुखम् उतापि लभते, तस्मादन्य दभयादिदं न। यद्वा, यतः सत्वाल्लोको रक्षितो भवति अभय मुताऽत्मसुखमाप्नोति अन्यद्रजस्तम इति यद्द्वयं स्वरूपसुखादिहेतुर्न भवति ॥४६॥

निरन्तरध्यानासमर्थस्य उपास्तिप्रकार माह - **तस्मा** इति। विश्वाय विश्वनाम्ने। अस्य सर्वनामसंज्ञा नास्ति, अर्थान्तरत्वात्, तत्प्रेक्षणशीलत्वेन संयतगिरे मितभाषणाय ॥४७॥

भवत्साक्षात्कारो भवत्प्रसादायत्तो न स्वप्रयत्नसाध्यः इत्याह - **यमिति**। हे वितत यः पुरुषोऽक्षपथैः शब्दादिभिः भ्रमद्धीर्यं त्वां न वेद। कीदृशम्? स्वखेषु स्वेन्द्रियेषु असुषु प्राणेषु हृद्यपि दृक्पथेषु दृग्विषयेषु वसन्तं निर्दोषत्वेन वर्तमानं, ज्ञापकाभावान्न जानन्तीति नेत्याह - तवेति। अखिलगुरो स्तवेदं ज्ञापकप्रमाणं उपपद्याऽपि सः साक्षादद्यः अदनयोग्यः विषय भोगशीलः तस्य तव मायया बन्धकशक्तया आवृतमतिः आच्छादितज्ञानः तस्मा स्त्वत्प्रसादेन त्वज्ज्ञानं सुलभमित्यर्थः ॥४८॥

त्वज्ज्ञानस्य किं माहात्म्यं येन त्वदनुग्रहेण सर्वथाऽऽपाद्यं स्यादिति तत्राह - **यद्दर्शन** मिति। यस्य तव दर्शनं ज्ञाननिगमे तत्त्वनिर्णायके वेदे प्रतिपादितम्।आत्मरहः प्रकाशो यस्मात्तत्तथा तत्, अजपराः विष्णुपरायणा यतन्तः कृतोपास्तिप्रयत्नाः कवयो यत्र परमात्मरहस्ये मुह्यन्ति इदमित्थमिति ज्ञातुं उपदेष्टुञ्च न श  ान्ति तं भगवन्तं वन्दामह इत्यन्वयः। सर्ववादानां सर्वसिद्धान्तानां विषयाणां प्रतिपाद्यानां अर्थानां प्रतिरूपशीलं विरुद्धस्वभावं तदुक्तान्यथास्थितस्वभावमित्यर्थः। आत्मनि जीवविषये गूढबोधं जीवेनाऽज्ञातस्वरूपमित्यर्थः। आत्मना स्वेनेति ॥४९॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां

द्वादशस्कन्धे अष्टमोऽध्यायः ॥८॥

**(श्रीविजयध्वजतीर्थरीत्या अष्टमोऽध्यायः न समाप्तः)**

# नवमोऽध्यायः

## सूत उवाच

संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता ।
नारायणो नरसखः प्रीत[1] आह भृगूद्वह[2]! ॥१॥

श्रीभगवानुवाच

भो भो ब्रह्मर्षिवर्यो[3]ऽसि सिद्ध[4] आत्मसमाधिना ।
मयि भक्त्याऽनपायिन्या तपःस्वाध्यायसंयमैः ॥२॥

वयं ते परितुष्टाः स्म[5] त्वद्बृहद्व्रत[6]चर्यया ।
वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥३॥

ऋषि[7] रुवाच

जितं ते देवदेवेश प्रपन्नार्तिहराऽच्युत ।
वरेणैतावताऽलं नो[8] यद्भवान् समदृश्यत ॥४॥

[9]वाञ्छन्त्यजाद्यो[9] यस्य श्रीमत्पादाब्जदर्शनम् ।
मनसा योगपक्केन[10] स भवान् मेऽक्षि[11]गोचरः ॥५॥

अथाऽप्यम्बुजपत्राक्ष पुण्यश्लोकशिखामणे ।
[12]द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम् ॥६॥

सूत उवाच

[13]इतीडितोऽर्चितः काममृषिणा भगवान्मुने ।
तथेति स स्मयन्[14] प्रागात् बदर्याश्रममीश्वरः ॥७॥

[15]तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः ।
वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥८॥

ध्यायन् सर्वत्र च हरिं भावद्रव्यैरपूजयत् ।
क्वचित्पूजां विसस्मार भक्ति[16]प्रसरसम्प्लुतः ॥९॥

---

1 HV °तः प्राह, 2 ABGJMMa °गृहहम्, 3 ABGJ वर्योऽसि . HV °वर्य त्वं, 4 W °द्धवात्म, 5 ABGHJMMaV स्म 6 HV °द्बृहद्व्रत, 7 HV मार्कण्डेय, 8 W मे 9--9 ABGJ गृहीत्वाजादयो, 10 W युक्तेन, 11 ABGJMMa °Sक्षि, 12 MMa द्रक्ष्ये, 13 MMa इत्थमितो, 14 W सस्मयं; 15 MMa °च, 16 ABGJ प्रेम°,

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

नवमे भगवन्मायादिदृक्षोर्दर्शने[1] मुहुः। मायाशिशो र्लयाब्धौ च मुनेर्निर्वेशनिर्गमैः ॥

भगवतः परितोषपूर्वकं तदपेक्षितवरदानं कथयितुमाह **संस्तुतः** इत्यादिना ॥१॥

**भो भो इति**। आत्मसमाधिना चित्तैकाग्र्येण ॥२॥

**वयमिति**। वयं ते परितुष्टाः स्म इति बहुवचनं सर्वदेवाभिप्रायेण। वरदेशादित्येकवचनं द्वयो रैक्याभिप्रायेण। प्रतीच्छ गृहाण ॥३॥

**जितमिति**। वरेण छन्दयता त्वया जित मुत्कर्षो दर्शितः मम तु वराकाङ्क्षा नाऽस्तीत्याह - वरेणेति ॥४॥

**वाञ्छन्तीति**। यस्य तव श्रीमत्पादाब्जदर्शनं[2] अजादयो[3] ब्रह्मादयो[4] वाञ्छन्ति। स भवान् मेऽक्षिगोचरो[5] जातोऽस्ति। किमतः परं वरेणेत्यर्थः ॥५॥

**अथेति**। द्रक्ष्ये द्रष्टुमिच्छामि लोकपालैर्ब्रह्मादिभिः सहितोऽयं लोको जनो सद्भिदां सति वस्तुनि[6] भिदां भेदम् वेदेति ॥६॥

**इतीति**। तथेति द्रक्ष्यसीति। स ईश्वरः स्मयन्[8] स्मयमान[9] सस्मयमिति प्रागात्। पाठान्तरे क्रियाविशेषणम् ॥७॥

**तमिति**। तमेवाऽर्थं मायादर्शनरूपम्। अग्न्यादि[10] अष्टमूर्तिषु ॥८॥

**ध्यायन्निति**। भावद्रव्यै र्मनोमयै र्द्रव्यैः। क्वचित्कदाचित्[11] भक्तिप्रसरसम्प्लुतः[12] भक्त्युद्रेकव्याप्तः[12] ॥९॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इत्थं संस्तुतस्तदभिमतं प्रायच्छदित्याह - **संस्तुत** इत्यादिना। हे भृगूद्वह![13] द्वितीयान्तपाठे भृगूद्वहं मार्कण्डेय मित्याह[13]॥१॥

उक्तिमेवाऽऽह - **भो भो इति** द्वाभ्याम्। आत्मसमाधिना चित्तैकाग्र्येण अनपायिन्या अविच्छिन्नया मयि भक्त्या च तप आदिभिश्च सिद्धो ब्रह्मर्षिश्रेष्ठश्चाऽसि ॥२॥

तव बृहद्व्रतचर्यया नैष्ठिकाकामधर्मचर्यया वयं परितुष्टाः स्म। वय मिति बहुवचनं सर्व देवाभिप्रायकम्। वरदाना मीशान्मत्तः वरं प्रतीच्छ वृणीहि। ते तुभ्यं भद्रं शुभमस्तु ॥३॥

---

1 J.H.V न, 2 A.B J add मनसाऽपि गृहीत्वा प्राप्य कृतार्थाः 3 A B J omits ब्रह्मादयो 4 B J भवन्ति 5 A B J ऽक्ष 6 A B J omit भिदां। 7 A B J omit वेदेति। 8 A B J omit स्मयमान, 9 A B J omit सस्मयमिति 10 A B J omit अष्ट 11 ABJ प्रम 12- -12 ABJ प्रेमोद्रेक प्राप्त, 13- -3 W. omits

**इत्थं वराय प्रचोदितः प्राह - जितं ते इति।** त्रिभिः[1]। देवदेवो ब्रह्मा तस्यापीश! प्रपन्नाना मार्तिं क्लेशं हरतीति तथाभूत! अश्रिताम्न च्यावयतीति तथा नोऽस्मभ्यं भवान् सम्यगदृश्यतेति यदेतावतैव वरेणाऽलम् ॥४॥

तत्र हेतुतया तद्दर्शनस्य दुर्लभतामाह - **वाञ्छान्तीति।** अजादयो ब्रह्मादयः योगयुक्तेन[2] योगविशुद्धेन मनसा यस्य श्रीमत्पादाब्जदर्शनं केवलं वाञ्छन्ति, न तु पश्यन्ति। स भवान् ममाऽक्षिगोचरोऽसि ॥५॥

**अथापीति।** यद्यपि त्वद्दर्शनमेव वरस्तथाऽपि तव मायां आश्चर्यशक्तिं द्रक्ष्ये द्रष्टुमिच्छामि इत्यर्थः। तां विशिनष्टि यया मायया लोकपालैर्ब्रह्मादिभिः सहितो लोको जनः सद्भिदां सच्छब्दवाच्ये त्वयि भिदां भेदं देवतिर्यङ्मनुष्यस्थावरभेदं वेद। यया कृतां भिदां वेद तां मायामित्यर्थः ॥६॥

**इतीति।** ईडित उक्तोऽर्चितश्च भगवान्, हे मुने! स्मयो मन्दहासः, तेन सहितं यथा तथा, तथेति द्रक्ष्यसीत्यनुगृह्य बदर्याऽऽश्रमं प्रति प्रागात् ॥७॥

**तमेवेति।** तमेवाऽर्थं मायादर्शनरूपमर्थं चिन्तयन् कदा द्रक्ष्यामीति चिन्तयन्नित्यर्थः। अग्न्यादिषु अष्टसु, तत्राऽऽत्मा हृदयम् ॥८॥

सर्वत्र गोविप्रादिषु हरिं ध्यायन् भावद्रव्यै र्मनोमयैर्द्रव्यैः अपूजयत्, मानसोपचारैः अपूजयदित्यर्थः। **क्वचिदिति।** भक्ति प्रसरेण प्रीत्यात्मकभक्तिपरीवाहेण सम्प्लुतः व्याप्तः तां पूजामपि विस्मृतवान् ॥९॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

संस्तुत इति ॥१॥

आत्मनो हरेः समाधिनोपासनाजन्यज्ञानेन सिद्धः कृतकृत्यः ॥२॥

प्रतीच्छ स्वीकुरु ॥३॥

भवन्माहात्म्यप्रकटनं वरं वरयिष्यन्नपि भगवद्दर्शनादितरो वरोऽनभीष्टो मुमुक्षोरिति हृदि कृत्वा प्रतिवक्ति - जितमिति ॥४॥

यदाकाङ्क्षापूरकं प्राय स्तदेव साध्य मस्य, तदभावात्पथि तृणमिवेदमपि वन्ध्यमिति तत्राऽऽह - वाञ्छन्तीति। भक्ति योगपक्वेन भक्त्युपासनाभ्यां परिपाकं प्राप्तेन वाऽक्षिगोचरोऽभूदिति शेषः ॥५॥

---

1 W omits त्रिभिः. 2 A B पक्वेन

ननूक्तं सत्यम्, तथाऽपि भवत्समाधेरेतदेव फलं नाऽन्यदस्तीति भाति किमत्राऽऽह - अथाऽपीति। मायां घटमानघटकशक्तिलक्षणां लोकोपकारक यथार्थज्ञान जनकत्वेनेन्द्रजाललक्षणा नेति भावेनाऽऽह ययेति। सतः परब्रह्मणः सर्वस्मात् भिदां वैलक्षण्यं वेद तादृशीं द्रष्टुमिच्छामि नेन्द्रजाललक्षणामित्यर्थः ॥६॥

सस्मयं सस्मितं तथा द्रक्ष्यसीत्युक्त्वा ॥७॥

आत्मनि स्वस्मिन् ॥८॥

किं बहुना सर्वत्र च व्याप्तं भावद्रव्यैः मनःकल्प्यपुष्पादिद्रव्यैः अहिंसाद्यैरित्यर्थः। क्वचित्कदाचित् विस्मरणे कारणं भक्तिप्रसरसम्प्लुत इति ॥९॥

**तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रा[2]तटे[2] मुनेः।**
**उपासीनस्य सन्ध्यायां ब्रह्मन् वायुरभून्महान् ॥१०॥**

**तं चण्डशब्दं समुदीरयन्तं बलाहका अन्वभवन् करालाः।**
**अक्षस्थविष्ठा मुमुचुस्तटिद्भिः स्वनन्त उच्चैरभिवर्षधाराः ॥११॥**

**ततो[3] व्यदृश्यन्त चतुस्समुद्राः[4] समन्ततः क्ष्मातलमाग्रसन्तः।**
**समीरवेगोर्मिभिरुग्रनक्र[5]भयानकावर्त[6]गभीरघोषाः ॥१२॥**

**श्रीध०** मायादर्शन माह - **तस्येत्यादिना** ॥१०॥

**तमिति**। तं वायुमनु बलाहकाः मेघा अभवन्नाविर्बभूवु। ते च तटिद्भिः[7] विद्युद्भि[8] सहिता उच्चैः स्वनन्तो गर्जन्तः। अक्षो रथाङ्गः, तद्वत्स्थविष्ठा अभितो वर्षधारा मुमुचुः ॥११॥

**तत इति**। चतुर्दिक्षु वर्तमानास्समुद्राः समीरवेगेनोर्मयः तैर्भूतलं उद्ग्रसन्तः[9] उग्रा नक्रा येषु भयानका[10] आवर्ता येषु गभीरो घोषो येषु, ते च ते च ते च ॥१२॥

**वीर०** मायादर्शन मुपवर्णयति - **तस्येत्यादिना** [11]यावदध्यायसमाप्ति[11]। हे भृगुश्रेष्ठ तस्य मुने मार्कण्डेयस्य उपासीनस्य सतः हे ब्रह्मन्! महान्वायुरभूत् ॥१०॥

**तमिति**। तं वायुमनु बलाहका मेघाः कराला भयङ्कराः अभवन्नाविर्बभूवुः। ते च तटिद्भिः[12] सहिता उच्चैर्ध्वनन्तो

1 A.B omit भाति. 2--2 H V "नदीतटे". 3 H V "ऽभ्यदृश्यन्त. 4 H V ०मुद्र. 5 w "नक्रे 6--6 A B G J W महाभयावर्त. 7 A B J तडि. 8 A.B.J omit विद्युद्भिः. 9 A.B J ग्रसन्त. 10 A.B J महाभया. 11--11 W omits 12 A B तडि

गर्जन्तः अक्षः शकटाक्षः तद्वत् स्थविष्ठाः अतिस्थूला अभितो वर्षधारा मुमुचुः ॥११॥

**तत इति**। चतुर्दिक्षु वर्तमानास्समुद्राः परितः क्ष्मातल भूमण्डलम्, उग्रा नक्रा येषु तैः समीरवेगोत्थितै रूर्मिभिर्ग्रसन्तः भयानका आवर्ता येषु, गभीरो घोषो येषु ते च व्यदृश्यन्त ॥१२॥

**विज०** वरदानफलं वक्तु मुपक्रमते - तस्येति। तस्याऽश्रमे महान्वायु रभूत् ॥१०॥

तं वायुमनु अनन्तरं ते बलाहकाः अभि अभितः अक्षस्थविष्ठाः अक्षो रथाङ्गनीपो दण्डः, तद्वत्स्थूलतमा वर्षधारा मुमुचुः तटिद्भिस्सह ॥११॥

समीरवेगेनोन्नतोर्मिभिस्सह उग्रनक्रैर्भयानकस्य भयङ्करस्याऽवर्तस्य गभीरा गम्भीरा घोषा येषां ते तथा ॥१२॥

**अन्तर्बहिश्चाऽद्भिरतिद्युभिः खरै श्शतह्रदाभीरुपतापितं जगत् ।**
**चतुर्विधं वीक्ष्य सहात्मना मुनिर्जलाप्लुतां क्ष्मां विमनाः समत्रसत् ॥१३॥**

**तस्यैव मुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाघूर्णितवार्महार्णवः ।**
**आपूर्यमाणो वरषद्भि रम्बुदै क्ष्मामप्यधाद्द्वीपवर्षाद्रिभिस्समम् ॥१४॥**

**सक्ष्मान्तरिक्षं सदिवं सभागणं त्रैलोक्यमासीत् सह साद्भिराप्लुतम् ।**
**स एक एवोर्वरितो महामुनिर्बभ्राम विक्षिप्तजटो जाडान्धवत् ॥१५॥**

**क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलैरुपद्रुतो वीचिनभस्वता हतः ।**
**तमस्यपारे पतितो भ्रमन् दिशो न वेद खं गां च परिश्रमेषितः ॥१६॥**

**श्रीध० अन्तरिति**। आत्मना सह जरायुजादि चतुर्विधं जगदन्तर्बहिश्च उपतापितं वीक्ष्य क्ष्मां च जलाप्लुतां वीक्ष्य मुनिः समत्रसत् भयं प्राप। केनोपतापितम्? अद्भिः कथम्भूताभिः अतिद्युभिः अतिक्रान्ता द्यौः याभिः खरैश्च सूर्यरश्मिभिः वायुभिर्वेति शेषः। शतह्रदाभिश्च विद्युद्भि। दीर्घत्व मार्षम्। छन्दोनुसारेण ॥१३॥

**तस्येति**। प्रभञ्जनेनाऽऽघूर्णितं प्रकम्पितं वाः उदकं यस्मिन् सः, अप्यधात् छादयामास। समं सह ॥१४॥

**सक्ष्मेति**। सहसा सक्ष्मान्तरिक्षं भूम्यन्तरिक्षस्थप्राणिसहितम्। सदिवं स्वर्गस्थदेवसहितम्। भागाणा ज्योतिर्गणास्तैः सहितम्। जटाः विक्षिप्य विकीर्य ॥१५॥

1 1 MMa महाम्नामुनि 2 MMa 'ल' 3 HVW वर्षद्रि' MMa प्रवर्षद्रि' 4 HMMaV वर्षादिभि 5 ABGJW सहदिग्भिरा' 6 HV एवोर्मिजले मारा 7 ABGHJV विक्षिप्तजटा 8 HV स्वदा हत। MMa स्वताहत 9 HV परितो 10 MMa 'मदिशो' 11 MMa 'श्रमोषित। 12 ABJom सहसा

**क्षुदिति**। परिश्रमेण इषितो गतः प्राप्त[1] इत्यर्थः। इषुसर्पणे इत्यस्मात् ॥१६॥

**वीर० अन्तर्बहिरिति**। खरै रित्यस्य सूर्यरश्मिभिरिति शेषः। शतह्रदाभिः विद्युद्भिः। छन्दोनुसारेण दीर्घत्व मार्षम्।अतिद्युभिः अतिक्रान्ता द्यौर्याभिस्ताभिः अद्भिर्जलैश्च अन्तर्बहिरुपतापितं चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकजगत् जलाप्लुतां क्ष्मां भूमिश्च वीक्ष्य मुनिर्विमनाः समत्रसदभैषीत् ॥१३॥

**तस्येति**। तस्य मुनेरित्थमुद्वीक्षतस्सतः वर्षद्भिरम्बुदैरापूर्यमाणः प्रभञ्जनेन वायुना आघूर्णतं भ्रामितं वाः उदकं यस्मिन् ऊर्मिभि र्भीषणश्चाऽर्णवः द्वीपवर्षाद्रिभिस्समं सह सहितामित्यर्थः। क्ष्मामप्यधात् छादयामास ॥१४॥

**सक्ष्मान्तरिक्षमिति**। भूम्यन्तरिक्षसहितं सदिवं स्वर्गसहितं सभागणं नक्षत्रगणसहितं, त्रैलोक्यमद्भिः आप्लुतमासीत्। तदा स मुनि रेक एव उर्वरितः अवशेषितः विक्षिप्ताः जटाः येन सः, जडवदन्धवच्च विचचाल ॥१५॥

किञ्च क्षुत्तृड्भ्यां परीतो[2] व्याप्तः। तृतीयान्तपाठे (परीतैः) मकरादीनां विशेषणम्। वीचिभिस्तरङ्गै र्नभस्वता वायुना[3] च हतः ताडितः अत एव परिश्रमेणेषितो व्याप्तः, दिवमन्तरिक्षं खमाकाशं[4] गां भूमिश्च न वेद ॥१६॥

**विज०** घनै र्मेघै रभिवृष्टाभिः अद्भिः उपतापितमाप्लावितमभितो द्युतिमतीभिः शतह्रदाभिस्तटिद्भिश्चोपतापितं दग्धवत्कृतं क्ष्मामब्धिजलप्लुतां वीक्ष्य ॥१३॥

अप्यधात् छादितवान्।तस्य मुनेरुद्वीक्षतः ॥१४॥

सदिवं स्वर्गेण सहितं, सभागणं सनक्षत्रगणं,जडवत् अन्धवत् ॥१५॥

वीचिनभस्वता तरङ्गवायुना भ्रमन्त्यो दिशो यस्य सः तथा '[वष्टि भागुरिरल्लोपम्]' (सि.कौ. अष्ट. 2-4-82) इति वचनात् टाबन्तो दिशाशब्दः। परिश्रमोषितः दुःखसमुद्रवासी ॥१६॥

**क्वचिद्गतो[5] महावर्ते[6] तरलैस्ताडितः[7] क्वचित्।**
**यादोभिर्भक्षितः[8] क्वाऽपि स्वयमन्योन्यघातिभिः ॥१७॥**

**क्वचिच्छोकं क्वचिन्मोहं क्वचिद्दुःखं सुखं[9] भयम्।**
**क्वचिन्मृत्युमवाप्नोति[10] व्याध्यादिभिरुपद्रुतः[11] ॥१७॥**

---

1 HV व्याप्त. 2 w omits परीतः. 3 W omits वायुना 4 W omits खं अन्तरिक्षं. 5 HV °भ्रम . M Ma °न्मग्न. 6 W गर्ते. 7 HV तरङ्गै°. 8 A.B.G.J.M.a °भक्ष्यते. 9 W °क्वचित्. 10 HV °त्यु समाप्नो° 11 M Ma नाभिश्च°

अयुतायुतवर्षाणां सहस्राणि शतानि च ।
व्यतीयुर्भ्रमतस्तस्मिन् विष्णुमायावृतात्मनः ॥१९॥

स कदाचिद्भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः ।
न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥२०॥

प्रागुत्तरस्यां शाखायां तस्याऽपि ददृशे शिशुम् ।
शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥२१॥

महामरकतश्यामं श्रीमद्वदनपङ्कजम् ।
कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवम् ॥२२॥

श्वासैजदलकाभातं[1] कम्बुश्रीकर्णदाडिमम्[1] ।
विद्रुमाधरभासेषच्छोणायितसुधा[2]स्मितम् ॥२३॥

पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम् ।
श्वासैजद्वलिसंविग्ननिम्ननाभि[3]दलोदरम् ॥२४॥

श्रीध० कचिदिति । अन्योन्यघातिभि स्तद्भ[4]क्षणाय परस्परं युध्यद्भिः ॥१७,१८॥

अयुतेति । विष्णुमायाऽवृतात्मन इति । स तथा दृष्टवानित्यर्थः ॥१९॥

स इति । ककुदि उन्नतप्रदेशे न्यग्रोधपोतं कोमलवटम् ॥२०॥

प्रागिति । तस्येशानदिक्शाखायां शिशुमपि ॥२१॥

महामरकतेति । श्रीमद्रम्यं वदनपङ्कजं यस्य तम् । कम्बुवत् त्रिरेखा[5]वृता ग्रीवा यस्य तम् । महोरस्कम्, विशालवक्षसम् । सुनासं शोभना नासा यस्य तम्, सुन्दरे भ्रुवौ यस्य तम् ॥२२॥

श्वासेति । श्वासैरेजन्तः कम्पमाना ये अलकास्तैराभातं शोभितम् । कम्बुवत् अन्तर्वलयेन श्रीर्ययोस्तौ कम्बुश्रियौ तयो : कर्णयोः दाडिमपुष्पे यस्य तम् । विद्रुमतुल्याधरभासा ईषच्छोणायितं सुधातुल्यं स्मितं यस्य तम् ॥२३॥

पद्मेति । पद्मगर्भवत्, आ ईषत् अरुणावपाङ्गौ नेत्रप्रान्तौ[6] यस्य तम्, हृद्यो हासो यस्मिं स्तदवलोकनं यस्य तम् । श्वासै

1--1. M.Ma "कौ ज्ञात मिश्र", 2 W शुचि", 3 M.Ma नाभिश", 4 B J "स्तद्रक्ष", 5 H V "वृत्ता, 6 H V "प्रान्तौ

रेजन्त्यश्चलन्त्यो वलयस्तिर्यङ्निम्नरेखा स्ताभिः संविग्ना चञ्चला निम्ना गम्भीरा नाभिर्यस्मिं स्तत्, दलवत् अश्वत्थपत्रसङ्काश[1] मुदरं यस्य तम् ॥२४॥

**वीर० क्वचिदिति** । तरलैस्तरङ्गैः अन्योन्यघातिभिः अन्योन्यं युध्यमानैः यादोभिर्जलजन्तुभिः स्वयं भक्षितश्च ॥१७॥

**क्वचित् शोकमिति** । मृत्युं मृत्यु मिव ॥१८॥

**अयुतायुतवर्षाणामिति** । विष्णोर्मायया हृतः आत्मा मनो यस्य तस्य मुनेः तस्मिन् जले भ्रमतः सतः महान् कालो व्यतीयायेत्यर्थः ॥१९॥

**स इति** । पृथिव्याः ककुदि तद्वदुन्नतस्थले फलैः पल्लवैश्च शोभितं न्यग्रोधपोतं कोमलवटवृक्षं ददृशे पश्यतिस्म ॥२०॥

**प्रागिति** । तस्य न्यग्रोधपोतस्य प्रागुत्तरस्यामीशान्यां दिशि या शाखा तस्यां शिशुमपि ददृशे । तं विशिनष्टि - शयान-मित्यादिना । तमोऽन्धकारं ग्रसन्तं निराकुर्वन्तम् ॥२१॥

इन्द्रनीलवत् श्यामं श्रीमद्रम्यं वदनपङ्कजं यस्य तम्, कम्बुवच्छङ्खवत् त्रिरेखावृता ग्रीवा यस्य तम् । महोरस्कं विशाल वक्षसम् शोभना नासा यस्य तम् । सुन्दरे भ्रुवौ यस्य तम् ॥२२॥

निःश्वासैरेजन्तः कम्पमाना ये अलकाः तैराभातम्, (शोभमानम्), शोभितं कम्बुवदन्तर्वलयेन श्रीर्ययोस्तौ कम्बु श्रियौ तयोः कर्णयोर्दाडिमपुष्पसदृशमाभरणं यस्य तम्, विद्रुमवत् योऽधरः तस्य भासा ईषच्छोणायितं शुचि शुभ्रं स्मितं यस्य तम् ॥२३॥

पद्मगर्भा विव अरुणावपाङ्गौ नेत्रान्तौ यस्य तम् हृद्यं हासयुक्तं अवलोकनं यस्य श्वासै रेजन्त्यश्च लन्त्यः वलयः तिर्यङ्निम्नरेखा याः ताभिः संविग्ना चञ्चला निम्ना च नाभि र्यस्मिन् तदश्वत्थस्य पत्रसङ्काशम् उदरं यस्य तम् ॥२४॥

**विज० तरलैस्तरङ्गैः** ॥१७-१९॥

**ककुदि उन्नतस्थले** ॥२०॥

**तस्य वटस्य** ॥२१,२२॥

**श्वासेन** मुखवायुना एजतां कम्पमानाना मलकानां व्रातेन मिश्रया श्रिया युक्तं कर्णदाडिमं कर्णाभरणं यस्य स तथा तम् । **ईषच्छोणाश्लिष्टा** ॥२३॥

---

1. H.V. दल

पद्मगर्भवत् अरुणावपाङ्गौ नेत्रान्तौ यस्य तम् श्वासैरेजन्त्यश्चलन्त्यो वलयः तिर्यग्रेखास्ताभिः संविग्नगम्भीरा नाभिर्यस्य स तथा। चलमुदरं यस्य स तथा। श्वासैजद्वलिसंविग्ननिम्ननाभिश्चलोदरश्च स तथा तम्। दलोदरमिति वा पाठः दलवत् अश्वत्थदलवत् पत्रवत् उदरं यस्येति ॥२४॥

चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय[1] चरणाम्बुजम्।
मुखे निधाय विप्रेन्द्र धयन्तं वीक्ष्य विस्मितः ॥२५॥

तद्दर्शनाद्वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः[2]।
प्रहृष्टरोमाद्भुत भावशङ्कितः प्रष्टुं पुरस्तं प्रससार बालकम् ॥२६॥

तावच्छिशोर्[3]वै श्वसितेन भार्गवः सोऽन्तश्शरीरं मशको यथाऽविशत्।
तत्राप्यदोन्यस्तम[4]चष्ट[5]कृत्स्नशो यथा पुराऽमुह्यदतीव विस्मितः ॥२७॥

खं रोदसी भगणा[6]नद्रिसागरान् द्वीपान्सवर्षान् ककुभः सुरासुरान्।
वनानि देशान्सरितः पुराकरान् खेटान्व्रजानाश्रमवर्णवृत्तयः ॥२८॥

महान्ति भूतान्यथ भौतिकान्यसौ कालञ्च नानायुगकल्पकल्पनम्।
यत्किञ्चि[7]दन्यत् व्यवहारकारणं ददर्श विश्वं सदिवाऽवभासितम् ॥२९॥

हिमालयं पुष्पवहाञ्च तां नदीं निजा[8]श्रमं यत्र[9] ऋषी[10]नपश्यत्।
विश्वं विपश्यञ्छ्व[11]सिता च्छिशोर्वै बहिर्[12]निरस्तो न्यपतल्लयाब्धौ ॥३०॥

तस्मिन्[13] पृथिव्याः ककुदि प्ररूढं वटञ्च तत्पर्ण[14]पुटेशयानम्।
तोकञ्च[15] तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्ग निरीक्षणेन ॥३१॥

अथ तं बालकं वीक्ष्य[16] नेत्राभ्यां धिष्टितं[17] हृदि।
अभ्यया[18]दति[19]संहृष्टः परिष्वक्तु मधोक्षजम् ॥३२॥

श्रीध० चार्विति। चारवोऽङ्गुलयो ययोस्ताभ्यामुन्नीयाऽऽकृष्य धयन्तं पिबन्तम् ॥२५॥

---

1. A.B.G.J °न्नो, 2 W ह्रष्टुं, 3 H.V °शो: निश्व°, 4 W °न्यं तम°, 5 H V मुदीक्ष, 6 M.Ma सारान्, 7 MMa यत्र °च°, 8 A °बालयं, 9. A.B.G.J तत्र, 10. H.V. ऋषिरस्यपश्यत, W ऋषी अपश्यत्।, 11 M.Ma °च्छ्वसत शि°, 12 H V °स्तोप्य°, 13 W पश्यन्, 14 H V तत्पत्र°, 15 H V बालक: 16. W दृष्ट्वा, 17. W वेष्टितं, 18 M.Ma °गा°, 19 A B G J सहितस्तट

**तदिति**। हृत्पद्मश्च विलोचनाम्बुजे च प्रोत्फुल्लानि तानि यस्य सः। अद्भुतभावोऽत्याश्चर्यरूपं तेन शङ्कितस्सन्नपि तं प्रष्टुं पुरः- प्रससार समीपं गतः ॥२६॥

**तावदिति**। अदः इदं जगत् यथा पुरा प्रलयात्पूर्वं न्यस्तं विन्यस्तं दृष्ट्वा चाऽतीव विस्मितस्सन्नमुह्यत् ॥२७॥

कृत्स्नशो दर्शनं प्रपञ्चयति **खमित्यादिना**। ककुभो दिशः, पुराण्याकरांश्च खेटान्कर्षकग्रामान्। व्रजान्गोकुलानि आश्रमांश्च वर्णांश्च तेषां वृत्तीश्चेत्यर्थः ॥२८॥

**महान्तीति**। नानायुगानि कल्पांश्च कल्पयति, तै र्वा कल्प्यत इति तथा। तं कालश्च। सदिव परमार्थमिव अवभासितं तेनैव ॥२९,३०॥

**तस्मिन्निति**। वटश्च तोकश्च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेन अपाङ्गनिरीक्षणेन निरीक्षितस्सन् ॥३१॥

**अथेति**। अथ तं बालकमधोक्षजं परिष्वक्तुमभ्ययादिति। द्वयोरन्वयः[3]। कथम्भूतम्? नेत्राभ्यां[4] हृदि धिष्ठित-मधिष्ठितम् ॥३२॥

**वीर०** चारवः सुन्दर्यः अङ्गुलयो ययोस्ताभ्यां पाणिभ्यां[5] चरणाम्बुजं उन्नीय उद्धृत्य[6] मुखे निधाय तदङ्गुष्ठं धयन्तं पिबन्तम्। इथम्भूतं शिशुं विलोक्य विस्मितो बभूवेत्यर्थः[7] ॥२५॥

**तद्दर्शना** दिति। तस्य शिशोर्दर्शनात्, वीतो गत परिश्रमो यस्य स प्रोत्फुल्लानि हृत्पद्मं विलोचनाम्बुजे च यस्य सः। अद्भुतभावेन अत्याश्चर्यरूपेण शक्कितोऽपि तं बालकं द्रष्टुं पुर प्रससार समीपं गत इत्यर्थ ॥२६॥

**तावदिति**। ताव त्तदा हे भार्गव! स मुनिः शिशोः श्वसितेन मशकवदन्तश्शरीर माविशत्, शिशोः श्वासवातेन तच्छरीरान्तः प्राविशदित्यर्थः। तत्रापि तद्गर्भेऽपि अक्षेऽन्यं अमुष्मा दन्यं तं तथाविधं शिशुमचष्ट। यथा पुरा तच्छरीरान्तःप्रवेशात्पूर्वं यथा[8] कृत्स्नशः कृत्स्नमचष्ट तद्वदेवं दृष्ट्वा अतीव विस्मितोऽमुह्यत् ॥२७॥

कृत्स्नशो दर्शनं प्रपञ्चयति - **खमिति**। खम् अन्तरिक्षं रोदसी द्यावापृथिव्यौ भगणान् नक्षत्रगणान् अद्रींश्च सागरांश्च ककुभो दिशः सुरां श्चाऽसुरांश्च तान्, पुराणि अट्टादिमन्ति आकरान् रत्नाद्युत्पत्तिस्थानानि खेटान् कर्षकग्रामान् व्रजान् गोष्ठानि आश्रमांश्चतुरो वर्णान् तेषां वृत्तीश्चेत्यर्थः ॥२८॥

महान्ति भूतानि आकाशादीनि पञ्चभौतिकान् देवमनुष्यादीनसौ मुनि नानायुगानि कल्पांश्च कल्पयतीति तथा तं कालश्च किं बहुना, यत्किञ्चिद्व्यवहारकारणं व्यवहारविषयं, विषयस्याऽपि व्यवहारं प्रति कारणत्वात्कारणमित्युक्तम्। सदिव

1 ABJ श्च. 2 ABJ गादिति 3 HV omits द्वयो 4 HV omit नेत्राभ्या 5 W omits पाणिभ्या 6 A आकृष्य 7 W omits इत्यर्थ I. 8 AB च

अवभासितम् अज्ञानां नित्यमिव प्रतीयमानं विश्वं तत्सर्वं ददर्श ॥१९॥

किञ्च । हिमालयमिति । ऋषी नरनारायणौ इत्थं त्रिश्वं विपश्यन् शिशोः श्वसितात् श्वासाद्बहिर्निरस्तः निष्कासितः पुनः[1] प्रलयाब्धौ न्यपतत् ॥३०॥

पश्य न्निति । तत्पर्णपुटेशयानम् इति वटपत्रपुटे शयानं तोकं शिशुञ्च पश्यन् तस्य शिशोः प्रेम्णा सुधास्मितेन च युक्ते नाऽपाङ्गनिरीक्षणेन निरीक्षितो बभूवेति शेषः[2] ॥३१॥

अथेति । नेत्राभ्यां हृदि वेष्टित मालिङ्गितं बालकमधोक्षजं पुनर्बहिः परिष्वक्तु मभ्ययात् अभिमुखं जगाम ॥३२॥

विज० धयन्तं पिबन्तम् ॥२५॥

अद्भुतभावेन आश्चर्यलीलाचेष्टया शङ्कितस्सन्नपि पुरः प्रससार समीपङ्गतः ॥२६॥

स भार्गवः मार्कण्डेय· ताव त्ततःपूर्वमेव श्वसितेनाऽन्तर्गच्छता सह शिशोरन्त श्शरीरं मशको यथा तथाऽविशदित्यन्वयः। तत्रोदरान्ते विन्यस्तमदो विश्वं कुत्स्नशोऽचष्ट दृष्टवान्। दृष्ट्वा च पुरा यथा बहिर्विस्मितोऽमुह्यत्तथाऽमुह्यदित्यन्वयः। अत्र मोहो नाम आश्चर्यबुद्धिरेव न त्वन्यथाज्ञानम्, तथात्वे प्राचीनाचीर्णपुण्यराशे र्वैयर्थ्यापत्तेरिति ॥२७॥

विश्वं विशिनष्टि - खं रोदसी इत्यादिना । आश्रमवर्णवृत्तयो यास्ताश्च ॥२८॥

महान्ति भूतानि पञ्चभूतानि नानायुगकल्पनं येन स तथा तं कालञ्च अन्यद्यत्किञ्चि व्यवहारकारणं हानोपादानादि समर्थं तच्चाऽद्राक्षीत्। सदिव सत्त्वेन यथार्थत्वेनैवाऽवभासितं प्रकाशितं न मिथ्याभूतत्वेन ॥२९॥

पुनः किमभूदत्राऽऽह - विश्वमिति। बहिः श्वसतः शिशोः श्वासेन बहि र्निरस्तो नुन्नः प्रलयाब्धौ न्यपतत् ॥३०॥

वटञ्च तोकञ्च वीक्ष्य तस्य शिशोः प्रेमसुधायाः प्रेमामृतादुद्भूतस्मितसहितेन अपाङ्गनिरीक्षणेन निरीक्षितोऽभू दित्यन्वयः ॥३१॥

अथ तं बालकं परिष्वक्तुमभ्यगात् ॥३२॥

तावत्स भगवान् साक्षा द्योगाधीशो गुहाशयः ।
अन्तर्दधे[4] ऋषेः सद्यो यथेहाऽनीशनिर्मिता ॥३३॥

तमन्वथ वटो ब्रह्मन् सलिलं लोकसम्प्लवः[5] ।
तिरोधायि[6] क्षणादस्य स्वाश्रमे पूर्ववत् स्थितः ॥३४॥

---

1 omits पुनः . 2 W omits इति शेषः । 3 A.B.G.J.W अन्तर्दध. 4 H.V तस्य . 5 W °वम् . 6 W °धात्स्वोपि

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे नवमोऽध्यायः ॥९॥

**श्रीध० तावदिति**। तावत्परिष्वङ्गलाभात्पूर्वमेव ऋषे[1]स्तस्याऽन्तर्हितो बभूव। तदुद्यमवैफल्ये दृष्टान्तः। अनीशो निर्द्धन तेन निर्मिता ईहा क्रिया यथेति ॥३३॥

**तमिति**।[2]तं अन्तर्हितं भगवन्तमनु वटः सलिलं लोकसम्प्लवश्च तिरोऽधायि अन्तर्हितः। स च स्वाश्रम एव यथापूर्वं स्थित इति ॥३४॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां नवमोऽध्यायः ॥९॥

**वीर० तावदिति**। तावद्भगवान् अचिन्त्यविविधविचित्रशक्त्यादिगुणगणपूर्णः योगाधीशः आश्चर्यशक्तियोगनिर्वाहकः गुहाशयः सर्वान्तरात्मा अन्तर्हितवान्। तदा ऋषे रीहा आलिङ्गनेच्छा यथा अनीशनिर्मिता निर्धनेन कृता तद्वदासीदित्यर्थः ॥३३॥

**तमिति**। तं तिरोदधतं शिशुमनु लोकासम्प्लवं सलिलं तिरोधाय तत्क्षणात्तस्य मुनेस्सकाशात् वटोऽप्यन्तर्दध इति पूर्वेण सम्बन्धः। यद्वा भगवान् सलिलं तिरोधायाऽन्तर्दधे। तमनु वटोऽपि अन्तर्दध इति सम्बन्धः। मुनिस्तु स्वाश्रमे पूर्ववत् स्थितः। अल्पदेशे विपुलदेशान्तर्भावः, अल्पकाले बहुकालान्तर्भाव तदितरजनादृश्यतद्व्यतिरिक्तमूर्तामूर्तपदार्थव्रातहेतु तत्कालावसायि सलिलादिसृष्टिश्चेति सर्वमीश्वरस्य सर्वशक्तित्वादुपपन्नम् ॥३४॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां नवमोऽध्यायः ॥९॥

**विज०** अनीशेनाऽसमर्थेन निर्मिता ईहा मायालक्षणा चेष्टा यथा क्षिप्रमन्तर्दधाति तथेयमन्तर्धानशैघ्र्यार्थे निदर्शनमिदं न तु मिथ्यात्वे ॥३३॥

अन्तर्हितं भगवन्तमनु लोकस्य सम्प्लवो यस्मात्ततथा। तिरोधायि तिरोहितमभूत् ॥३४॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां टीकायां
द्वादशस्कन्धे नवमोऽध्यायः ॥९॥

**(श्रीविजयध्वजतीर्थरीत्या नवमोऽध्यायः न समाप्तः)**

1 A.B.J ऋषेः . 2 A.B.J omits तं

# दशमोऽध्याय:

## (विजयध्वजरीत्या नवमोऽध्याय:)

### सूत उवाच

स एवमनुभूयेदं नारायणविनिर्मितम् ।
वैभवं योगमायायास्तमेव शरणं ययौ ॥१॥

### मार्कण्डेय उवाच[1]

प्रपन्नोऽस्म्यङ्घ्रिमूलन्ते प्रपन्नाभयदं हरे ।
यन्मायया‍ऽपि विबुधा मुह्[2]न्त्यज्ञानकातरा:[2] ॥२॥

### सूत उवाच

[3]तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् ।
रुद्राण्या भगवान्रुद्रो ददर्श स्वगणै[4]र्वृत: ॥३॥

अथोमा तमृषिं[5] वीक्ष्य गिरिशं समभाषत ।
[6]पश्येमं भगवन्विप्रं निभृतात्मेन्द्रियाशयम् ॥४॥

निभृतोद[7]झषव्रातो वाता[8]पाये यथार्ण[9]व: ।
कुर्वस्य तपस: साक्षात्संसिद्धिं सिद्धिदो भवान् ॥५॥

### रुद्र उवाच[10]

नैवेच्छत्याशिष: क्वाऽपि ब्रह्मर्षिर्मोक्षमप्युत ।
भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥६॥

[11]अथाऽपि संवदिष्यामो भवान्येतेन साधुना ।
अयं हि परमो लाभो नृणां साधुसमागम: ॥७॥

### सूत उाच

इत्युक्त्वा[12] तमुपेयाय भगवान् स सतां गति: ।
ईशानस्सर्वविद्याना मीश्वर: सर्वदेहिनाम् ॥८॥

---

1 HV ऋषिरुवाच, 2-2 ABGHJV °ह्यन्ति ज्ञानकाशया:°, 3 MMa तमित्थं, 4 HV °गणावृत:, 5 A °री°, 6 W पश्येम, 7 BGJ °दज्ञपवात, HV °र्मि ज्ञपवातो, MMa नन्वृषिव्रात:, 8 MMa तपापाये, 9 BGJ °वम्, 10 ABGHJMMaV श्रीभगवानुवाच, 11 W तथापि, 12 MMa समु°

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

दशमे शिव आगत्य मुनेस्तुष्टो वरानदात्। तेन साकमतिप्रीत्या समाभाष्य सभाजयन् ॥

**प्रपन्नोऽस्मीति**। ज्ञानकाशया ज्ञानवत्प्रकाशमानया त्वद्भजनं विना विद्वांसोऽपि यस्य तव मायया ज्ञानिनो वय मित्यहङ्कारेण विमुह्यन्तीन्यर्थः[1] ॥१,२॥

श्रीनारायण एव स्वमायादर्शनश्रान्तं शिवरूपेण सान्त्वयामास तदाह - **तमेवमित्यादिना**। निभृतात्मानं समाहित-चित्तं रुद्राण्या भवान्या ॥३॥

**अथेति**। निभृता निश्चला आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य तम् ॥४॥

**निभृतेति**। [2]निभृतं निश्चलम् उदकं[2] झषव्रातश्च यस्मिंस्तम्। संसिद्धिं फलं साक्षात्कुरु प्रकटीकुरु यतो भवान् सिद्धिदः ॥५॥

**नेति**। आशिषो[3]ऽभ्युदयलक्षणाः। उत निश्चितम्। अत्र हेतुः भक्तिमिति ॥६॥

**अथेति**। संवदिष्यामः संवादं करिष्यामः ॥७॥

**इतीति**। सताम् [4]सात्त्वतां गतित्वे हेतुः, ईशानेति ॥८॥

## श्रीवीरराघवविदुषालिखिता भागवतचन्द्रचन्द्रिका

इत्थं भगवता दत्तं तद्योगमायादर्शनात्मकं वरं प्राप्य ततो रुद्राद्भगवद्भक्तिस्थैर्यमाकल्पान्तमायुः, त्रैकालिकं ज्ञानं विरक्तं ब्रह्मवर्चस्विनां पुराणाचार्यत्वञ्च लेभ इति वक्तुं प्रस्तौति - **स एवमित्यादिना**। नारायणेन विनिर्मितमाश्चर्यशक्तेर्वैभव मनुभूय तमेव नारायणमेव तन्मायातरणाय शरणं ययौ ॥१॥

**तदेवाऽऽह प्रपन्नोऽस्मीति**। प्रपन्नानामभयं संसृतिभयाभावं प्रयच्छतीति तथा, यस्य तव मायया हेतुभूतया यदज्ञानं तेन कातराः विक्षिप्तचित्तास्सन्तो मुह्यन्ति, तां तर्तुं प्रपन्नोऽस्मीति भावः ॥२॥

**तमिति**। इत्थं निभृतात्मानं समाहितचित्तं मुनिं रुद्रो ददर्शेति सम्बन्धः। [5]दिवि [6]अन्तरिक्षे ॥३॥

**अथेति**। उमा रुद्राणी। उक्ति मेवाऽऽह - पश्येमेति। यथा निभृतं निश्चलं उदकं झषव्रातश्च यस्मिन्। पारावारोऽपारोर्णव समुद्रः (तथा क्षीरसागरो वा) तथा निभृतात्मेन्द्रियाशयं निश्चल देहेन्द्रियमानसं मुनिं पश्येम अस्य मुने स्तपसः संसिद्धिं फलं कुरु यतो भवान् [6]सिद्धिदः ॥४,५॥

---

1. HV omit वि, 2--2 HV निभृत निश्चल ऊर्मि, 3 HV °स्वित्, 4 BHJV omit सात्वतां, 5--5 W omits, 6 AB add स

एवमुक्तः प्राह रुद्रः - **नेति** द्वाभ्याम्। आशिषः कामान् उतापि च मोक्षमप्ययं ब्रह्मर्षिः नैवेच्छति। तत्र हेतुः परा मनन्यप्रयोजनां भगवति भक्तिं लब्धवान्। न हि भगवदेकान्तभक्ताः किञ्चिदपि वाञ्छन्तीति भावः ॥६॥

तथाऽपि यद्यपि एवं, तथाऽपि हे भवानि! साधुनाऽनेन मुनिना संवदिष्यामः संवादं करिष्यामः। किं तावन्मात्रेण - तस्येत्यत्राऽऽह - अयं हीति। नृणामयं अयमेव परमो लाभः, कोऽसौ? यस्साधुसमागमः न तस्य लाभः, किन्त्वस्माकमेवेति भावः। यद्वा अन्योऽन्यस्य समागमोऽन्योन्यस्य लाभ इति भावः। नृणामिति पारोक्ष्यनिर्देशो लोकपरिपाटी प्रदर्शनाभिप्रायकः ॥७॥

**इतीति**। स भगवान् रुद्रः सताङ्गतित्वसर्वविद्यानिर्वाहकत्वसर्वदेहीश्वरत्वजगदात्मत्वान्यात्मभूतपरमपुरुष द्वारकाणीति[2] विवक्षितानि - "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" (ब्र. सू. 1-1-31) इति न्यायात् भगवदावेशावतारत्वाद्वा तानि विवक्षितानि ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

मार्कण्डेयः पुनः किमकार्षीत् यत्कथां शृण्वतां हरौ भक्तिसमुद्रेककरीति हार्दं शौनकादीनां चोद्यं परिहरति - **स एव** - मिति। यः पूर्ववत् स्वाश्रमे स्थितः सः योगमायायाः आणिमादिविभूतेः वैभवं व्याप्तिं स्वरूपशक्तेः प्रभावं वा ॥१॥

यस्य हरेर्मायया मोहनशक्त्या विबुधा अज्ञानकातराः इति पदद्वयेन अन्योन्यविरुद्धेन मायाशब्दो व्याख्यात इति ज्ञातव्यम् ॥२॥

निभृतात्मानं पूर्णमनसं हरावेव नितरां धृतमनसं वा, दिवि व्योम्नि ॥३,४॥

निभृतो ननु पूर्ण एव तपापाये वर्षाकाले ऋषीणां व्रातो व्रतसमूहो यस्य सः तथा, पूर्वविशेषणार्थे हेतुरयम्, अस्य मुनेः ॥५॥

रुद्रः प्रतिवक्ति- **नैवेति**। मोक्षमपि नेच्छति। किमुताऽन्या आशिषः। तत्र हेतुमाह - **भक्तिमिति** ॥६॥

यद्यप्येवं तथाऽपि भवत्या वचनगौरवाद्यतिष्यामहे इत्याशयेनाऽऽह - **अथापीति**। हे भवानीति। एतेन साधुना मुनिना सह सङ्कथनेन किं प्रयोजनम्? अत्राऽऽह - अयं हीति। साधूनां समागमः सन्नतिः ॥७॥

समुपेयाय सम्प्राप। अयं साधारणो भगवान्न, किन्तु वेदसिद्ध एवेत्याशयेनाऽऽह - **ईशान इति**।अनेन श्रीहरिज्ञानमपि रुद्रप्रसादात्फलवत्स्यादित्युक्तं भवति। तत्कुत इत्यत्राह - **ईश्वर इति**। श्रोत्रादीन्द्रियवतां जीवानां शिवाधीनत्वेन तत्तदिन्द्रियसाध्यस्य ज्ञानस्याऽपि तत्प्रसादायत्तत्वं युक्तम् ॥८॥

**तयोरागमनं साक्षादीशयोर्जगदात्मनोः ।**
**न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥९॥**

---

1. W. omits द्वाभ्याम् 2 A 'दत्ताय'

भगवांस्तदभिज्ञाय[1] गिरिशो योगमायया ।
[2]आविशत्तद्गुहाकाशं वायुश्छिद्र मिवेश्वरः ॥१०॥

आत्मन्यपि शिवं प्राप्तं तटित्पिङ्ग[3]जटाधरम् ।
[4]त्र्यक्षमष्ट[5]भुजं प्रांशुमुद्यन्तमिव भास्करम् ॥११॥

व्याघ्रचर्माम्बरं शूल[6]धनु[7]रिष्वसि चर्मभिः ।
[8]अक्षमालां डमरुकं[8] कपाल[9] परशुं सह ॥१२॥

बिभ्राणं सहसा[10] भातं व्यचष्ट[11] हृदि विस्मितः ।
किमिदं कुत एवेति समाधे[12]र्विरतो मुनिः ॥१३॥

नेत्रे उन्मील्य ददृशे सगणं सो[13]मयाऽऽगतम् ।
रुद्रं त्रिलोकैकगुरुं ननाम शिरसा मुनिः ॥१४॥

तस्मै सपर्यां व्यदधात् सगणाय सहोमया ।
स्वागतासनपाद्यार्घ्य गन्धस्रग्धूपदीपकैः ॥१५॥

आह त्वाऽऽत्मानुभावेन पूर्णकामस्य ते विभो !
कर[14]वाम किमीशान! येनेदं निर्वृतं जगत् ॥१६॥

**श्रीध० तयोरिति ।** रुद्धाः धियोऽन्तःकरणस्य वृत्तयो येन स ॥९,१०॥

**आत्मनीति ।** न केवलं बहिरेव[15] किन्तु आत्मन्यपि प्राप्तं शिवं विचक्ष्य विस्मित । कथं प्राप्तम्? सहसा अकस्मादेव हृदि[16] भान्तम् । कथम्भूतम्? तटि[17]त्पिङ्गा जटा धारयतीति तथा तम् । त्रीण्यक्षीणि यस्य तम् । शूलादिभिः सहाऽक्षमालादीन् बिभ्राणमित्यन्वयः । अक्षमालादीनां द्वन्द्वैक्यम् ॥११,१२॥

**बिभ्राणमिति** विस्मयपूर्वकं बहिर्दर्शनमाह - किमिदमिति ॥१३॥

**नेत्रे इति ।** [18]सोमया उमया सहाऽऽगतम् रुद्रं ददृशे । ततो ननाम ॥१४,१५॥

**आहेति ।** पूर्णकामत्वं व्यनक्ति । येन त्वया जगन्निर्वृतं भवतीति ॥१६॥

---

1 ABGHJV °री° 2 HV अवि° 3 ABGJ MMa °ङ्गि° 4 ABGJW त्र्यक्ष दश° 5 M MMa शम्भु 6 ABGJ °धा 7 [illegible] 8-8 ABGHJV °माला डमरूक क° 9 ABGJ °लामिषनु MMa °ल पाशु 10 HV भान्त 11 ABGHJV विचक्ष्य 12 HV °मापि वि 13 HV °ममागतम् W ०मयान्वितम् 14 AHV °णि 15 ABJ omit किन्तु 16 ABJ भातम् 17 ABJ तडि° 18 HV सोमं उमया

**वीर० तयोरिति**। तयोश्शर्वशर्वाण्योरागमनमात्मानं देहं विश्वं च न वेद। मार्कण्डेय इति कर्तृपदाध्याहारः। अवेदने हेतुत्वेन [1]मार्कण्डेयमेव[1] विशिनष्टि रुद्धधीवृत्तिः रुद्धाः धीवृत्तयः अन्तःकरणवृत्तयः येन सः ॥९॥

[2]ततो रुद्रः किश्चकारेत्यत आह[2] - **भगवानिति**। योगमायया भगवदुपासनप्रभवया परकायप्रवेशसामर्थ्यात्मिकया आश्चर्यशक्त्या तस्य मुनेर्गुहाकाशं [3]हृदयाकाशमाविशत्, यथा वायुः छिद्रमाविशति तद्वत् ॥१०॥

**आत्मन्यपीति**। अपिः त्वर्थः। आत्मशब्दो हृदयपरः। निरुद्धधीवृत्तित्वात् बहिस्तु न वेद आत्मनि तु अचष्ट इति सम्बन्धः। कथम्भूतम् [4]तटित इव पिशङ्गा जटा धारयतीति तथा तम्। त्रीण्यक्षीणि यस्य, अष्टौ भुजा यस्य तम्। उद्यन्तं भास्करमिव स्थितं प्रांशुं प्रकृष्टरश्मिम् ॥११॥

व्याघ्रचर्मैवाम्बरं, शूलश्च बाणश्च खड्गश्चर्माणि तैश्च सह, धनुश्चाक्षमालादींश्च ॥१२॥

बिभ्राणं सहसा अकस्मादेव हृद्यवभातं स मुनिर्व्यचष्टेति सम्बन्धः। ततः किमिदं कुत एवेति विस्मितः समाधेरुपरतः ॥१३॥

**नेत्रे इति**। स मुनिरुमया भवान्या, अन्वितम्। सोमयेति सन्धिरार्षः, सगणं रुद्रं ददृशे शिरसा ननाम च ॥१४॥

**तस्मा इति**। स्वागतादिभिः सपर्यां व्यदधात् [5]अकरोत्, स्वागतं कुशलागमनप्रश्नः ॥१५॥

**आह चेति**। उक्तिं मत्वाऽऽह - आत्मानुभावेनेत्यादिना। आत्मानुभावेन स्वप्रभावेन पूर्णाः समग्राः कामाः यस्य तस्य तव, हे ईशान! किं करवाम किमिष्टं करवाम, न किञ्चिदित्यर्थः। कर्तव्यमिष्टं हि सुखं, सर्वस्य जगतः सुखमापादयितुः किमस्माभिः कर्तव्यमस्तीत्याह - येनेदमिति। येन त्वयेदं जगन्निर्वृतं सुखितं पूर्ववत्, "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" (ब्र.सू.1-1-31) इति न्यायेन अन्तरात्मभूतपरमपुरुषदृष्ट्या पूर्णकामत्वजगदानन्दकरत्वे विवक्षिते एवमग्रेऽपि [6]द्रष्टव्यम् ॥१६॥

**विज० तदा मुनिना किमकारीति तत्राऽऽह - तयोरिति**। अहङ्काररूपेण जगदात्मनोरिति अज्ञाने किं कारणम्? अत्राऽऽह - **रुद्धधीवृत्तिरिति**। धीपूर्वकत्वादिन्द्रियवृत्तेस्तद्रोधे सर्वेन्द्रियरोधो युक्त इति रुद्धधीवृत्तिरित्युक्तम्। आत्मानं स्वं विश्वं पुरोवर्ति सर्वम् ॥९॥

योगमायया अणिमादियोगसामर्थ्येन छिद्रं रोमकूपादिसुषिरम् ॥१०॥

न केवलं बहिरेव आत्मनि स्वस्मिन्नपि ॥११॥

---

1--1 W omits. 2--2 W omits 3 W omits हृदयाकाश 4 A B तडि°. 5 W °गम प्र° 6 W omits द्रष्टव्यम्।

इषुयुक्तं धनुश्च असिश्च चर्म च तानि तैर्युक्तं करे डमरुकं अणुतरं तन्तुपूर्वाढ्यं चर्म पिनद्धमुखं दारुवाद्यम् ॥१२॥

व्यचष्ट अपश्यत् ॥१३॥

सह उमया, सोमामविन्ददित्यादेः ॥१४,१५॥

पूर्णकामत्वं व्यनक्ति येन त्वया जगन्निर्वृतं भवति ॥१६॥

नमश्शिवाय शान्ताय सत्त्वाय प्रमृडाय च ।
[1]रजोजुषेऽथ घोराय नमस्तुभ्यं तमो जुषे ॥१७॥

सूत उवाच

एवं स्तुत [2]स्स भगवान् महादेवसतां गतिः ।
[3]परितुष्टः प्रसन्नात्मा प्रहसंस्तमभाषत ॥१८॥

[4]श्रीरुद्र उवाच

वरं वृणीष्व [5]नः कामं वरदेशा वयं त्रयः ।
अमोघं दर्शनं येषां मर्त्यो यद्विन्दतेऽमृतम् ॥१९॥

ब्राह्मणा साधवश्शान्ता निस्सङ्गा भूतवत्सलाः [7]।
[6]एकान्तभक्ता अस्मासु निर्वैरास्समदर्शिनः ॥२०॥

सलोका लोकपालास्तान् [8]वन्दन्त्यर्चन्त्युपासते ।
अहञ्च भगवान् ब्रह्मा स्वयञ्च हरिरीश्वरः ॥२१॥

न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ।
नाऽऽत्मनश्च [9]जनस्याऽपि [10]तद्युष्मान् वयमीमहि ॥२२॥

न ह्यम्मयानि तीर्थानि न दे[11]वाश्चेतनोज्झि[11]ताः ।
ते पुनन्त्युरुकालेन [12]यूयं दर्शनमा[12]त्रतः ॥२३॥

ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम् ।
[13]बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः ॥२४॥

A ऽथि , B.G.J M.Ma ऽप्य , 2 B G J W आदि , 3 A G J प्रशान्तात्मा, 4 A श्रीभव B G H J V श्रीभगवान् . MMa श्रीमहादेव, 5 H V ते मं ; W मत्कामं , 6 H.V भक्त्या ह्यस्मासु , 7 M.Ma दर्शना , 8 H V मानन्त्य 9 H V परस्यापि , 10 A य , 11- -11 M Ma वा मृच्छिलामया , - -12 H V. दर्शनादेव साधवः , 13 BMMa धानं

श्रीध० निर्गुणत्वेन त्रिगुणत्वेन च नमस्करोति - नम इति। नम[1] शिवाय निर्गुणाय। सत्त्वाय सत्त्वाधिष्ठात्रे। अत एव प्रमृडयति[2] प्रकर्षेण सुखयतीति तथा तस्मै नमः[3] ॥१७,१८॥

वरमिति। नो[4]ऽस्मत्तः[4]। त्रयो ब्रह्मविष्णुमहेश्वराः। यद्यभ्यः। ते वयम् ॥१९॥

वरदानादिना भवत्सेवैवास्माभिः क्रियते न त्वनुग्रहो जगद्वन्द्यत्वाद्भवतामिति ब्राह्मणान् स्तौति ब्राह्मणा इत्यादि। ये साधवः सदाचाराः शान्ताः मत्सरादिरहिताः। निस्सङ्गा निष्कामाः ॥२०॥

सलोका इति। न केवलं त एव, किन्त्वहञ्चेत्यादि ॥२१॥

पूज्यतमत्वे हेत्वन्तरमाह - नेति। अण्वपि अणुमात्रमपि न चक्षते न पश्यन्ति, ततस्मादेवम्भूतान्युष्मान् ईमहि भजेमहि[5] ॥२२,२३॥

ब्राह्मणेभ्य इति। ब्राह्मणेभ्यो ब्राह्मणान्। आत्मसमाधानं चित्तैकाग्र्यम्। तप आलोचनम्। स्वाध्यायोऽध्ययनम्। संयमो वागादिनियमः, तैः ॥२४॥

वीर० यतो न किञ्चित्करवाम, अतः केवलमञ्जलिमात्रं करवामेत्यभिप्रेत्य प्रणमति - नम इति। शिवाय लोकमङ्गलकराय शान्तायोर्मिषट्करहिताय प्रमृडाय प्रकर्षेण मृडयति सुखयतीति प्रमृडस्तस्मै। सत्त्वाय शुद्धसत्त्वमयशरीर-विष्णुरूपायेत्यर्थः। रजोजुषे ब्रह्मरूपाय, तमोजुषे प्रकृतरुद्ररूपाय अत एव घोराय घोररूपाय [6]तुभ्यं नमस्करोमीत्यर्थः[6] ॥१७॥

[7]इत्थं मार्कण्डेयेन स्तुतो रुद्रः[7] [8]भाषत इत्याह सूतः - एवमिति। प्रसन्नात्मा प्रसन्नचित्तः स भगवान् रुद्रः[8] ॥१८॥

भाषण मेवाऽऽह - वरमिति सप्तभिः[9]। मत् मत्तः (नोऽस्मभ्यं) कामं यथेष्टं वरं वृणीष्व यतो वयं त्रयः ब्रह्मविष्णुरुद्राः वरदेशाः वरदश्रेष्ठाः[10]। न मे किञ्चिदपेक्षितमित्यत आह - अमोघमिति। येषां त्रयाणामस्माकं दर्शनममोघमव्यर्थम्, अतो यत्किञ्चित् वृणीष्वेति भावः। तर्हि अमृतत्वं दातुं प्रभवसि किमित्यत्राऽऽह - मर्त्यो यद्विन्दन्तेऽमृतमिति। यत् येभ्यस्त्रिभ्यः अमृतं मोक्षं विन्दते सद्वारकाद्वारकोपासनाभ्यामिति[11] भावः। साक्षाच्छ्रीभगवदुपासकस्यापि[12] ब्रह्मरुद्रयोः श्रीभगवद्विभूतित्वानुसन्धा - नस्याऽऽवश्यकत्वात् ॥१९॥

यथा मुनिः शास्त्रदृष्ट्या आत्मानं तुष्टाव तथा स्वयमपि तद्दृष्ट्या ब्राह्मणान् स्तौति - [13]ब्राह्मणा इति[13] द्वाभ्याम्। ये साधवः[14] "[15]साधुत्वादि गुणयुक्ताः[15] ब्राह्मणास्तान् सलोका लोकपाला [16]इन्द्रादयः वन्दन्त्यर्चन्त्युपासते इति सम्बन्धः।

---

1 H V सगुण; 2. A.B.J omits प्रकर्षेण, 3. ABJ omit नमः, 4--4 H V omit, 5 A B J भजेम, 6--6 W omits, 7--7 W omits, 8--8 W omits, 9 W omits सप्तभिः, 10 W °ष्ठ, 11 A B °कोपास°, 12 A.B °स्य°, 13--13 W इत्यादि, 14 A B omit साधवः।, 15--15 W omits, 16 W omits इन्द्रादयः

साधुलक्षणविवक्षया ब्राह्मणान् विशिनष्टि - शान्ताः रागाद्यकलुषितचित्ताः निस्सङ्गाः विषयसङ्गरहिताः। एकान्तभक्ता इत्यस्य [1]भगवतीत्यादि ज्ञेयम्[1] अस्मासु रुद्रादिषु निर्वैराः। श्रीभगवद्विभूतित्वानुसन्धानेन [2]वैररहिताः। कुतः? भूतवत्सलाः सर्वभूतेषु वात्सल्य [2]युक्ताः, किं बहुना, समदर्शनाः कृत्स्नस्यापि जगतो भगवद्विभूतित्वानुसन्धानेन समबुद्धयः ॥२०॥

सलोकाः देवमनुष्यादिजनसहिताः लोकपालाः इन्द्रादयः किं बहुना [3]वर्णनेनेत्याऽऽह - अहमिति। वयमपि त्रयो [4]रुद्रादयः तान् वन्दामहे अर्चयामहे उपास्महे चेत्यर्थः ॥२१॥

तत्र हेतुमाह - नैते इति। एते साधवो ब्राह्मणाः। न ते इति पाठे ते ब्राह्मणाः अजे अच्युते मयि चाच्युते चेत्यन्वयः। ब्रह्मशरीरके मच्छरीरके चाऽच्युते इत्यर्थः। अण्वपि ईषदपि यथातथा भिदां भेदं न चक्षते न पश्यन्ति। अजं मां च अच्युतात्पृथक्सिद्धं न पश्यन्तीति विवक्षितार्थः 'स ब्रह्मा स शिवः सेन्द्रः'' (नृ.पू.ता.3-1)इत्यादि श्रुत्या श्रीभगवतो ब्रह्मादिशरीरकत्वेन [5]शरीरात्मभावनिबन्धने सामानाधिकरण्यावगमात् परतन्त्रभेदस्याऽनिषेध्यत्वात् स्वतन्त्रभेददर्शनमेवाऽत्र निषिध्यते। इममर्थं स्वयमेव स्फुटीकुर्वन्नाऽऽह - नेति। आत्मनः स्वस्य जनस्य [6]स्वेतरजनस्य चाऽपि अच्युते भिदां न चक्षते इत्यन्वयः। आत्मजन शब्दाभ्याम् अचित्संसृष्टजीवा उच्यन्ते। न हि तैस्सह ब्रह्मणः स्वरूपाभेदोऽभेदवादिनोऽपि सम्मतः। अचिदंशेन तादात्म्यस्य तन्मतेऽप्यनिष्टत्वात् न हि जनशब्दः चेतनमात्रे [7]स्वारसिकः, येन तत्स्वरूपाभेदः सिध्येत। अतोऽत्राऽचिदंशेन यादृशो भेदनिषेधः स्वातन्त्र्यविषयः तादृश एव चिदंशेनाऽपीति दिक्। यतो भिदां च न चक्षते, तत् तस्माद्वयमपि युष्मान् ईमहि भजाम। तत्र सलोका लोकपाला अहं ब्रह्मा चेति वयं भगवद्विशेषाधिष्ठानत्वबुद्ध्या युष्मान् भजाम। अच्युतस्तु ''ज्ञानी त्वात्मैव मे मतम्'' (भ.गी.7-18) इति। ''ये यथा मां प्रपद्यन्ते तां[8]स्तथैव भजाम्यहम्'' (भ.गी. 4-11) इत्युक्त्यभिसन्धिविशेषेण भजतीति विशेष इति भावः ॥२२॥

तद्दर्शनेन आत्मनः कृतज्ञतामभिप्रेत्य स्तौति - न हीति। अम्मयानि [9]जलमयानि तीर्थानि न दर्शनमात्रेण पुनन्ति। [10]किन्तु चिरं स्नानादिभिस्तानि पुनन्ति। तथा मृच्छिलामया देवताप्रतिकृतयश्च न दर्शनमात्रेण पुनन्ति, किन्तु चिरम् आवाहनादिषोडशोपचारपूजादिभिरिति भावः। यूयं [11]तु दर्शन [12]मात्रादेव पुनीथ इति विशिष्टास्तीर्थादिभ्यो यूयमिति भावः[12] ॥२३॥

यथा तेन ''नमश्शिवाय'' इत्यादिना नमस्कृतं तथा स्वयमेव प्रणमति ब्राह्मणेभ्य इति। नमस्यामो नमस्कुर्मः। तान्विशिनष्टि ये ब्राह्मणाः त्रयीमयं [13]वेदमयं वेद[14]त्रयीप्रचुरमात्मसमाध्यायादिभिः महितं रूपं बिभ्रति, स्मेति विस्मये ॥२४॥

---

1--1 W इत्यादिः, 2--2 W omits. 3 W omist वर्णनेन 4 W omits रुद्रादय 5 A B omit भव 6 A B 'तस्य 7 A B omit मात्रे. 8 A B "मस्य", 9 W omits जलमयानि. 10 A B omit किन्तु. 11 A B omit तु 12--12 W omits 13 A B omit वेदमय 14 W omits त्रयी

**विज०** सत्त्वाय पराक्रमयुक्ताय सद्ब्रह्म शरणं याति गच्छतीति सत्त्वः तस्मै वा। प्रमृडाय प्रकृष्टपालाय तत्तद्वस्तुयोग्यतानुसारेण रक्षाद्यर्थं सत्त्वादिगुणप्रवर्तकत्वात् सत्त्वाय रजोजुषे इत्युक्तम् ॥१७,१८॥

त्रयो ब्रह्मादयो येषां त्रयाणां दर्शनममोघं तत्र हेतुमाह मर्त्य इति। मर्त्योऽमृतं मुक्तिं विन्दते, यत् यस्माद्दर्शनात् येभ्योऽमृतं वा ॥१९॥

ब्राह्मणभक्तिं दर्शयति - **ब्राह्मणा** इति। ब्राह्मणा ब्रह्मवादैकनिष्ठाः साधवो रागादिदोषविधुराः शान्ताः भगवन्निष्ठापारङ्गताः अत एव निस्सङ्गाः दुष्टसङ्गरहिताः अत एव भूतेषु सज्जनेषु वत्सलाः स्निग्धा एकान्तेन विष्णुरेव सर्वोत्तमो नाऽन्य इति निर्णयेन अस्मासु भक्ताः योग्यतातिरेकेण वैरशून्याः समं ब्रह्म, तद्दर्शनं येषां ते तथा ॥२०॥

य एवंविधान् तान्वदन्ति स्तुवन्तीत्यादिसपर्यां कुर्वन्त इत्यर्थः। अहं ब्रह्मा च हरेः पृथक् स्वतन्त्रौ न तदधीना वेव, तत्र हेतुरीश्वर इति। ईर्लक्ष्मीः शंरूपः शतानन्दः तयोर्वर, ईशादीशानाच्च वर इति यस्मात्तस्मात् द्वयोर्वर इत्युक्तम्। यूयं के इत्यतो वाऽऽह - अह मिति। स्वय मित्यनेन हरे रेव स्वातन्त्र्यं नाऽऽवयोः, आवां तदधीना विति स्पष्टमुक्तम्। अत्राऽप्ययमेव हेतुरीश्वर इति। 'ईश ऐश्वर्ये' इति धातोः अनुपहतैश्वर्यमूर्तित्वादीश्वर इत्युच्यते ॥२१॥

इतोऽपि ब्राह्मणा एव पूज्या, यत एवं विधं तत्त्वं त एव जानन्तीत्याह - **न ते** इति। ते ब्राह्मणा मयि स्थितत्वान्मयी त्युच्यमाने हरावजे च स्थितत्वात् अजशब्दवाच्ये च पृथक् स्थिते अच्युते च भिदामपि परमाणुमात्रमपि न चक्षते न पश्यन्ति। किं च जनस्य जननवतः स्थावरजङ्गमरूपस्य प्रपञ्चस्य आत्मनोऽन्तर्यामिणश्च भिदां न पश्यन्ति। अपिशब्देन "एको देवः" इति श्रुतिं प्रमाणयन्ति। तत् तस्मात् वयं युष्मानखिलैः पूज्यान् ईमहि बुध्यामहे। यद्वा मयि भिदामन्यथाज्ञानं विष्णुरय मिति किञ्चित्साम्येनाऽपि न पश्यन्ति, अपि तु ततो विलक्षणत्वेन तत्कटाक्षाहितशक्तित्वेन जगत्संहर्तृत्वेन ततोऽनन्तांशहीनत्वेनैव मत्तत्त्वं पश्यन्ति चतुर्मुखे यथास्थितं पश्यन्ति। अच्युते च तथा यथाश्रुतिविहितमात्मनश्चेतनसमुदायस्य जन्यते इति जनो देहस्तदादिजडस्याऽपि तत्त्वं यथा तथा अन्यथा न पश्यन्ति ॥२२॥

सर्वस्माच्छुद्धि हेतुत्वाच्च ब्राह्मणा एव पूज्या इत्याऽऽह - **न हीति** ॥२३॥

अस्माभिश्च सम्भाव्यत्वात् विप्रा एव श्रेयांस इत्याह **ब्राह्मणेभ्य** इति। त्रयीमयं वेदमुख्यप्रतिपाद्यं आत्मनि सम्यगाधानमवस्थानं सन्निधानलक्षणं यस्य तत्तथा। तप आलोचनम्। स्वाध्यायोऽध्ययनं, संयमो वागादिनियमः तैर्बिभ्रति "[1]आचारहीनं न पुनन्ति वेदाः (वसिष्ठ स्मृतिः6-3) इत्यतस्तप इत्यादि ॥२४॥

1 M Ma तव

श्रवणा[1]द्दर्शनाद्वा[1]पि महापातकिनोऽपि वः[2]।
शुध्येरन्नन्त्यजाश्चाऽपि किमु सम्भाषणादिभिः ॥२५॥

सूत उवाच

इति चन्द्रललामस्य धर्मगु[3]ह्योपबृंहितम्।
वचोऽमृतायनमृषिर्नातृप्यत् कर्णयोः पिबन् ॥२६॥

स चिरं मायया विष्णोर्भ्रामितः कर्शितो भृशम्।
शिववागमृतध्वस्तक्लेशपुञ्जस्तमब्रवीत् ॥२७॥

ऋषि[4]रुवाच

अहो ईश्वरचर्येयं[5] दुर्विभाव्या शरीरिणाम्।
यन्नमन्तीशितव्यानि स्तुवन्ति जगदीश्वराः ॥२८॥

धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम्।
आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति च[6] ॥२९॥

नैतावता भगवतः स्वमायामयवृत्तिभिः।
न[7] दुष्येतानुभाव[8]स्तैः मायिनः कुहकै[9]र्यथा ॥३०॥

सृष्ट्वेदं[10] मनसा विश्वमात्मनाऽनुप्रविश्य यः।
गुणैः कुर्वद्भिराभाति [11]कर्तेव स्वप्नदृग्यथा ॥३१॥

तस्मै नमो भगवते त्रिगुणाय [12]महात्मने।
केवलायाऽद्वितीयाय गुरवे ब्रह्ममूर्तये ॥३२॥

श्रीध० किञ्च - श्रवणादित्यादि ॥२५॥

इतीति। चन्द्रो ललामं[13] भूषणं यस्य तस्य धर्मरहस्ययुक्तममृतास्पदं वचः कर्णाभ्यां पिबन्नाऽऽतृप्यत् अलमिति नाऽमन्यत। कर्णयोरमृतायनमिति वाऽन्वयः ॥२६॥

स इति। शिवस्य वागेवाऽमृतं तेन ध्वस्तः क्लेशपुञ्जो यस्य सः ॥२७॥

---

1--1. W. दर्शनश्रवणाद्वापि, 2. H.V. वै।, W वा।, 3 W °गुह्योप°, 4 H V मार्कण्डेय उवाच, 5 A.B.G.J लीलेयं, 6 A ते।, 7 M.Me प्र°, 8 M.Me वस्तै, 9. A.B.G.H.J.V कुहकं यथा, 10 MMe °शं स्वात्म°, 11 W कर्तृवत्स्व°, 12 A B G J M Me गुणा°, 13 A.B.J °लामो

**अहो इति**। इयं [1]ईश्वरलीला दुर्विभाव्याऽवितर्क्या। यत् यया ईशितव्यानि [2]स्वनियम्यानि यानि भूतानि तानि जगदीश्वराः स्वयं नमन्ति स्तुवन्ति चेति ॥२८॥

अथवा लोक[3]सङ्ग्रहमात्रमेतदित्याह - **धर्ममिति**। प्रवक्तारोऽपि [4]यत्स्वयं देहिनां धर्मं [5]ग्राहयितुं आचरन्ति ॥२९॥

नन्वेतत्स्वप्रभावतिरस्कारकं कथं मया क्रियते? तत्राऽऽह - **नैतावतेति**। एतावता लोकसङ्ग्रहमात्रेण तैर्नमनादिभिः, कथम्भूतैः, स्वमायामयीवृत्तिर्येषु तैर्भगवतो मायिन स्तवाऽनुभावो न दुष्येत, यतः प्रसिद्धस्य मायिनः कुहकं कपटं यथा तथा एतानि नमनादीनि। अतस्तस्य [6]तथा [7]कुहकैरात्मानुभावो न [8]दुष्यति, तद्व[9]दिति। प्रदुष्येताऽनुभाव इति पाठे नकारस्य [10]दृष्टान्तेऽप्यनुषङ्गः ॥३०॥

माया चेष्टितं प्रपञ्चयति **सृष्ट्वेति**। स्वप्नदृग्यथेति अविद्याचेष्टिते दृष्टान्तः ॥३१॥

**तस्मै** इति। त्रिगुणत्वेऽपि न जीववत्तदभिभूताय, किन्तु [11]महात्मने गुणात्मने [12]इति पाठे गुणानामात्मने नियन्त्रे ॥३२॥

**वीर०** येषाञ्च दर्शनश्रवणात् दर्शनात् श्रवणाच्च। महापातकिनोऽन्त्यजाश्च विशुध्येरन् सम्भाषणादिभिः विशुध्येरन् इति किमु वक्तव्यम्। तेभ्यो ब्राह्मणेभ्यो नमस्याम इति सम्बन्धः ॥२५॥

**इतीति**। चन्द्रो ललामं भूषणं यस्य तस्य रुद्रस्य इत्थम्भूतं धर्म[13]गुप्तोपबृंहितं सत्सेवात्मकधर्मरहस्ययुक्तं कर्णयोरमृतायमानं वचः पिबन्नाऽतृप्यत्, कर्णाभ्यां पिबन्वा ॥२६॥

**स इति**। स मुनिः विष्णोर्मायया आश्चर्यशक्त्या चिरं भ्रामितः अत एव नितरां कर्शितश्च। शिवस्य वागेव अमृतं तेन ध्वस्तः क्लेशपुञ्जः भ्रमणप्रयुक्तक्लेशसमुदायो यस्य सः, तं शिवं इदं वक्ष्यमाणमब्रवीत् ॥२७॥

तदेवाऽऽह - **अहो इति**। यदुक्तं "वरं वृणीष्व" (भाग.12-10-19) "अमोघं दर्शनं येषां" (भाग.12-10-19) इति। तत्र तद्बहुमानाय किञ्चित्प्रार्थयितु मिच्छुः तावद्यथोक्तं - "ब्राह्मणास्साधवः" (भाग.12-10-20) इत्यादिना, तथा "परस्परं भावयन्तः श्रेयःपर मवाप्स्यथ" (भ.गी.3-11) इत्युक्तरीत्या स्वयमप्याह- अहो इति पञ्चभिः। इयमीश्वराणामीश्वरविभूतिभूतानां चर्या चेष्टा शरीरिणां दुर्विभाव्या दुर्विज्ञेया [14]अभिप्रायाः। दुर्विभाव्यतामेव प्रकटयति। यत् यतः स्वयं जगदीश्वराः [15]जगत्युत्कृष्टा अपि ईशितव्यानि अपकृष्टानि भूतानि नमन्ति स्तुवन्ति चेति आत्मनो नैच्यमनुसंहितम्। इत्थम्भूतैव हि भागवतानां परिपाटी ॥२८॥

---

1. A.B.J omit ईश्वर, 2. H.V. omit स्व, 3. H.V. ˚हार्थमे˚, 4. H.V. omit यत्, 5. H.V. omit ग्राहयितुं, 6. H.V. omit तथा, 7. H.V. कुहकेन, 8. H.V. दुष्येत, 9. A.B.J omit इति; 10. H.V. ˚नानुषङ्गः; 11. A.B.J omit महात्मने, 12. A.B.J omit इति पाठे, 13. A.B गुह्योप; 14. A.B omit अभिप्रायाः; 15. A.B ˚गत्युत्कृ˚

कस्तर्हीशितव्यप्रणामादावभिप्राय इति विचार्य निश्चिन्वन्[1] आह - धर्मानिति । देहिनां प्रवक्तारः धर्मोपदेष्टारोऽपि धर्मान् ग्राहयितुं स्वयं[2] प्रायशोऽनुतिष्ठन्ति [3]क्रियमाणधर्मं तत्कर्तारं वाऽनुमोदन्ते अभिनन्दन्ति स्तुवन्ति, अभिनन्दनं सन्तोषः[3] ॥२९॥

**नैतावतेति** । यद्यप्येवम् अथाऽप्येतावता आचारानुमोदनस्तुतिमात्रेण तैरीशितव्यप्रणाम स्तुत्यादिभिश्च, **कथम्भूतैः**? भगवतः पूज्यस्य स्वमायामयीवृत्तिराश्चर्यमयी चेष्टा येषु तैः । प्रभावो न दुष्येत न विहन्येत यथा मायिनः लोकप्रसिद्धमायाविनः कुहकै श्छद्मव्यापारैः तस्य प्रभावो न दुष्येत [4]न विहन्येत[4], प्रत्युत स्वमायाविश्वरूपप्रभावाविष्कारः, तद्वत् ॥३०॥

शास्त्रदृष्ट्या भगवदात्मकत्वं मन्वानः सर्वकारणत्वादिभिर्विशिषन्प्रणमति - **सृष्ट्वेति** द्वाभ्याम् । यो मनसा सङ्कल्पमात्रेणेदं जगत् सृष्ट्वा आत्मना स्वेन अन्तःप्रविश्य कुर्वद्भिः पूर्वकर्मवासनानुगुणपरिणामिभिरुत्तरोत्तरपुण्यापुण्यात्मकविषमसृष्टिं कुर्वद्भिर्गुणैःस्वयं कर्तेवाऽऽभाति । इवशब्देन परमार्थतः पुण्यापुण्यात्मककर्मकर्तृत्वाभाव परमात्मनः सूच्यते, जीवस्यैव तत्र कर्तृत्वात् । अकर्तुरपि कर्तृत्वाभासे दृष्टान्तः स्वप्नदृग्यथेति । न हि स्वप्नार्थसृष्टिकर्ता स्वप्नं दर्शयितुं तत्कर्मानुगुण तत्तदेवानुभाव्यतत्कालमात्रावस्थायिस्वाप्नप्रपञ्चस्रष्टा[5] परमपुरुषं "न तत्र रथा नारथयोगा" इत्यारभ्य "सृजते सहि कर्तेति" (बृह उ. 4-3-10) "य एषु सुप्तेषु जागर्ति कामं पुरुषो निर्मिमाण स्तद् ब्रह्म" इति च श्रवणात् यथा स्वप्नार्थसृष्टेः परमात्मकर्तृकत्वेऽपि तदनभिज्ञानां तस्या जीवकर्तृकत्वाभिमानः तथा पुण्यापुण्यकर्तृत्वादेर्जीवगतत्वमजानतां ब्रह्मण एव जीवभावेन तत्कर्तृत्वाभिमानमात्रमिति विवक्षितार्थः ॥३१॥

**तस्मै** इति । त्रिगुणाय त्रैगुण्यनियन्त्रे महात्मने अप्रतिहतसङ्कल्पाय केवलाय निरस्तनिखिलदोषायाऽद्वितीयाय स्वतुल्य वस्त्वन्तररहिताय ब्रह्ममूर्तये वेदनिर्वाहकाय रूपतोऽपि विभवे वा ॥३२॥

**विज०** न केवलं दर्शनाच्छुद्धिः, अपि तु श्रवणादपीति समुचितत्वा दाह - **श्रवणादिति** । तर्ह्यधिकशुद्धिः कस्मादिति तत्राऽऽह - किम्विति । आदिपदेन नामस्मरणं गृह्यते ॥२५॥

चन्द्रललामस्य चन्द्रशेखरस्य धर्मगुह्योपबृंहितं धर्मरहस्यगूढं अमृतायनममृतद्वर्तमानं कर्णयोर्हितम् ॥२६॥

भ्रामितः समाधे स्सञ्चालितः, अत एव कर्शितः अनेन संयमिनां समाधेरन्यत्सुखं नाऽस्तीति ज्ञापितम् ॥२७॥

इयं वाग्लक्षणा चेष्टा ईशितव्यानि भवद्भिर्नियम्यानि ब्रह्मकुलानि स्तुवन्ति, यद्यस्मात्तस्मात् ॥२८॥

मुनिस्स्वयमेव स्तवनादेरभिप्रायं वक्ति - **धर्ममिति** । न केवलं देहिनां धर्मस्य प्रवक्तार आचरन्ति च आचरतोऽनुमोदन्ते क्रियमाणं धर्मं स्तुवन्ति च ॥२९॥

1 A °निश्चिन्व , 2 A.B omit स्वयं , 3- -3 W omits, 4- -4 W omits, 5 AB °प्रपञ्च

ननु विघ्यादिवर्जितानां भवतां धर्माचरणादिना तेजःक्षतिः स्यादित्यत्राऽऽह - नेति। 'वृत्तिस्तु ग्रन्थसन्दर्भे" इति वचनात् स्वमायामयवृत्तिभिः स्वेच्छया कृता वृत्तिर्येषां ते तथा तैः मन्त्रादिभिर्विवृतेन एतावता कर्मणा भगवतोऽनुभावः प्रभावो न प्रदुष्येत प्रदुष्टो न भवति, कुहकैरिन्द्रजालव्यापारैः मायिनोऽनुभावः निश्चयो यथा तथेति ॥३०॥

प्रकारान्तरेण दोषाभावं वक्ति सृष्ट्वेति। यो भगवान् मनसा स्वेच्छया इदं विश्वं सृष्ट्वा अन्तर्यामिरूपेण अन्तःप्रविश्य दर्शनादि कुर्वद्भि गुणैः इन्द्रियैः अहङ्कर्तेति निरूप्य जीव इव आभातीत्येतावता जीववत् दुष्टो न भवति। कथमिव स्वप्नदृक् भगवदिच्छया उद्बोधितमानसवासनया करितुरगादिपदार्थान् सृष्ट्वा यथा तद्वदेव लिप्तो न भवति ॥३१॥

तस्मै भगवते नम इत्यन्वयः। त्रयस्सत्त्वादयो गुणा यस्य स तथा तस्मै गुणित्वं दोषत्वेन व्याप्तं दृष्टत्वादत्राऽऽह - केवलायेति। निर्दोषाय, निर्दोषत्वं मुक्तस्या प्यस्तीति तत्राऽऽह - अद्वितीयायेति। मुक्तनिर्दोषत्वं हरिप्रसादायत्तं न हरेस्तथा तस्य समाधिकशून्यत्वात्, कथमयमर्थः सम्पद्यते इत्यत्राऽऽह - गुरव इति। ब्रह्मादीनां स्वात्मरहस्योपदेष्टृत्वेन गुरुत्वात्तेषां सिद्धः इत्यर्थः। निराकारस्योपदेष्टृत्वं कथं घटत इति तत्रा ऽऽह - ब्रह्मेति। ज्ञानादिगुणाकाराय बृहन्तो ह्यस्मिन् गुणा इति श्रुता वस्मिन्निति वचनादाकारः सिद्ध इति ॥३२॥

कं[1] वृणे[2]ऽतः परं भूमन्[3] वरं त्वद्वरदर्शनात्[4]।
यद्दर्शनात्[5]पूर्णकामः सत्यकामः पुमान्भवेत् ॥३३॥
वरमेतं[6] वृणेऽथाऽपि पूर्णकामा[7]भिवर्षणात्[8]।
भगवत्यच्युते[9] भक्तिं तत्परेषु तथा[10] त्वयि ॥३४॥

सूत उवाच

इत्यर्चितो[11]ऽभिष्टुतश्च मुनिना सूक्तया गिरा।
तमाह भगवाञ्छर्वः शर्वया[12] चाऽभिनन्दितः ॥३५॥

(श्रीरुद्र उवाच)

[13]कामो महर्षे सर्वोऽ यं[13] भक्तिमांस्त्वमधोक्षजे।
आ कल्पान्ताद्यशः[14] पुण्यमजरामरता तथा ॥३६॥

---

1 A.B.G.H.J.V नु, 2 H V वरं ब्रह्मन्, 3 H V पर, 4 W दर्शनात्, 5 W यदीशान ", 6 A B J G H J V वरमेकं, 7 A B G J पूर्णात्का", 8 W वर्युकात् ;9 A.B.G J W "च्यु, 10 H V वधा, 11 A B G.J W इत्यर्चि", 12 H V शर्वाण्या च्चा, 13- -13 H V कामस्सर्वो महर्षेर्वो, MMa कामस्ते महर्षे सत्वो, W कामं तेऽवं महर्षेऽस्तु, 14 H V कल्प ते यशः, MMa कल्पान्त यशः

**ज्ञानं त्रैकालिकं ब्रह्मन् विज्ञानञ्च विरक्तिमत्।**

**ब्रह्मवर्चस्विनो[1] भूयात् पुराणाचार्यता[2]ऽस्तु ते ॥३७॥**

**श्रीध०** वरं वृणीष्वेति यदुक्तं तत्राऽह - **कमिति**। वरं दर्शनं यस्य तस्मात् त्वत्[3] त्वत्तः परं कं नु वरं वृणे। यस्य तव दर्शनाद[4]वलोकनात् पूर्णकामः सर्वानन्दसन्दोहरूपः सत्यकामो यथेच्छं प्राप्तसर्वानन्दः ॥३३,३४॥

**इतीति**। वरदानाय स्वयमेव प्रवृत्तः शर्वया[5] उमया चाऽभिनन्दितोऽनुमोदितस्सन्नाऽऽह ॥३५॥

**काम** इति। कामोऽयं सर्वोऽप्यन्यच्च यत्[6]पुण्यं यश इत्यादि ब्रह्मवचस्विनस्ते भूया दित्युत्तरेणाऽन्वयः। यतस्त्व[7]मधोक्षजे भक्तिमान् ॥३६,३७॥

**वीर०** यदुक्तं वरं वृणीष्वेति तत्रोत्तरमाह - **कमिति**। हे भूमन्! वरदर्षभात् त्वत्[8] त्वत्त अतः परमन्यं कं वरं वृणे वरिष्यमाणं वरं बुद्ध्या सन्निधाप्यत इति निर्देशः कृतः। वरदर्शनादिति पाठे वरं श्रेष्ठं दर्शनं यस्य तस्मात्त्वत्तः।अतश्शब्दविवक्षितं विशिनष्टि यदीशानः पूर्णकाम इति। यत् यतः पुमान् ईशानः ईश्वरः स्वतन्त्रः अकर्मवश्य इति यावत्, पूर्णकामः सत्यकामश्च भवेत् तस्मादत इति सम्बन्धः ॥३३॥

यद्यप्यतःपरो वरणीयो वरो नाऽस्ति, तथाऽपि पूर्णकामाभिवर्षुकात् त्वत्त एतं वरं वृणे। एनादेशाभावः आर्षः। कोऽसौ? भगवत्यच्युते तत्परेषु तद्भक्तेषु - तथा त्वयि च भक्तिमित्येतं वरमिति सम्बन्धः। तत्परेष्वित्यनेन गतार्थत्वेऽपि पुन स्त्वयीत्युक्तिः तत्प्राधान्यविवक्षया। गोबलीवर्दन्यायात्तत्र भगवद्भक्तेषु भक्तिर्नाम भगवद्विभूतित्वानुसन्धानात्मिका ॥३४॥

**इतीति**। सूक्त्या मधुरया शर्वया शर्वाण्या अभिनन्दितस्तं मुनि माह ॥३५॥

उक्ति मेवाऽऽह द्वाभ्यां **काममिति**। विभौ भगवति कामं नितरां श्रोतृणां पुण्यावहं यशः ॥३६॥

त्रैकालिकं भूतादिकालत्रयगोचरवस्तुज्ञानं, ब्रह्मविज्ञानं ब्रह्मस्वरूपरूपादिगोचरं विज्ञानं, विरक्तिमत् विरक्तियुक्तम् ॥३७॥

**विज०** यत एवं निरूप्यमाणे हरेरधिकस्समो वा नाऽस्ति सर्वश्रेष्ठश्च अत स्तद्भक्तिमन्तरेण त्वत्परमन्यं कं वरं वृणे वरं वरेण्यं दर्शनं ज्ञानं यस्य स तथा तस्मादेतदेवाऽऽह यद्दर्शनात् येनोपदिष्टज्ञानाद्वा पुमान् पूर्णकामः स्यात् अत एव सत्यकामश्च ॥३३॥

---

1. MMa °ता, 2. A °ता च ते।, 3 A.B.J omit त्वत्, 4 H V omit अवलोकनात्, 5 H V शर्वाण्या, 6 H V omit यत्, 7 H V यस्त्वं, 8. A.B. omit त्वत्

मद्दर्शनात्पूर्णकामत्वे वरं वृणीष्वेति मद्वचनं व्यर्थमभूदिति मा शङ्कीत्याह - **वरमिति**। यद्यपि वरो न प्रार्थनीयः तथाऽपि त्वद्वचनसाफल्यायैतं वरं वृणे, पूर्णकामाभिवर्षणादिति शेषः। कोऽसौ वर इति तत्राऽऽह -भगवतीति। तत्परेषु तद्भक्तश्रेष्ठे त्वयि च ॥३४॥

शर्वया पार्वत्या सह ॥३५॥

त्वम् अधोक्षजे भक्तिमान् भूया इति शेषः। आकल्पान्तं पुण्यम् यशोऽजरामरता[1] च भूयात्तवेति शेषः ॥३६॥

किञ्च। वरान्तरञ्च स्या दित्याह - **ज्ञानमिति** ॥३७॥

**सूत उवाच**

**एवं वरान् स मुनये दत्त्वाऽगात्त्र्यक्ष ईश्वरः।**
**देव्यैतत्कर्म कथयन्ननुभूतं पुराऽमुना ॥३८॥**

**सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः।**
**विचरत्यधुनाऽप्यद्धा हरावेकान्ततां गतः ॥३९॥**

**अनुवर्णितमेतत्ते मार्कण्डेयस्य धीमतः।**
**अनुभूतं भगवतो मायावैभवमद्भुतम् ॥४०॥**

**एतत्केचि दविद्वांसो माया[2]संसृति[3] मात्मनः।**
**अनाद्या[4]वर्तितं नृणां कादाचित्कं प्रचक्षते ॥४१॥**

**य एवमेत द्भृगुवर्य[5]वर्णितं रथाङ्गपाणेरनुभावभावितम्।**
**संश्रावयेत्संशृणुया[6]दुतोभयोस्तयोर्न कर्माशयसंसृतिर्भवेत् ॥४२॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे दशमोऽध्यायः ॥१०॥

**श्रीध० एवमिति**। तस्य कर्म तप आदि। अमुना पुराऽनुभूतं यद्भगवन्मायावैभवं तच्च कथयन् ॥३८॥

**स इति**। अवाप्तो महायोगमहिमा येन सः ॥३९॥

**अनुवर्णितमिति**। एतन्मार्कण्डेयस्य चरितं तेनाऽनुभूतश्च भगवन्मायावैभवं ते[7]ऽनुवर्णितम् ॥४०॥

---

1. M.Ma 'रजता'; 2 M.Ma प्रसृति. 3 H V रात्मनः. 4 M.Ma वर्तिनं. 5 H V वर्तितं. 6 A.B G J W दु तावुभौ तयोर्न ; 7 H V omit ते

नन्वेवमपि अस्मत्कुलोत्पन्नस्याऽस्य[1] सप्तकल्पायुष्ट्वं वृद्धैरुच्यमानं विरुद्धमेव तत्राऽऽह - **एतदिति** ।एतन्मार्कण्डे - येनाऽनुभूतं भगवन्मायावैभवं नानाकल्परूपं कादाचित्कमीश्वरेच्छया तस्यैवाऽऽकस्मिकं न तु सर्वसाधारणम्। एतत्केचि दनादि बहुकालमावर्तितं दैवयुगसहस्रद्वयमानेन पुनः पुनः परिवर्तितं प्रचक्षते। के ते? नृणां संसृति[2] सर्गप्रलयादि लक्षणां[3] आत्मनो भगवतो मायेत्येव मविद्वांसः। विद्वांसस्तु मायाशिशोः श्वासोच्छ्वासाभ्यां सप्तकृत्वस्तदुदरप्रवेशनिर्गमनतः सप्तकल्पत्व[4] लक्षणमात्रमेवेति[5] वदन्ति, अतो न विरोध इत्यर्थः ॥४१॥

य इति। भृगुवर्यस्य[6] वर्तितं वृत्तं इत्यर्थः। यः[6] संशृणुयात्[7] । उ इति[7] हर्षे [8]श्रावयेद्वा। यौ तावुभौ तयोः[8] कर्म वासनाकृता संसृति र्न[9] भवेदिति ॥४२॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां दशमोऽध्यायः ॥१०॥

**वीर० एवमिति**। सः त्र्यक्षस्त्रिलोचन ईश्वरः रुद्रः मुनये [10]मार्कण्डेयाय[10] वरान्दत्वाऽमुना मुनिना यत्पुरा अनुभूतं तत्कर्म भगवन्मायाप्रदर्शनात्मकं कर्म देव्यै शर्वाण्यै कथयन् अगात् जगाम ॥३८॥

**सोऽपीति**। भार्गवोत्तमो मार्कण्डेयः अवाप्तः महायोगवैभवो येन सः हरौ भगवति एकान्तितामनन्यप्रयोजनभक्तिम् गतः अधुनाऽपि चरति। अद्धा स्फुटं, नाऽत्र संशयः इति भावः ॥३९॥

उपसंहरति. **अनुवर्णितमिति**। यन्मार्कण्डेयस्य तेनाऽनुभूतमद्भुतं भगवतो मायाया आश्चर्यशक्तेः वैभवं, तत्ते तुभ्य मनुवर्णितम् ॥४०॥

प्रसङ्गान्मार्कण्डेयस्य कादाचित्क मायावैभवदर्शनवज्जीवस्याऽपि संसारः पूर्वमविद्यमान एव कदाचित् श्रीभगवन्मायया भवतीति केषाञ्चिन्मतं प्रतिक्षिपति - **एतदिति**। केचिदविद्वांसः संसारानादित्वानभिज्ञाः नृणां जीवाना मात्मनो भगवतो मायया संसृतिं कादाचित्कं यथा तथा प्रचक्षते इत्यनुवादः, तद्दर्शयति एतदनाद्यावर्तितमिति। संसरणमित्यध्याहार्यम्। एतत्संसरण मनादितया आवर्तितं परिवर्तितं भवति; अन्यथा "न कर्माऽविभागात्" (ब्र.सू.2-1-35) इत्याद्यधिकरणविरोधात् इति ॥४१॥

---

1 H.V omit अस्य . 2 HV संसृतिः . 3 HV लक्षणा 4 ABJ मत 5 ABJ ल्पत्व तल्लक्षणमात्रेणेति. 6- -6 ABJ omit. 7- -7 HV उत. 8- -8 H.V वः तयोः उभयोः . 9 HV भवति। . 10- -10 W omits

प्रकृतमार्कण्डेयचरित्र [1]श्रवणश्रवणादिफलमाह[1] - य इति। भृगुवर्यस्य मार्कण्डेयस्य वर्णितं वृत्तमित्यर्थः। कथम्भूतम्? रथाङ्गपाणेर्भगवतः अनुभावेन भावितं [2]प्रकाशितं यः संश्रावयेत्, यः शृणुयात् तयोरुभयोः कर्माश्रया कर्मनिमित्ता संसृतिर्न भवेत्॥४२॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां दशमोऽध्यायः ॥ १० ॥

**विज०** अमुना मार्कण्डेयेन ॥३८॥

अवाप्तमहायोगमहिमा प्राप्तमहाज्ञानमहिमा प्राप्तमहाणिमादियोगमहिमा वा एकान्ततां नियतभक्तताम् ॥३९॥

ज्ञानवतो मार्कण्डेयस्य यदेतदनुभूतं हरे र्मायावैभवं तेऽनुवर्णित मेतन्नृणां मध्ये केचिदविद्वांसः आत्मनो हरेर्मायाप्रसृति सामर्थ्यविस्तारं कादाचित्कं प्रचक्षते। अकाले प्रदर्शितत्वेन कादाचित्कं किं न स्या दत्राऽऽह - अनादीति, अनादिकालवर्तिनं न नूतनम्। यद्वोपसंहरति **अनुवर्णित** मिति। मार्कण्डेयस्यैतच्चरितं तेऽनुवर्णितम्। किन्तच्चरित मत्राऽऽह - अनुभूतमिति। श्रद्धेयत्वे मतभेदमाह - एतदिति ॥४०,४१॥

इतोऽप्येतच्छ्रद्धेयमिति फलमाह - य इति। अनुभावेन भावितं संवर्धितम्। तयो रुभयोः श्रावयितृश्रोत्रोः कर्माशयसंसृतिः कर्मणामाशयः स्थानं देहस्तन्निमित्तसंसारो न भवेदिति स्वरूपनाश एवोच्यते अस्य श्रीहरिभक्तिर्मुख्यहेतुरतोऽच्युतां भक्ति मित्याह ॥४२॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
द्वादशस्कन्धे दशमोऽध्यायः ॥१०॥

**(श्रीविजयध्वजतीर्थरीत्या दशमोऽध्यायः न समाप्तः)**

1--1 W श्रावणफलं. 2 W omits प्रकाशितं

# एकादशोऽध्यायः

## (विजयध्वजरीत्या दशमोऽध्यायः प्रारभ्यते)

### शौनक उवाच

अथेममर्थं पृच्छामो भवन्तं [1]बहुवित्तमम्।
समस्ततन्त्रराद्धान्ते भवान् भागवततत्त्ववित् ॥१॥

तान्त्रिकाः परिचर्यायां [2]केवलस्य श्रियःपतेः।
अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति [3]यथैव यैः ॥२॥

[4]तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम्।
येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम् ॥३॥

### सूत उवाच

नमस्[5]कृत्य गुरून्वक्ष्ये विभूतीर्वैष्णवीरपि।
या [6]वेदागमतन्त्राभ्यामाचार्यैः पद्मजादिभिः ॥४॥

मायाद्यै[7]र्नवभिस्तत्त्वैः स विकारमयो विराट्।
निर्मितो दृश्यते [8]यत्र सचित्के भुवनत्रयम् ॥५॥

एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः।
नाभिस्सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः[9]प्रभो ॥६॥

प्रजापतिः [10]प्रजननमपानं [11]मृत्युरीशितुः।
तद्बाहवो लोकपाला मनश्चन्द्रो [12]भ्रुवौ यमः ॥७॥

लज्जोत्तरोऽधरो लोभो [13]दन्ता ज्योत्स्ना स्मयो भ्रमः।
रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्धजाः ॥८॥

### श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

एकादशे तु पूजार्थं महापुरुषवर्णनम्। रवेर्व्यूहस्यचाऽऽख्यानं प्रतिमासं पृथक्पृथक्॥

---

1 H V ब्रह्म, 2 M Ma केशवस्य 3 B G J यथा च 4 M Ma ना 5 M Ma त्वा 6-6 A B G J प्रोक्ता यद 7 M Ma ` 8 H V तस्मिन् , M Ma यस्मिन् 9 B H J M Ma V प्रभो 10 A B G J M Ma नो 11 W शि 12 M Ma वो 13-13 M Ma पुतिर्ज्यो

येनाऽमर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवोनमः । तं पृच्छति क्रियायोगं साङ्गोपाङ्गादिकल्पितम् ॥

**अथेति** । अथेति हेतौ । हे भागवत! यतो भवान् समस्ततन्त्रराद्धान्ते तत्त्ववित् रहस्यज्ञः ॥१॥

**प्रष्टव्यमाह - तान्त्रिका** इति । पारिचर्यायामुपासनायां विषये । केवलस्य चैतन्यघनस्य । अङ्गानि पादादीन्युपाङ्गानि गरुडादीनि, आयुधानि सुदर्शनादीनि, आकल्पाः कौस्तुभादयः तेषां द्वन्द्वैक्यम्. तद्यथा कल्पयन्ति यैश्च तत्त्वैः कल्पयन्ति, तन्नो वर्णयेति ॥२,३॥

गुरूपदेशगम्यत्वादस्यार्थस्य तन्नमस्कारपूर्वकमाह - **नमस्कृत्येति** । विभूतीर्विराड्विग्रहाद्याः ॥४॥

अङ्गादिकल्पनां भृगादिभिर्दर्शयितुं प्रथमं तावद्यथा कल्पयन्तीति प्रश्नस्य वैराजरूपेणेत्युत्तरं वक्तुं विराड्विग्रहमाह - **मायेति** । मायाद्यैः प्रकृतिसूत्रमहदहङ्कारपञ्चतन्मात्रै र्नवभिस्तत्त्वैः । विकारा एकादशेन्द्रियाणि, पञ्चमहाभूतानीति षोडश तन्मयो विराट् स प्रसिद्धो निर्मितः, यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते । अनेन अङ्गादिकल्पना सौलभ्यं दर्शितम् ॥५॥

**एतदिति** । एतद्वै पौरुषं रूपम्[4] । पुरुषस्य वैराजस्य रूपमेवेश्वरेणाऽधिष्ठितत्वात् तदभेदविवक्षया तस्यापि[5] रूपमुच्यते । अङ्गकल्पनामाह-भूः पादावित्यादिभिस्त्रिभिः[6] । भृगाद्यनुवादेन भगवत्पादादिभावना विधीयते ॥६॥

**प्रजेति** । प्रजननं मेढ्रम् । अपानः पायुः ॥७-८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

इत्थं परिपृष्टं मार्कण्डेयवृत्तान्तं अनुवर्ण्य कृत्स्नप्रबन्धार्थमुपसञ्जिहीर्षुं सूतमालक्ष्य निमिजायन्तेय श्रीभगवदुद्धव संवादादि मुखेनोक्ते श्रीभगवत्पूजात्मककर्मयोगे समाराध्य श्रीभगवदङ्गोपाङ्गास्त्रभूषणाद्यभिमन्तव्यानि तत्त्वानि बुभुत्सुः पृच्छति - अथेत्यादिना । इमं वक्ष्यमाणमर्थं वस्तु बहुवित्तमत्वमेव प्रपञ्चयति - समस्ततन्त्रेत्यादि । हे भागवत ! भवान् समस्ततन्त्राणां पुराणपञ्चरात्रादीनां यो रोद्धान्त स्तस्मिंस्तत्त्ववित् ॥१॥

कोऽसावर्थ इत्यतस्तमाह - **तान्त्रिका** इति । केवलस्य केवलशुद्धसत्त्वमयदिव्यमङ्गलविग्रहस्य श्रियःपतेः परिचर्यायां तान्त्रिकाः श्रीभगवदाराधनात्मतन्त्रपारिनिष्ठाः यथैव यै स्तत्त्वैः अङ्गोपाङ्गायुधाकल्पम् अङ्गानि पाणिपादादीनि, उपाङ्गानि हृदयादीनि, आयुधानि सुदर्शनादीनि, आकल्पा भूषणानि तेषां द्वन्द्वैक्यम् । तत्कल्पयन्ति यत्तत्त्वाभिमानिदेवतात्वेन ध्यायन्तीति यत् तदेत न्नोऽस्माकं[7] वर्णयेत्युत्तरेण सम्बन्धः ॥२॥

---

1-1 ABJ omit. 2 H V omit तन्त्र . 3 H V omit रहस्यज्ञ 4 A B J omit रूपम् । 5 A B J omit अपि 6 A B J °दित्रिभि । 7 TW वर्णय

कथम्भूतानां क्रियायोगं श्रीभगवदाराधनात्मकक्रियायोगापेक्षितं बोद्धुमिच्छताम् किं तत इत्यत्राऽऽह - येनेति। येन क्रियानैपुणेन तत्त्वात्मकाङ्गादि कल्पनोपेतरूपेण क्रिया कौशलेन अमर्त्यतां जरामरणाद्यतीततां मुक्तिं यायात्प्राप्नुयात् ॥३॥

तद्वर्णयितुं प्रतिजानीते - **नमस्कृत्येति**। वैष्णवीः विषण्वङ्गादिभिरभिमन्तव्याः विभूतीस्तद्विभूतीरहं वक्ष्ये ता विशिनष्टि पद्मजादिभिः ब्रह्मनारदादिभिराचार्यैः वेदरूप आगमः तन्त्रं पञ्चरात्रं ताभ्यां। पञ्चम्यन्तमिदम्। या विभूतयो, विज्ञाता इति शेषः ॥४॥

तावद्ब्रह्माण्डं श्रीभगवद्विग्रहाभिमन्तव्य मित्याह - **मायाद्यै** रिति। मायासंज्ञा प्रकृतिः महान् अहङ्कारः भूतानि पञ्च, कालश्चेति नवभिस्सविकारैः एतद्विकारसहितैः तत्त्वैः, विकारशब्देन एकादशेन्द्रियाणि पञ्चतन्मात्राणि च विवक्षितानि निर्मितो यो विराट् ब्रह्माण्डं दृश्यते शास्त्रेण ज्ञायते यत्र यस्मिन् विराजि सचित्के सजीवे भुवनत्रयं दृश्यते ॥५॥

एतद्ब्रह्माण्डं पौरुषं परमपुरुषसम्बन्धिरूपम्। सर्वत्र सामानाधिकरण्यं अभिमान्यभिमन्तव्ययोरभेदविवक्षानिबन्धनम्, श्रीभगवद्दिव्यमङ्गलविग्रहाभिमन्तव्यं ब्रह्माण्डमित्यर्थः। एवमग्रेऽपि। एतदेव विभज्य दर्शयति - भूरित्यादिना। भूशब्देन अतलादिभिस्सह सप्तलोका विवक्षिताः। नभो नाभिः हे शौनक! ॥६॥

प्रजापतिः प्रजननं मेढ्रम् ईक्षितु परमपुरुषस्य मृत्युरपानं गुदं यमो भ्रुवौ भ्रूलते ॥७॥

उत्तर उत्तरोष्ठ लोभस्त्वधरोष्ठः ज्योत्स्ना, दन्ता भ्रमः, भ्रम्न परमात्मन स्मय स्मितं, भूरुहा वृक्षा रोमाणि, मेघा पुरुषस्य परमपुरुषस्य मूर्धजाः केशाः ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

स्थूलमतीना मुपासनार्थं पुरुषरूपस्य हरे र्यजनप्रकारं वदत्यस्मिन्नध्याये। तत्र तद्बुभुत्सया शौनकः पृच्छति - अथेति बुद्धिसन्निहितत्वादिममित्युक्तम्। समस्ततन्त्रराद्धान्ते सर्वपञ्चरात्रतन्त्रलक्षणशास्त्रोक्तसिद्धान्ते उक्तं यद्भागवतं भगवद्विषयं तन्त्रं तद्वेत्तीति ॥१॥

तान्त्रिकाः श्रीनारायणपूजाविधायकशास्त्रपटवः शीय पते. पत्युः प्रयोगस्त्वैः प्राबल्याद्धिसंज्ञा वैकल्पिकी इति बोद्धव्यः। परिचर्यायां पूजायां यै र्भूम्यादिपदार्थैः अङ्गोपाङ्गायुधाकल्पम् - अङ्गानि पादादीनि, उपाङ्गानि गरुडादीनि, कल्पयन्त्याकल्प माभा कौस्तुभादि ॥२॥

---

1 A,B omit अभिमानि. 2 TW 'न त'. 3-3 TW omit. 4 AB 'शि

तान् पदार्थान् क्रियायोगं पूजालक्षणं बुभुत्सतां ज्ञातुकामानां क्रियानैपुण्येन क्रियापटुत्वेन अमर्त्यतां मरणराहित्यं मुक्त्याख्यम् ॥३॥

वेदागमतन्त्राभ्यां वेदाख्यागमेन तन्त्रशास्त्रेण च पद्मजादिभि राचार्यैः प्रतिपादिता याः ता विभूतीः ॥४॥

माया प्रकृतिः, आदिशब्देन महदहङ्कारमनांसि पञ्चभूतानि च गृह्यन्ते। विकारा इन्द्रियादयः विराट् ब्रह्माण्डं सचित्के चेतनसहिते यस्मिन् ब्रह्माण्डे भुवनत्रयं दृश्यते ॥५॥

एतद्ब्रह्माण्डं पौरुषं रूपं पुरुषसन्निधानयोग्य प्रतिमारूपं यैः अङ्गादिकं कल्पयन्ति तानाह - **भूरिति**। अत्र विवरणं पूर्वव दूह्यम् ॥६॥

प्रजापतिर्दक्षः प्रजननमुपस्थम् ॥७॥

उत्तरोष्ठो लोभः लज्जा अधरोष्ठो, द्युतिः स्वरूपकान्तिः ज्योत्स्ना, भ्रमो भ्रान्तिः, स्मयो दर्पविशेषः, एतावती अङ्गकल्पना ॥८॥

**यावानयं वै[1] पुरुषो यावत्या संस्थया मितः।**
**तावानसावपि महान्पुरुषो[2] लोकसंस्थया ॥९॥**

**कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः।**
**तत्प्रभा[3] व्यापिनीं[4] साक्षात् श्रीवत्समुरसा विभुः[5] ॥१०॥**

**स्वमायां[6] वनमालाख्यां नानागुणमयीं दधत्।**
**वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम् ॥११॥**

**बिभर्ति सांख्यं योगञ्च[7] देवो मकरकुण्डले।**
**मौलिं पदं पारमेष्ठ्यं[8] सर्वलोकनमस्कृतम् ॥१२॥**

**अव्याकृतमनन्ताख्यमासनं यदधिष्ठितम्[9]।**
**धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ॥१३॥**

**ओजस्सहो बलयुतं मुख्यतत्त्वं गदां दधत्।**
**अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥१४॥**

1 M Ma स. 2 ABGJ महापु॰. 3 H V ॰भा 4 H V ॰नीं॰ 5 W प्रभु 6 H V स्वा। 7 W वेद॰. 8 B G J W काष्ठवहरम्. 9 A BG H J V ॰त

नभोनिभं[3] नभस्तत्त्व मसिं चर्म तमोमयम्।
कालरूपं धनुश्शार्ङ्गं[2] तथा कर्ममयेषुधिम् ॥१५॥
इन्द्रियाणि शरानाहुराकूतीस्तस्य[3] स्यन्दनम्।
तन्मात्राण्यस्याऽभिव्यक्तिः[4] इन्द्रियार्थाः[5] क्रिया मताः[5] ॥१६॥

**श्रीध०** अनुक्तमन्यदप्येवमूह्यमित्याह - **यावानिति**। यावानयं व्यष्टि पुरुष[6] तावान् समष्टिपुरुषः[6], स्वमानतः सप्तवितस्तिः [7]संज्ञया संस्थयाऽवयवसन्निवेशेन मितः परिमितः ॥९॥

**भूषणादीन्याह - कौस्तुभेत्यादिना**। स्वात्मज्योतिः शुद्ध जीवचैतन्यम्। या तस्य कौस्तुभस्य प्रभा तामेव श्रीवत्सं बिभर्ति ॥१०॥

**स्वेति**। त्रिवृत्स्वरम् त्रिमात्रं प्रणवम् ॥११॥

**बिभर्तीति**। पारमेष्ठ्यं पदं ब्रह्मलोकम् ॥१२॥

**अव्याकृतमिति**। अव्याकृतं प्रधानम्। यदधिष्ठितोऽधिष्ठाय स्थित । तदा सम्भूतं पद्मं, सत्त्वं सत्त्वगुण ॥१३॥

**ओज इति**। मुख्यतत्त्वं प्राणतत्त्वं। "प्राणो वै मुख्यः" इति श्रुते । दरवरं शङ्खम् ॥१४,१५॥

**इन्द्रियाणीति**। आकूतीः[8] क्रियाशक्तियुक्तं मनः। अस्य रथस्याऽभिव्यक्तिः बहिरभिव्यक्तं रूपम्। मुद्रया धृतयाऽर्थ क्रियात्मतां वरदाभयदादिरूपत्वं बिभर्ति[9]। तत्तन्मुद्रया तथा तथा भावयेदित्यर्थ ॥१६॥

**वीर०** अनुक्तमन्यदपि एव मूह्यमित्याह - **यावानिति**। अय व्यष्टिपुरुष यावान् यावदवयववान् यावत्या स्वमानत सप्तवितस्तिपरिमाणया संस्थया अवयवसंस्थानेन मितः [10]परिमितोऽसौ महान्पुरुष परमपुरुषोऽपि लोकसंस्थया लोकाभिमानि देवतात्मकपादाद्यवयवसंस्थाने (तावान्) तावदवयववान्, मानन्तु आराधकबुद्ध्यनुगुणमिति भाव ॥९॥

तदेव म[11]ङ्गोपाङ्गाद्यभिमन्तव्यानि तत्त्वानीत्युक्त्वाऽथ भूषणाद्य[11]भिमानिदेवतात्मकमन्तव्यान्याह - कौस्तुभव्यपदेशेनेत्यादिना। अजः परमपुरुषः कौस्तुभव्याजेन स्वात्मज्योति बिभर्ति स्वात्मज्योतिः स्वशेषभूत ज्ञानाकार चिदात्मस्वरूपं कौस्तुभो जीववर्गाभिमानी देवतेत्यर्थः। तत्प्रभा जीवस्य प्रभा धर्मभूतज्ञानमित्यर्थः। व्यापिनी विभ्वी तां प्रभुर्भगवानुरसा श्रीवत्सं बिभर्ति श्रीवत्सः तत्प्रभाभिमानिदेवतेत्यर्थः। पुराणान्तरविरोधस्तु श्रुतिवैविध्यसम्भावनया तन्मूलतया परिहर्तव्य ॥१०॥

---

1 W °भो; 2 MMa °षी . W °षि ; 3 A.B.J °कूतीस्तस्य HV °कूतिर्यस्य MMa °कूतिरस्य , 4 A B G J °नि., 5-5 A B G H J V मुद्रयार्थक्रियात्मताम्; 6-6 A.B.J omit. 7 A B J omit संस्थया ; 8 ABJ °क्त , 9 H V omit बिभर्ति , 10 TW omits परिमित , 11--11 TW °द्यभिमन्त°

नानागुणमयीं पञ्चभूताख्यकार्यावस्थां भूतपञ्चकमयीं स्वमायां वैषम्यावस्थसत्त्वादिगुणत्रयमयीं वा प्रकृतिं वनमालाख्यां द ग्त् बिभ्राणः आख्याशब्दः पूर्ववत् अभेदविवक्षाभिप्रायकः। पीतं पिशङ्गं, वासो वस्त्रं, छन्दोमयं गायत्र्यादिच्छन्दोमयं, वासः छन्‍ ाभिमानिनी देवतेत्यर्थः। त्रिवृत् त्रिमात्रं अकारोकारमकाग्न्मकं वा स्वरं प्रणवं ब्रह्मसूत्रं बिभर्ति ॥११॥

साङ्ख्यञ्च योगश्चेति द्वन्द्वैक्यम्। तत् वेदश्चेत्युभे मकरकुण्डले सर्वलोकोत्तरं पारमेष्ठ्यं पदं ब्रह्मलोकं मौलिं किरीटं बिभर्ति ॥१२॥

यद्येन परमपुरुषेण अधिष्ठितमनन्ताख्यं शेषाख्यमासनमव्याकृतं मूलप्रकृतिःयत्सत्त्वं विशुद्धं सत्त्वं तद्धर्मज्ञानादिभि र्युक्तं पद्ममुच्यते। आदिशब्देन वैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यं विमलोत्कर्षिणीज्ञानाक्रियायोगा प्रह्वीसत्येशानानुग्रहाः सङ्गृह्यन्ते ॥१३॥

ओजः इन्द्रियशक्तिः, महो मनश्शक्तिः, बलं दैहिकं, तैर्युतं मुख्यं तत्त्वं मुख्यप्राणः "प्राणो वै मुख्यः" इति श्रुतेः। ओज आदीनां प्राणायत्तत्वात्तस्य तद्युक्तत्वम्। तदेव गदां दधत्। यद्वा मुख्यतत्त्वं प्रथमोत्पन्नतत्त्वं महत्तत्त्वं बुद्धिरिति यावत्। 'महान्वै बुद्धिलक्षणः" इत्यादिस्मृतेः। तस्यां प्रसृतायामेवौजःप्रभृतीनि भवन्तीति तस्यास्तद्युक्तत्वम्। अपां तत्त्वं जलतत्त्वं दरवरः शङ्खः ॥१४॥

नभोनिभो नभोवन्नीलतनुर्भगवान् नभस्तत्त्वं असिं खङ्गं तमोमयं [2] चर्मखेटञ्च दधदित्यनुषक्तेनाऽन्वयः। शार्ङ्गनाम धनु कालरूपं कालाभिमानिधनु रित्यर्थः। तथा कर्ममयः इषुधिर्बाणकोशो यस्य सः ॥१५॥

इन्द्रियाणीति। [illegible] आकृतिर्मनः अस्य परमपुरुषस्य स्यन्दनं रथः। यद्वा आकृति देहात्माभिमानो भगवद्रथ [3] इत्यर्थः। अस्याऽभिव्यक्तिः अर्चावतारेष्वाहितांशः तन्मात्राणि इन्द्रियार्थाः इन्द्रियप्रयोजनानि इन्द्रियादिव्यापारा इति यावत्। तन्मात्राण्यस्याऽभिव्यक्तिरिति शब्दादीना मुक्तत्वात् ते अस्य क्रियाः तत्क्रियाभिमन्तव्या इत्यर्थः। मुद्रात्वर्थक्रियात्मतेति पाठे मुद्रावरदाभयादिमुद्राभिमानिनी [4] देवता अर्थक्रियात्मता प्रयोजनतत्क्रियास्वरूपता तु अभिमन्तव्या 'मुद्रयार्था क्रियात्मताम्' इति पाठे तया तां बिभर्ति इति शेषः ॥१६॥

विज० सोऽयं पुरुषः ब्रह्माण्डाख्यः लोकसंस्थया यावत्या संस्थया मितः परिमितोऽसौ महान्पुरुषः तदन्तःस्थपुरुषो भगवानपि तावान् तावत्परिमाणोपेतः ॥९॥

उपाङ्गान्याह - कौस्तुभेति। अजो विष्णुः स्वात्मज्योतिः ज्योतिस्वरूपः। यद्वा, स्वाधीनब्रह्माख्यज्योतिः, श्री रित्यध्याहार्यं साक्षाच्छ्रीस्तस्य श्रीवत्सस्य प्रभां व्याप्नोतीति तत्प्रभाव्यपिनीति, तादृशं श्रीवत्समुरसा बिभर्ति ॥१०॥

---

1 TW प्रह्वा'; 2 TW omit चर्म; 3 TW omit आदि; 4 TW 'निदे'

स्वां मायां श्रियं नानावर्णगुणमयीं, छन्दोमयं वेदस्वरूपं, त्रिवृत् त्रिवर्णात्मकं, स्वरं प्रणवलक्षणं ब्रह्मसूत्रं दधत् ॥११॥

साङ्ख्यं ज्ञानं योगं कर्म एतद्द्वयाख्ये मकरकुण्डले पारमेष्ठ्यं पदं स्थानं, मौलिं किरीटम् ॥

यदधिष्ठितमासनं पीठं तदनन्ताख्यं अव्याकृतं विकाररहितं सत्त्वं सत्त्वगुणाभिमानिनी श्रीः पद्मम् ॥१३॥

मुख्यतत्त्वं मुख्यप्राणरूपं गदां दधत् ॥१४॥

नभोनिभमाकाशवत् नीलवर्णं नभस्तत्त्वरूपमसिं नन्दकं तमोमयं तमोगुणवदाच्छादनकरं चर्म दधत्, पुण्यकर्मस्वरूपे इषुधी च ॥१५॥

अस्य हरेः स्यन्दन माकृतिः पृथिवी अस्याभिव्यक्तिः, तन्मात्राणि शब्दादीनि इन्द्रियार्थाः कर्मेन्द्रियविषयाः क्रियामताः विसर्गादीनि कर्माणि ज्ञातव्यानि ॥१६॥

मण्डलं देवयजनं दीक्षा संस्कार आत्मनः।
परिचर्या भगवत आत्मनो दुरितक्षयः ॥१७॥

भगवान्[1] भगशब्दार्थं लीलाकमलमुद्वहन्।
धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥१८॥

आतपत्रं तु[2] वैकुण्ठं[3] द्विजाधामाऽकुतोभयम्।
त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥१९॥

अनपायिनी[4] भगवती श्रीः साक्षादात्मनो हरेः।
विष्वक्सेनस्तन्त्रमूर्तिः विदितः पार्षदाधिपः ॥
नन्दादयोऽष्टौ द्वाःस्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥२०॥

वासुदेव स्सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम्।
अनिरुद्ध इति ब्रह्मन्[7] मूर्तिव्यूहो[8]ऽभिधीयते ॥२१॥

स विश्वस्तैजसः[9] प्राज्ञः तुरीय इति वृत्तिभिः।
अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाष्यते[10] ॥२२॥

अङ्गोपाङ्गायुधाकल्पैर्भगवां स्तच्चतुष्टयम्।
बिभर्ति स्म चतुर्मूर्तिर्भगवान् हरिरीश्वरः ॥२३॥

---

1 M Ma °वान् भगशब्दात्मा, W °वच्छब्दशब्दार्थां 2 M Ma तद्वै° 3 M Ma निन निव्रधा° 4 H V °नी मा शक्ति W °न्यात्मभूता 5 W °न प्रभा।
6 W °स्तस्य भूति°, 7 A G J ब्रह्मम्°, 8 A B G J W व्यूहो° 9 M Ma तैजसप्राज्ञ° 10 A B G J °परिभाष्यत MMa भाष्यते मत

**द्विज ऋषभ[1] स एव ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णो माय[2]या च स्वयैतत्।**
**सृजति हरति पातीत्याख्ययाऽनावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलभ्यः ॥२४॥**

**श्रीध० मण्डलमिति।** मण्डलं, देवयजनं[4] दे[4]..पूजाभूमिं, सूर्यमण्डलत्वेन भावयेदित्यर्थः। अन्तर्बहिर्मण्डलं वा। दीक्षासंस्कार आत्मनो गुरुकृतां मन्त्रदीक्षामेव आत्मनस्तु[5] तत्पूजायोग्यतां भावयेदित्यर्थः। परिचर्येति भगवतस्तां परिचर्यां स्वस्य सकलपापक्षयायेत्येवं रूपां[6]भावयेदित्यर्थः ॥१७॥

पूर्वं मासनपद्ममुक्तम्, इदानीं करस्थं पद्ममाह - **भगवानिति।** भगशब्दार्थमैश्वर्यादि षाड्गुण्यम् ॥१८॥

**आतपत्रमिति।** हे द्विजा! एकवचनान्तो वा पाठः। अकुतोभयं कैवल्यं, धाम गृहमभजत्। यद्वा वैकुण्ठस्यैव[8] विशेषणमकुतोभयं यद्धामेति। त्रिवृत् ऋग्यजुस्सामरूपो वेदः। "सुपर्णोऽसि गुरुत्मांस्त्रिवृत्ते शिरः" (गरुड उ.-14) इत्यादिमन्त्रलिङ्गात्। यज्ञं यज्ञरूपं पुरुषम्। "यज्ञो वै विष्णुः" (तैत्ति. ब्रा.1-2-8) इति श्रुतेः ॥१९॥

**अनपायिनीति।** अनपायिनी हरेः शक्तिः। तत्र हेतुः साक्षादात्मनः स्वरूपस्य चिद्रूपत्वा तस्या स्तदभेदादित्यर्थः। तन्त्रमूर्तिः पञ्चरात्राद्यागमरूपः येऽणिमादयोऽष्टौ गुणास्ते हरेर्द्वारपाला नन्दादयः ॥२०॥

तस्यैव चतुर्व्यूहोपासनामाह **वासुदेव इति।** वासुदेवादिशब्दैः पुरुषः श्रीनारायण एव स्वयं मूर्तिभि[9]दैःउपास्यः इत्यभिधीयते ॥२१॥

तस्यैवाऽध्यात्मनि[10] ...पासना माह **स इति।** स एव भगवान्विश्वादिशब्दैर्वृत्तिभि र्जाग्रदाद्यवस्थाभिः परिभाष्यते[11]। तद्वृत्त्युपाधीनाह अर्था बाह्याः, इन्द्रियं मनः आशयस्तदुभयं संस्कारयुक्त मज्ञानं ज्ञानं त्रितय साक्षितैः ॥२२॥

उक्त[12] चतुर्व्यूहाध्यात्मोपासना द्वये[12]ऽपि पूर्वोक्तमङ्गाद्युपासन माह **अङ्गेति।** अङ्गादिभि रुपलक्षितो भगवान्हरि र्वासुदेवादि चतुर्मूर्तिस्सन् विश्वादिचतुष्टयं बिभर्ति स्म विश्वादिभावेऽपि तन्नियन्तुस्तस्य न जीवत्वमित्याह - विश्वादिचतुष्टयं बिभ्रदपि भगवा नीश्वर एवेति ॥२३॥

तस्यैव ब्रह्मादित्रिमूर्तिता माह - **द्विजऋषभेति।** स एष एव भगवान् ब्रह्मयोनिर्वेदस्य कारणमित्यादि हेतुत्रयम्। वस्तुतो भेदाभावेऽपि च एतज्जगत् स्वगतमायया सृजति हरति पातीति कृत्वा आख्यया ब्रह्मादिरूपयाऽनावृताक्षः अनाच्छन्न ज्ञानोऽपि, विवृत इव भिन्न इव, निरुक्तः[13] शास्त्रेषु न तु भिन्नः, अत्र विद्वदनुभवं प्रमाणयति यतस्तत्परै रात्मत्वेनैव लभ्यत इति ॥२४॥

---

1 MMa वृषभ . 2 MMa 'याऽऽद्य . HV 'या य 3 MMa विसृजत 4 ABJ omit. 5 ABJ omit तु . 6 ABJ omit रूपां. 7 HV अन्तस्स्व .
8 ABJ omit एव . 9 Hv व्यूहे . 10 HV 'त्म च'. 11 ABJ भाव्यते . 12--12 ABJ 'हृद्योपासनेऽपि . 13 HV 'क्त'

**वीर०** मण्डलं तस्याऽऽसनस्थं, पद्माकारं मण्डलं, देवयजनं यज्ञभूम्यभिमानिदेवताः आत्मनः यजमानस्य दीक्षा[1] यागदीक्षा संस्कारः प्रोक्षणावघातादिश्च, भगवतः परिचर्या तयोरभिमानिदेवता परिचर्येत्यर्थः, सैव दुरितक्षयाभिमानिनीति[2] ॥१७॥

**भगवच्छब्दर्थं** भगवच्छब्दस्य यः शब्दो भगवच्छब्दः तदवयवभूतः तस्यार्थं ज्ञानादिषाड्गुण्यं तल्लीलार्थं कमलं तदभिमन्तव्यं लीलाकमलमित्यर्थः। लीलाकमलाभिमन्तव्यं षाड्गुण्यं वा उद्वहन्! बिभ्राणः हे भगवः! हे भगवन्! धर्मो यश श्चेत्येते चामरव्यजने अभजत् प्राप्तवान्। भगवांश्चेति पाठान्तरम् ॥१८॥

**आतपत्रमिति** द्विजा इति सम्बोधनम्। द्विजेत्यपि क्वचित्पाठः, निजधामेत्यपि पाठः। नाऽस्ति कुतोऽपि भयं यस्मिन् तद्वैकुण्ठं नाम यन्निजधाम तदातपत्रमभजदिति सम्बन्धः। वैकुण्ठाभिमानिनी देवता आतपत्र मित्यर्थः। यो यज्ञं यज्ञाराध्यं परमपुरुषं वहति तद्वाहनभूत इत्यर्थः। कोऽसौ सुपर्णाख्यो गरुडः स त्रिवृद्वेदः ऋग्यजुस्सामत्रयात्मको वेदः वेदाभिमानिनी देवता गरुड इत्यर्थः ॥१९॥

**श्रीर्लक्ष्मीः** हरेरनपायिनी शक्तिः। तत्र हेतु साक्षात्परमात्मन आत्मभूता स्वभावः धर्मभूतेति यावत्। प्रभेत्यस्य भास्क[4]रस्य यथा इत्यादिः[4] स्मर्तव्यः[5]। यः पार्षदाधिपः सेनानी विष्वक्सेनः स तस्य मूर्तिर्विग्रहविशेष इत्यर्थः ॥२०॥

नन्दादयोऽष्टौ हरेर्द्वारपालाः, अणिमाद्या गुणाः अणिमाद्यष्टैश्वर्याभिमानिन्यो देवता इत्यर्थः। वासुदेव इति यो वासुदेव इत्यादिमूर्तिव्यूहः मूर्तिसमूहः स परमपुरुषः स्वयमेवाऽभिधीयते। न तत्राऽभिमान्यभिमन्तव्यभावोऽस्तीत्यर्थः। ब्रह्मन्निति सम्बोधनम्। स इति वासुदेवादि चतुर्मूर्तिव्यूहः वृत्तिभिः जागरस्वप्नसुषुप्तिमुक्त्यवस्थाभि र्यो विश्वस्तैजस प्राज्ञस्तुरीयः मुक्त इति कथ्यते। जीव स्तदभिमानी विश्वादिशब्दैः जागराद्यवस्थावस्थिता जीवा उच्यन्ते। यद्यप्येकैकस्यैव जीवस्य अवस्थाचतुष्टयान्वयः, तथाऽपि एकैकस्यैव तत्तदवस्थायां विश्वादिशब्दैर्व्यवहारः जागराद्यवस्थाप्रयुक्त विश्वादिसंज्ञकजीवाभिमानिन्यो वासुदेवादय इत्यर्थः, क्रमस्त्वविवक्षितः। तत्र मुक्त्यवस्थाभिमानिनी देवता वासुदेव, सङ्कर्षणस्तु स्वप्नावस्थस्य (प्रद्युम्नो जाग्रदवस्थाभिमानी सुषुप्त्यवस्थाभिमानी वाऽनिरुद्ध इति ज्ञेय मिति भावः) इतरौ इतरयोरित्यूह्यम् ॥२१॥

तदेवाह - अर्थेन्द्रिय इति।अर्थशब्दो बाह्येन्द्रियै रर्थावभासलक्षणजागरावस्थापरः इन्द्रियशब्देन मनोविषयेण स्वप्नहेतुना स्वप्नावस्था द्योत्यते। मनस्युपरते वासनामात्रविशेषा सुषुप्त्यवस्था आशयशब्देन ज्ञाप्यते। परिशुद्धानवच्छिन्नज्ञानं च मुक्त्यवस्थाज्ञानशब्देन प्रदर्श्यते, तत्तदवस्थाभिमानी भगवान् परिभाष्यते[6] इत्यर्थः ॥२२॥

---

1 W omits दीक्षा . 2 W omits इति 3 A B °मात्म° 4- -4 A B °त्यादि 5 W omits स्मर्तव्य । . 6 A B भाव्यते

तदेवं तत्त्वाभिमानितया निरूपितैरङ्गादिभिः वैशिष्ट्यमाह - अङ्गेति। अङ्गोपाङ्गायुधाकल्पै र्विशिष्टो भगवान् वासुदेवा दिचतुर्मूर्तिधरः तत्प्रसिद्धं चतुष्टयं सृष्टिस्थितिसंहारमोक्षात्मकं बिभर्ति निर्वहति। तत्र अनिरुद्धः सृजति, प्रद्युम्नः पालयति, सङ्कर्षणः संहरति, वासुदेवो मोक्षयतीत्यर्थः ॥२३॥

तस्यै तस्यैव ब्रह्मरुद्रान्तर्यामितया स्रष्टृत्वसंहर्तृत्वे स्वावताररूपेण रक्षितृत्वञ्चाऽऽह - द्विजऋषभेति। हे द्विजऋषभ! एष भगवान्, कोऽसौ? यः स्वमायया सृष्ट्यादिकं करोतीति हेतोः आख्यया ब्रह्मरुद्रादिसंज्ञयोपलक्षितः ब्रह्मरूपेण गुणैश्च निरतिशयबृहत्त्वयुक्तः योनिः सर्वकारणभूतः, स्वयंदृक् स्वयं सर्वं युगपत्साक्षात्पश्यतीति तथा, स्वयं प्रकाशो वा, अनेन अचेतन व्यावृत्तिरुक्ता, स्वमहिम्नैवं पूर्णः अवाप्तसमस्तकामः, अनेन मुक्तनित्यसिद्धजीवव्यावृत्तिः तयोः परिपूर्णतायाः भगवत्सङ्कल्पा यत्तत्वेन स्वमहिमायत्तत्वाभावादिति भावः। अनावृताक्षः असङ्कुचितज्ञानः अनेन बद्धजीवव्यावृत्तिः इत्थम्भूतं किं सर्वैर्न ज्ञायते इत्यत्राऽऽह - विवृत इव गूढ इव निरुक्तः "तं दुर्दर्शं गूढ मनुप्रविष्टम्" (कठ.उ.2-12) "गूढात्मा न प्रकाशते" इत्यादिभिः शास्त्रैः गूढत्वेनोक्त इत्यर्थः। तर्हि कैरपि दुर्दर्शः स्या दित्यत्राऽऽह - तत्परै स्तदुपासकैरात्मना योगपरिशुद्धमनसा लभ्यते इति ॥२४॥

विज० देवयजनं हरेः पूजास्थानं, चक्राब्जादिकं मण्डलम्, आत्मनः परमात्मनः सकाशात्, संस्कारः शरीरशुद्धिः, दीक्षा दीक्षया हि देहशुद्धिः भगवतः परिचर्या आत्मनः स्वस्य दुरितक्षयः पापनाशनम् ॥१७॥

भगवान्पूज्यः भगशब्दात्मा भगशब्दस्वरूप ऐश्वर्यादिगुणस्वरूप इत्यर्थः। धर्मयश आख्ये चामरव्यजने ॥१८॥

निजधाम तद्वैकुण्ठ तदभिमानिदेवता आतपत्रं, त्रिवृत् त्रिविधो वेदः सुपर्णाख्यो यज्ञं पुरुषं यज्ञपुरुषं वहति ॥१९॥

साक्षादनपायिनी नित्यावियोगिनी श्रीहरे रात्मभूतार्धदेहा नाम, विष्वक्सेनः पार्षदाधिपो विदितः तन्त्रमूर्तिः तन्त्र ग्रन्थाभिमानी ॥२०।

अष्टौ नन्दादयो द्वाःस्थाः हरेः अणिमाद्या गुणाः तदाश्रिताः मूर्तिव्यूहे मूर्तिस्थापने वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धः स्वय मभिधीयते ॥२१॥

स भगवानेव विश्वादिशब्दवाच्य इति भाव्यते। अर्थेन्द्रियाशयज्ञानैः वृत्तिभिः अर्थज्ञानलक्षणवृत्त्या जाग्रदवस्थया विश्वः मनादीन्द्रियगतवासनालक्षणज्ञानवृत्त्या स्वप्नावस्थया तैजसः आशयः सुषुप्ति स्तदवस्थाज्ञानलक्षणवृत्त्या वर्तमानः प्राज्ञः एतावन्तं

1--1 AB omits. 2--2 W लभ्यः. 3 AB भाव्यते

कालं सुख मस्वाप्सम् इत्यनुभवात्, किमेते भिन्ना इत्यत्राऽऽह - तत इति। ततो व्याप्तोऽपरिच्छिन्न इत्यर्थः। बहुत्वसंख्यामात्रयोगित्वं न तु मिथो भिन्नत्वम् ॥२२॥

अङ्गादिकथनस्योपयोगमाह - **अङ्गेति**।अङ्गादिशब्दवाच्यवासुदेवाद्यावरणैः भगवान्पूज्य इत्येतदर्थत्वेन कथनमित्यर्थः। अङ्गादिचतुष्टयस्याऽपि हरि रेवाऽऽधार इत्याह - तदिति। चतुर्मूर्तिर्भगवान् अङ्गादिचतुष्टयं बिभर्ति। तत्राऽयं विभागः अङ्गात्मनाः वासुदेवाद्याः स्वय मुपाङ्गादिषु ब्रह्मादिषु सन्निहितत्वेन पूजाकाले तथा स्मरणार्थं स्मेत्युक्तं, भगवान्वसिष्ठाद्यन्यतमो नेत्याह - हरिरिति। हरिरपि पुरन्दराद्यन्यतमः किं नस्यादित्यत उक्त मीश्वर इति। सोऽपि सदाशिवः स्यादत उक्तं चतुर्मूर्तिरिति, सोष्टमूर्तिरिति प्रसिद्धः ॥२३॥

यद्वेदान्तवेद्यं तदेवाऽत्र पुरुषरूपेणोच्यते। तस्मादिदं मुमुक्षुभिः श्रद्धयोपास्यमिति श्लोकद्वयेनाऽऽह - द्विजवृषभेति। हे द्विजवृषभ! तत्परैस्तद्भक्तैः आत्मलभ्यः आत्मनि मनसि लभ्यः प्रकाश्यो भवति। यद्वा, आत्मनैव स्वानुग्रहेणैव लभ्यः प्राप्यः "यमेवैष वृणुते तेन लभ्यः" (कठ.३.२-२२) इति श्रुतेः। किंलक्षणकः कोऽयं पुरुष इति तत्राऽऽह - माययेति। स्वया मायया स्वेच्छयैव सृजतीत्याद्याख्यया निरुक्तः कथम्? सृजतीति स्रष्टा, हरतीति हरः पातीति पाता। "स्रष्टा पाता तथैवाऽत्ता निखिलस्यैक एव तु" इत्यादेः। अत्र किं प्रमाणम्? तत्राऽऽह - ब्रह्मेति। ब्रह्म वेदादिशब्दराशिर्योनिर्ज्ञप्तिकारणं यस्य स तथा, वेदादिशब्दराशिरस्मिन्नर्थे मानमित्यर्थः। चतुर्मुखस्याऽपि सृष्ट्यादिकर्तृत्वस्य प्रमितत्वात्कथं हरेरेवेति निश्चीयते - "ब्रह्मा देवानां प्रथमस्सम्बभूव" (मुण्ड.३.१-१) इति श्रुतिरित्यतोवाऽऽह - ब्रह्मेति। ब्रह्मणश्चतुर्मुखस्य योनिः कारणं "यो ब्रह्माणं विदधाति" (श्वेता.३.६.१८) इति श्रुतेः। लोकवत्परोपदेशेन कर्मणि न प्रवर्तते, किन्तु स्वरूपज्ञानेनेत्याशयेनाऽऽह - स्वयं दृगिति स्वयं भूतज्ञानत्वेपि कर्मण्यपेक्षाऽविनाभूतं दृष्टं अत्राऽऽह - स्वमहिम्नेति। स्वे महिम्नि (छान्दो.३.७.२४.१) इति श्रुतेः। स्वयं प्रकाशमानस्य प्रद्योतमानस्य मेघाद्यावरणेनेव हरेर्ज्ञानस्याऽपि तत्स्यादित्यत्राऽऽह - अनावृताक्ष इति। आवरणरहितदृष्टिः कथं प्रकाश्यत इत्यत्राऽऽह - विसृजत इति। स्रष्टा अयमित्युपासमानस्य विविधं सृजत इति प्रकाशते, संहर्ता अयमिति ज्ञानवतः, संहरतीव रक्षतीव। इतरस्य उपलक्षण मेतत्, यान् यान् गुणानुपसंहृत्योपास्ते, तत्तद्गुणत्वेन प्रकाशत इति ॥२४॥

**श्रीकृष्ण कृष्णसख वृष्णिवृषाऽवनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य।**
**गोविन्द गोद्विजसुरार्तिहरावतार तीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान् ॥२५॥**

1 A B G H J V वृष्ण्यृषभाऽव° 2-2 A B G J गोपविनिताव भृत्यानि

य इदं कल्य उत्थाय महापुरुषलक्षणम्।
तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥२६॥

(विजयध्वजरीत्या दशमोऽध्यायः समाप्यते)

(विजयध्वजरीत्या एकादशोऽध्यायः प्रारभ्यते)

शौनक उवाच

शुको यदाऽऽह भगवान् विष्णुराताय शृण्वते[2]।
[3]सौरो गणो मासिमासि नाना [4]वसति सप्तकः ॥२७॥

तेषां नामानि कर्माणि नियुक्तानामधीश्वरैः।
ब्रूहि नः श्रद्धधानानां व्यूहं सूर्यात्मनो हरेः ॥२८॥

सूत उवाच

अनाद्यविद्यया विष्णो रात्मन स्सर्वदेहिनाम्।
[6]निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्तते ॥२९॥

एक एव हि लोकानां सूर्य आत्माऽऽदिकृद्धरिः।
सर्ववेदक्रियामूलमृषिभि र्बहुधोदितः ॥३०॥

कालो देशः क्रियाकर्ता करणं कार्यमागमः।
द्रव्यं फलमिति ब्रह्मन् नव[8]धोक्तोऽजया हरिः ॥३१॥

मध्वादिषु द्वादशसु भगवान् कालरूपधृत्[9]।
लोकतन्त्राय चरति पृथग् द्वादशभिर्गुणैः[10] ॥३२॥

**श्रीध०** यस्येदमुपासनमुक्तं तं श्रीकृष्णं प्रार्थयते **श्रीकृष्ण** इति। कृष्णसख! अर्जुनस्य सखे! वृष्णिश्रेष्ठ! अवनि द्रुहो ये राजन्याः तेषां वंशस्य दहन! अनपवर्ग मक्षीणं वीर्यं यस्य गोपवनितानां व्रजाः समूहाः भृत्याश्च नारदादयस्तैर्गीतं तीर्थं भूतं श्रवः कीर्तिः यस्य, श्रवणमेव मङ्गलं यस्य ॥२५॥

---

1 M Ma कल्प 2 M Ma पृच्छते 3 W सौर्य 4 W वहति 5 A B G J W स' 6 W निर्गतो 7 B M Ma का' 8 H V सप्तोऽ 9 A B G J M Ma 'कृ 10 A B G J र्गणै 11 H V 'नस'

एतज्जपमात्रस्याऽपि ब्रह्मज्ञानं फलमित्याह-य इति। कल्ये उषःकाले यस्तच्चित्तः प्रयतः शुचिस्सन्[1] स[2] जपि[2] त्वा गुहाशयं हृदिस्थं ब्रह्म पश्यति ॥२६॥

मण्डलं देवयजनमित्युक्त्या बुद्धिमागता[3] सौरी तनुः वासुदेवादि[3] मूर्ति[4]व्यूहप्रसङ्गेन[5] सूर्यव्यूहः[6] अनुस्मृतः[7] अतः तं पृच्छति - शुक इति। पञ्चमे यदाह "तथाऽन्ये च ऋषयो गन्धर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्तेत्यादिना सौरः सूर्यसम्बन्धी सप्तकः सप्तानां[8] गणः ॥२७॥

तेषामिति। तेषां सप्तानामधीश्वरैस्तत्तत्पतिभिस्तत्तन्मासाधिकृतसूर्ये[9] वा व्यूहं विभागम् ॥२८॥

तत्र[10] तावत् व्यूहं निरूपयितुं प्रथमं सूर्यस्वरूपमाह - अनादीति अनाद्यविद्यया मायया अयं सूर्य लोकतन्त्रो लोकयात्राप्रवर्तकः ॥२९॥

अतस्तस्य क्रियाभेदोपाधिकमेव नानात्वं दृश्यते[11] न स्वत इत्याह - एक एवेति, "सूर्य आत्मा जगतस्तस्थुषश्च" (ऐत. उ. 2-4-3) इति श्रुतेः। लोकानां[12] जगतां आत्मा आदिकृत् सृष्टिकर्ता हरिरेव सूर्य सच सर्वासां वेदोक्तक्रियाणां मूलं सन् तेन[13] तेनोपाधिना बहुधा उदितः[14] उक्तः ॥३०॥

कालरूपधारिणो हरेर्द्वादशादित्यरूपं[15] भेदं क्रियोपाधिकं दर्शयितुं प्रथमं सर्वकर्मप्रवृत्तये मायाकृतं नवधा भेदमाह - काल इति। कालः प्रातरादिः १) देशः समादि २) क्रिया अनुष्ठानम् ३) कर्ता ब्राह्मणादि ४) करणं स्रुगादि ५) कार्यं[16] यागादि[16] ६) आगमो मन्त्रादि ७) द्रव्यं व्रीह्यादि ८) फलं स्वर्गादि ९। ॥३१॥

मध्वादिष्विति। तत्र च कालस्वरूपधारी भगवान् पृथक् चरति मध्वादिषु चैत्रादिषु लोकतन्त्राय लोकयात्रानिर्वाहाय ॥३२॥

वीर० तदेवं तत्तत्तत्त्वात्मकं श्रीभगवदङ्गादीनि निरूप्य कृत्स्नप्रबन्धार्थानुपसंहर्तुं तावत्स्वेष्टदेवता स्वभक्तरक्षायै प्रार्थयते श्रीकृष्णेत्यादि[17] - "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" (भार्त.5-68-5) इति व्युत्पत्त्या तादृशार्थो ज्ञेय[17] इत्यर्थः। इमानि नवसम्बोधनानि। तत्राऽऽद्येन सर्वानन्दयितृत्वं, द्वितीयेन सौशील्यं, तृतीयेन सौलभ्यं, तुरीयेन दुष्कृद्विनाशकत्वं, पञ्चमेनाऽपारवीर्यत्वं, षष्ठेन सर्वाधारत्वं, सप्तमेन माधुर्यगात्रत्वम्, अष्टमेन पावनकीर्तिमत्त्वं, नवमेन

---

1 A B स्व 2--2 B स जप्त्वा H V omit मर्जापत्वा 3-3 A B omit 4 H V omit मूर्ति 5 H V महाकन्या 6 H V गंव 7 A B J omit अनुस्मृत 8 H V omit सप्ताना 9 H V न्मायापाधि 10 A B यत्र 11 A B omit दृश्यते 12 A B omit लोकाना 13 A B omit तेन 14 AB omit उदित 15 H V पभे 16--16 H V omit 17 17 W omits

अत्यादरेण श्रोतव्यत्वं विवक्षितम्। कृष्णोऽर्जुनस्तस्य सखे! तथा अवन्यै द्रुह्यन्तीति तथा, ते राजन्या एव वंशा वेणवः तेषां दहन! नाशन![1] यद्वा अवनिध्रुग्राजन्यानां वंशः सन्तानः तस्य दहन! अनपवर्गवीर्येति पाठः। अमरवन्द्यवीर्येति पाठे परत्वं विवक्षितम्। गवां द्विजानां सुराणाञ्चाऽऽर्तिं हरतीति तथाभूतोऽवतारो यस्य, तीर्थं पुण्यावहं श्रवः यशो यस्य श्रवणमात्रेण मङ्गलप्रद। भृत्यान् सेवकान्[2] रक्ष ॥२५॥

प्रकृतभगवदङ्गादिनिरूपणप्रकरणकीर्तनफल माह - य इति। कल्ये (प्रातः) प्रभाते[3] उत्थाय इदं महापुरुषस्य लक्षणं चिह्नभूताङ्गोपाङ्गादिनिरूपणपरप्रकरणं तस्मिन् परमपुरुष एव चित्तं यस्य सः। समाहितेन्द्रियश्च यः स जप्त्वा गुहाशयं हृदयगुहाशयस्थितं ब्रह्म वेद यथाव द्विद्यादित्यर्थः ॥२६॥

अत्र क्वचिदध्यायसमाप्ति र्दृश्यते, क्वचिन्नेति द्रष्टव्यम्। पुनरुपसञ्जिहीर्षा मालक्ष्य वासुदेवादि व्यूहप्रसङ्गात् स्मारितान् सूर्योपासकान् व्यूहान् पञ्चमे स्कन्धे दिङ्मात्रेण प्रदर्शितान् विस्तरतो बुभुत्सुः पृच्छति शौनकः[4] शुक इति द्वाभ्याम्[5]। शृण्वते श्रवणं कुर्वते विष्णुरताय परीक्षिते श्रीशुको यदाह किन्तत् सौर्यः सूर्याराधको गण सप्तकः सप्तानामादित्यानां समूहात्मकः मासि मासि नानावहति नानाविधं कर्म वहतीतियत्, यथाह्येव[6] मुक्तं पञ्चमे - "तथाऽन्ये च ऋषयो गन्धर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्तचतुर्दश मासि मासि भगवन्तं सूर्यमात्मानं पृथक् नामानः पृथक्कर्मभिः द्वन्द्वश उपासते" (भाग.5-21-18) इति ॥२७॥

तेषामिति। सप्तानां सौरगणानां अधीश्वरैः नियुक्तानां तत्तत्पतिभिः तत्तन्मासाधिकृतसूर्यैर्नियुक्ताना मित्यर्थः। प्रतिमासं सूर्यस्य नामभेदाभिप्रायकं अधीश्वरैरिति बहुवचनम्। स्वान्तरात्मभूत परमात्मोपासनार्थं सूर्यस्याऽपि तेषां नामान्तरेण गणमध्ये प्रविष्टत्वात्तदभिप्रायकं वा। अतस्तेन सहैव सप्त वक्ष्यन्ते। सूर्यात्मनः सूर्यशरीरस्य हरेरुपासकं तेषां गणानां व्यूहं तन्नामानि कर्माणि च श्रद्दधानानां नोऽस्माकं ब्रूहीति सम्बन्धः ॥२८॥

तत्र व्यूहान्निरूपयितुं तावत्सूर्यस्य तत्त्वमाह - अनाद्येति। सर्वदेहिना मन्तरात्मनो विष्णोर्नियाम्यया अनाद्यविद्यया आदिरहितया ज्ञानविरोधिन्या प्रकृत्या निर्मितोऽयं सूर्यः लोकतन्त्रः लोकयात्राप्रवर्तकः, अत एव लोकेषु प्रवर्तते परिभ्रमति। अनाद्यविद्यया निर्मित इत्यनेन सूर्यबिम्बस्य प्रकृतिपरिणामविशेषात्मकत्वमुच्यते ॥२९॥

तस्य भगवदात्मकत्वं वदन् लोकतन्त्रता मुपपादयति एक एवहीति। यो लोकाना मादिकृत् सृष्टिकर्ता एकः अद्वितीयः स्वतुल्यवस्त्वन्तररहितः सर्वान्तरात्मा हरिः स एव सूर्यो हरिरेव, सूर्यशरीरकत्वेन अवस्थित इत्यर्थः। कथम्भूतः? सर्वासां वेदक्रियाणां

1 W omits नाशन! 2-2 W omits 3 W omits प्रभाते 4 W omits शौनकः 5 W omits द्वाभ्याम् 6 W तु

मूलभूतः वैदिकक्रियामूलत्वं कालावच्छेदकतया अवगन्तव्यम् ऋषिभिः पराशरादिभिः बहुधा द्वादशधा उदित उक्तः ॥३०॥

तत्र दृष्टान्त माह - **काल** इति। हे ब्रह्मन्! यथा हरिरेक एव कालादिशरीरकत्वेन नवधा उक्तः, तद्वदित्यर्थः[1]। तत्र कालो वसन्तादिः। देशः "समे यजेत" इत्याद्युक्तः। क्रिया यागादिरूपा, करणं साधनं, कार्यं स्थायिकार्यमपूर्वाख्यं, आगमः प्रमाणभूतो वेदः, द्रव्यं चरुपुरोडाशादि, फलं स्वर्गादि। "ययोक्तो बहुधा हरिः" इति पाठान्तरम्, देशकालादिफलपर्यन्तमिदं सर्वं साधनत्वेन साध्यत्वेन च क्रियान्तर्भूतम्। एभिर्विशिष्टा क्रिया इत्यर्थः। यया क्रियया हरि र्बहुधोक्तः द्रव्यादि शरीरकत्वादिति भावः ॥३१॥

विवक्षितमर्थन्तावत्सङ्ग्रहेणाऽऽह - **मध्वादिष्विति**। मध्वादिषु चैत्रादिषु द्वादशसु मासेषु कालरूपधृत् (क्) कालावच्छेदकरूपधृत् (क्) भगवान् सूर्यः लोकतन्त्राय लोकयात्रा निर्वाहकाय पृथग्द्वादशभिर्गणैस्सह चरति। एकैकस्मिन् मासे एकैको गणः प्रतिगणं गणिनस्तु सप्त सप्तेत्यर्थः[3]। यद्यपि पञ्चमे स्कन्धे चतुर्दशोक्ताः तथाऽऽपि तत्र प्रधानाः सप्त सप्तैवेति तत्र एवोच्यन्ते इति भावः[4-4] ॥३२॥

**विज०** श्रीकृष्ण कृष्णेत्युक्तार्थः ॥२५॥

एव मुपास्तिं कुर्वतः फल माह - **य इदमिति**। कल्ये उषसि महापुरुषलक्षणं जपति। स जप्त्वा हृदयगुहायां शेत इति हृदयगुहाशयं ब्रह्म जानाति, कुशेशय मितिवत् ॥२६॥

(विजयध्वजतीर्थरीत्याऽत्रैव दशमाध्यायस्य समाप्तिः)

(विजयध्वजतीर्थ रीत्या एकशोऽध्यायः आरभ्यते)

सर्वोपास्यत्वेऽपि आदित्यस्थस्यैव हरेर्गृहस्थैर्विशेषत उपास्तिः कर्तव्येति तत्स्थितिप्रकारं कथयत्यस्मिन्नध्याये। तत्र शौनकः पृच्छति - **शुक** इति। शुको भगवा न्विष्णुराताय पृथङ्नामरूपादिसप्तको गणो मासि मासि नानानामानं सूर्यं भगवन्तं निषेवमाणः सौरेः सूर्यस्य विद्यमाने स्यन्दने रथे नाना वसति। "तथा अन्ये च ऋषयो गन्धर्वाप्सरसो नागाः" (भाग.1-21-18) इत्यादि पञ्चमस्कन्धे यदाह ॥२७॥

तदा तेषां पृथङ्नामानि पृथक्कर्माणि चानुक्तानि अतः श्रद्धधानानां नोऽस्माकं तानि ब्रूहीत्यन्वयः सूर्यात्मनः सूर्यान्तर्यामिणो हरेः व्यूहं स्थितिविशेषञ्च वद। सूर्यात्मनो हरेः परितः स्थितं तेषां व्यूहं पृथक् पृथक् इति शेष,इति वा ॥२८॥

1 W omits इत्यर्थ। 2 W 'शमा'. 3 W omits इत्यर्थ 4-4 W omits

अयं कल्पो हरेर्बुद्धिपूर्वं प्रणीतत्वात् न मिथ्याभूत इति भावेनाऽऽह - **अनादीति**। लोकं तन्त्रयति व्यापारयतीति लोकतन्त्रो लोकप्रवृत्तिहेतुरयं सूर्यादिः लोकेषु परि परितो वर्तते उदयादिनिमित्तव्यापाराय उदयादिकं गच्छतीत्यर्थः। कीदृशः? सर्वदेहिनामात्मनो विष्णोः अनाद्यविद्यया करणशून्यच्छया निर्मितः, "सूर्या चन्द्रमसौ धाता यथापूर्वमकल्पयत्" (मना.3.6-3) इति श्रुतेः ॥२९॥

सरतीति सूर्य इति, सूरिप्राप्यत्वा त्सूर्य इति तच्छब्दप्रवृत्तिनिमित्तस्य तदेकाधीनत्वान्मुख्यकर्ता हरिः एक एवेत्याह - **एक एवेति**। लोकाना मुभयेषां आत्मा "सूर्य आत्मा जगतस्तस्तुषश्च" इति श्रुतिः दिनस्यादिकृत् "कृती च्छेदने" इति धातोः दिनादिच्छित् अस्तकर्ता च "प्रातरुत्थायाऽथ सन्ध्यामुपासीत" इति श्रुतेः, सर्ववेदोक्तक्रियामूल मत एव ऋषिभिर्बहुधोदितः, उदित मिति पाठे तत्स्वरूपं नानात्वेन कथितम्। अत्र द्वादशसूर्येष्वेकः स्वयं हरि, रन्यत्राऽन्तर्यामित्वेनेति विशेषः ॥३०॥

नानात्वमुपपादयति - **काल** इति। अजया मायया अनाद्यविद्यया नवधोक्तः। कालः प्रातरादिः, देशः समादिः, क्रिया अनुष्ठानं, कर्ता ब्राह्मणादिः, कारण मिन्द्रियं, कार्यं देहः, द्रव्यं चर्वादि, भूतपञ्चकं वा, आगमो वेदादिशास्त्रं फलं स्वर्गादि, कालादिषु स्थित्वा तत्कर्मकारकत्वेन कालादिशब्दवाच्यत्वेन नवधा हरिरुक्तः इति ज्ञातव्यम् ॥३१॥

एक एव हरिः सर्वं प्रेरयतीत्युक्तं तत्प्रकारं दर्शयति **मध्वादिष्विति**। कालरूपधृक् भगवान् लोकतन्त्राय लोकव्यापाराय मध्वादिषु चैत्रादिषु द्वादशसु मासेषु द्वादशभिर्गणैर्द्वादशविधकालगुणैः पृथक्पृथक् चरतीत्यन्वयः ॥३२॥

**धाता कृतस्थली हेति र्वासुकी रथकृन्मुने।**
**पुलस्त्य स्तुम्बुरुरिति मधुमासं नयन्त्यमी ॥३३॥**

**अर्यमा पुलहोऽथौजाः प्रहेतिः पुञ्जिकस्थली।**
**नारदः कच्छनीरश्च नयन्त्येते स्म माधवम् ॥३४॥**

**मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः।**
**रथस्वन इति ह्येते शुक्रमासं नयन्त्यमी ॥३५॥**

**वसिष्ठो वरुणो रम्भा सहजन्यस्तथा हुहूः।**
**शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी ॥३६॥**

---

1-1 AB omit, 2 A,B रागणे, 3 H V कज्ज° 4 M Ma हा° 5 M Ma हू° 6 W शुक°

इन्द्रो विश्वावसुः श्रोता[1] एलापुत्रस्तथाऽङ्गिराः।
प्रम्लोचा राक्षसाश्चर्यो[2] नभोमासं नयन्त्यमी ॥३७॥

विवस्वा नुग्रसेनश्च व्याघ्र आसारणो भृगुः।
अनुम्लोचा शङ्खपालो नभस्याख्यं नयन्त्यमी ॥३८॥

पूषा धनञ्जयो वातः सुषेणः सुरुचिस्तथा।
घृताची गौतमश्चेति तपोमासं नयन्त्यमी ॥३९॥

[3]ऋतुवर्चा भरद्वाजः पर्जन्यस्सेनजित्तथा।
विश्व ऐरावतश्चैव तपस्याऽऽख्यं नयन्त्यमी ॥४०॥

**श्रीध०** तानेव गणानाह **धातेति** द्वादशभि धाता सूर्यः। कृतस्थली अप्सरा। हेती राक्षसः वासुकिर्नागः। रथकृद्यक्षः पुलस्त्य ऋषिः। तुम्बुरुर्गन्धर्वः।[4] मधुमासं चैत्रम्।[4] नयन्ति अनुवर्तयन्ति ॥३३॥

**अर्यमेति**। अथौजा यक्षः[5] पाठान्तरे जात इति।[5] प्रहेतो राक्षसः, नारदो गन्धर्वः, कच्छनीरो[6] नागः, पाठान्तरे कच्छनीर इति।[7] माधवं वैशाखम् ॥३४॥

**मित्र इति**। मित्रः सूर्यः, पौरुषेयो राक्षसः, रथस्वनो यक्षः, शुक्रमासं ज्येष्ठम्[8] नयन्ति अनुवर्तयन्ति[8] ॥३५॥

**वसिष्ठ इति**। वरुणः सूर्यः, सहजन्यो यक्षः, शुक्रो नागः, चित्रस्वनो राक्षसः शुचिमासमाषाढमासम्[9] ॥३६॥

**इन्द्र इति**। इन्द्रः सूर्यः, विश्वावसुः[10] गन्धर्वः, श्रोता यक्षः[11], एलापुत्रो नागः, चर्यो राक्षस इति स्वयमेव व्याख्यातम्, नभोमासं श्रावणम् ॥३७॥

**विवस्वान् इति**। विवस्वान् सूर्यः, उग्रसेनो गन्धर्वः, व्याघ्रो राक्षसः, आसारणो यक्षः[12] भृगुः ऋषिः[12], अनुम्लोचा अप्सरा शङ्खपालो नागः, नभस्याख्यं भाद्रपदम् ॥३८॥

**पूषेति**। धनञ्जयो नागः। वातो राक्षसः। सुषेणो गन्धर्वः। सुरुचिर्यक्षः। तपोमासं माघम्। मासक्रमातिलङ्घनं तु कौर्मोक्तादित्याऽनुक्रमानुसारेण[13]। वैष्णवे तु मासक्रमेणैवोक्तिः[14]। क्वचिन्नामव्यत्ययस्तु कल्पभेदेनेति ज्ञेयम् ॥३९॥

---

1 A B G J M Ma पत्र. 2 A B G J सो वर्यो M Ma स स्वर्यो 3 A B G H J V ऋतुवंचा M Ma ऋतुर्वर्चा 4 4 H V omit. 5 5 A B omit. 6 A B कच्छ. 7-7 A B omit 8-8 A B omit 9 A B ढम 10 A B ग 11 A B यं 12-12 A B om... 
14 A b चोक्ति

**क्रतुरिति**। क्रतुः (क्रतुः) यक्षः। वर्चा राक्षसः। वर्च इति पाठान्तरे। पर्जन्यः सूर्यः। सेनजिदप्सराः। विश्वो गन्धर्वः। ऐरावतो नागः। तपस्याख्यं फाल्गुनम् ॥४०॥

**वीर०** के पुनस्ते प्रतिगणं समर्गजिन इन्द्राह - **धातेत्यादिना**। धाता आदित्यः, कृतस्थली अप्सराः, हेती राक्षसः, वासुकिः भुजङ्गः, रथकृद्यक्ष, हेमुने! शौनक! पुलस्त्य ऋषिः, तुम्बुरुर्गन्धर्वः इत्येवं सप्त मधुमासं चैत्रमासं नयन्ति स्वस्वकर्मभिः सूर्यं गमयन्तीत्यर्थः। मधुमासमित्यत्यन्तसंयोगे द्वितीया। एवमग्रेऽपि ज्ञेयम्॥३३॥

**अर्यमेति**। अर्यमा सूर्यः, पुलहः ऋषि, रथौजाः यक्षः, प्रहेतिः राक्षसः, पुञ्जिकस्थली अप्सराः, नारदो यक्षः गन्धर्वः कच्छनीरो नागः, एते माधवं वैशाखमासम् ॥३४॥

मित्रः सूर्यः, अत्रि ऋषि, पौरुषेयो राक्षसः, तक्षको नागः, मेनका अप्सराः, हाहाः गन्धर्वः, रथस्वनो यक्षः, शुक्रमासं ज्येष्ठमासम् ॥३५॥

वसिष्ठः ऋषिः, वरुणः सूर्यः, रम्भा अप्सराः, सहजन्यो यक्षः, हूहूर्गन्धर्वः, शुको नागः, चित्रस्वनो राक्षसः, शुचिमासम् आषाढमासम् ॥३६॥

इन्द्र सूर्यः विश्वावसुर्गन्धर्वःश्रोता यक्षः, एला(प) पुत्रो नागः, अङ्गिरा ऋषिः, प्रम्लोचा अप्सराः, चर्यो राक्षसः नभोमासं श्रावणमासम् ॥३७

विवस्वान् सूर्य, उग्रसेनो गन्धर्वः, व्याघ्रो राक्षसः, आसारणो यक्षः, भृगुः ऋषिः, अनुम्लोचा अप्सराः शङ्खपालो नागः, नभस्याख्यं भाद्रपदं मासम् ॥३८॥

पूषा सूर्यः, धनञ्जयो नागः, वातो राक्षसः, सुषेणो गन्धर्वः, सुरुचिर्यक्षः, घृताची अप्सराः, गौतम ऋषिः, तपोमासं माघमासम्। मासक्रमविलङ्घनन्तु कूर्मोक्तादित्यक्रमानुसारेण, यद्वा, मासक्रमो न विवक्षितः, यथा गणिनां, अथवा अर्थक्रमानुरोधेन पूषेत्यादिश्लोकद्वयं तदनन्तरश्लोकद्वयात्परतो योज्यं, त्वष्टेत्यादि श्लोकद्वयन्तु तत्पूर्वश्लोकद्वयात्पूर्वं योज्यम् ॥ ३९॥

क्रतुवर्चा राक्षसः, भरद्वाजः ऋषिः, पर्जन्यः सूर्यः, सेनजित् अप्सराः, विश्वो गन्धर्वः ऐरावतो नागः, तपस्याख्यं फाल्गुनं मासम् ॥४०॥

**विज०** इदानीं तेषां नामान्याह - धातेत्यादिना। धाता सूर्यः, कृतस्थली अप्सराः, हेतिः राक्षसः, वासुकिः

1-1 A omits. 2 W omits शौनक। 3-3 W omits 4-4 W omits 5 W omits एते. 6 AB चर्यो

नागः, रथकृत्तक्षा, पुलस्त्यः ऋषिः, तुम्बुरुर्गन्धर्वः, अमी धात्रादयो मधुमासं नयन्ति, ते उक्तक्रियाप्रवर्तकत्वेन तन्मास मतिपारयन्ति ॥३३॥

अर्यमा सूर्यः पुलहः ऋषिः-, अथौजाः तक्षा, प्रहेतिः राक्षसः, पुञ्जकस्थली अप्सराः, नारदो गन्धर्वः, कच्छनीरो नागः, एते माधवमासाधिपतिं माधवनामानं नयन्ति शरणं प्राप्योपासते। एव मुत्तरत्राऽप्यनुसन्धेयम् ॥३४॥

मित्रः सूर्यः, अत्रिः ऋषिः, पौरुषेयो राक्षसः, तक्षको नागः, मेनका अप्सराः, हाहा गन्धर्वः, रथस्वन स्तक्षा ॥३५॥

वसिष्ठ ऋषिः, वरुणः सूर्यः, रम्भा अप्सराः, सहजन्यो राक्षसः हूहू र्गन्धर्वः, शुक्रोनागः, चित्रस्वन स्तक्षा ॥३६॥

इन्द्रः सूर्यः, विश्वावसु र्गन्धर्वः, स्रोता तक्षा, एलापत्रो नागः, अङ्गिरा ऋषिः, प्रम्लोचा अप्सराः, स्वर्यो नाम राक्षसः ॥३७॥

विवस्वानादित्यः, उग्रसेनो गन्धर्वः, व्याघ्रो राक्षसः, आसारगणस्तक्षा, भृगुः ऋषिः, अनुम्लोचा अप्सराः शङ्खपालो नागः ॥३८॥

पूषा आदित्यः, धनञ्जयो नागः, वातो राक्षसः, सुषेणस्तक्षा, सुरुचिर्गन्धर्वः, घृताची अप्सराः, गौतम ऋषिः ॥३९॥

ऋतु रप्सराः वर्चा गन्धर्वः, भरद्वाज ऋषिः, पर्जन्य आदित्य , सेनजित्तक्षा, विश्वो राक्षसः, ऐरावतो नागः ॥४०॥

**अथांऽशुः[1] कश्यपस्तार्क्ष्य ऋतसेन स्तथोर्वशी।**
**विद्युच्छत्रुर्महाशङ्खः[2] सहोमासं नयन्त्यमी ॥४१॥**

**भगः स्फूर्जोऽरिष्टनेमि रूर्ण[3] आयुश्च पञ्चमः।**
**कर्कोटकः पूर्वचित्तिः पौषमासं[4] नयन्त्यमी ॥४२॥**

**त्वष्टा ऋचीकतनयः कम्बलाश्वस्तिलोत्तमा[5]।**
**[6]ब्रह्मापेतोऽथ शतजित् धृतराष्ट्रइषम्भराः ॥४३॥**

**विष्णु रश्वतरो[7]रम्भा सूर्यवर्चाश्च[8] सत्यजित्।**
**विश्वामित्रो[9] मखापेत[10] ऊर्जमासं नयन्त्यमी ॥४४॥**

**एता भगवतो विष्णोरादित्यस्य विभूतयः।**
**स्मरतां सन्ध्ययोर्नृणां हरन्त्यंहो दिने दिने ॥४५॥**

1 MMa पुञ्जि॰, 2. M.Ma घृ॰, 3 M Ma ॰ह्रु॰, 4 A B G J पुष्यमास M Ma महस्याख्य 5 A B G J M Ma ॰लक्षति॰, 6 M.Ma ब: वर्चोश, 8 M.Ma ॰की; 9 M.Ma ॰त्र मुखा एत, 10 H V मथा

**द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै ।**
**चरन् समन्तात्तनुते परत्रेह च सन्मतिम् ॥४६॥**

**सामर्ग्यजुर्भिस्तल्लिङ्गैः ऋषयः संस्तुवन्त्यमुम् ।**
**गन्धर्वास्तं प्रगायन्ति नृत्यन्त्यप्सरसोऽग्रतः ॥४७॥**

**उन्नह्यन्ति रथं नागा ग्रामण्यो रथयोजकाः ।**
**चोदयन्ति रथं पृष्ठे नैर्ऋता बलशालिनः ॥४८॥**

**श्रीध० अथेति।** अंशुस्सूर्यः । अंश इति वा पाठः । तार्क्ष्यो यक्षः, ऋतसेनो गन्धर्वः । विद्युच्छत्रू राक्षसः, महाशङ्खो नागः, सहोमासं मार्गशीर्षम् ॥४१॥

**भग इति।** भगस्सूर्यः । स्फूर्जो राक्षसः । अरिष्टनेमिर्गन्धर्वः । ऊर्णो यक्षः, आयु ऋषिः, कर्कोटको नागः [1]पूर्वचित्तिः अप्सराः[1] ॥४२॥

**त्वष्टेति।** [2]त्वष्टा सूर्यः[2], ऋचीकतनयो जमदग्निः, कम्बलाश्वो[3] नागः, ब्रह्मापेतो राक्षसः, शतजिद्यक्षः, धृतराष्ट्रो गन्धर्वः। इषम्भरा आश्वयुज[4]पालकाः ॥४३॥

**विष्णुरिति।** विष्णु रादित्यः, अश्वतरो नागः, सूर्यवर्चा गन्धर्वः, सत्यजिद्यक्षः, मघापेतो[5] राक्षसः, ऊर्जमासं कार्तिक[6] मासम्। एते चादित्यादयः कौर्मे विभज्योक्ताः "धाताऽर्यमा च मित्रश्च वरुणश्चेन्द्र एव च । विवस्वानथ पूषा च पर्जन्यश्चांऽशु रेव च। भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः। पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोऽथाङ्गिरा भृगुः। गौतमोऽथ भरद्वाजः कश्यपः क्रतुरेवच। जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः। [7]रथकृच्चौरिष्टनेमिः ग्रामणीश्च रथस्वनः[7]। [8]रथचित्रस्वनः श्रोता अरुणः सेनजित्तथा[8]। [9]ताक्ष्र्यश्चारिष्टनेमिश्च रुतजित्सत्यजित्तथा[9]। [10]- एते यक्षाः। अथ हेतिः प्रहेतिश्च पौरुषेयो वध स्तथा[10]। वर्योव्याघ्रस्तथा यश्च[11] [12]वायुर्विद्युद्दिवाकरः[12]। ब्रह्मापेतश्च विप्रेन्द्रा[13] यज्ञापेतश्च राक्षसाः[14]। वासुकिः कच्छनीरश्च तक्षकः [15]सर्पपुङ्गवः[15]। एला पत्र[16] शङ्खपालस्तथैरावतसंज्ञितः[17]। धनञ्जयो महापद्मस्तथा कर्कोटको द्विजाः। [18]कम्बलोश्वतरश्चैव[18]वहन्त्येनं[19] यथाक्रमम्[20]। तुम्बुरु र्नारदो हाहा हू हू [21]विश्वावसु स्तथा। उग्रसेनो वसुरुचि विश्वावसुरथापरः[21]। चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः। सूर्यवर्चा द्वादशेति

1--1 A.B omit, 2--2 HV omit, 3 AB 'लोना', 4 AB आश्विन, 5 AB मखा, 6 HV 'कम्, 7--7 HV कृच्च रथोजास्च, 8--8 HV सहजन्यस्तात:, 9--9 HV सारण: सुरजित्तथा, 10--10 HV क्रतुस्तक्ष्योऽथ ऊर्जश्च शतजि, 11 HV रथस्वन:, 12--12 HV वर्यो व्याघ्रो मख्न वर्यो विद्युस्फूर्जस्तथैवच, 13 HV न्द्र, 14 HV add पाठान्तरे वर्षरति, 15--15 HV शुक्र एव च, 16 HV पु' 17 AB शङ्ख 18--18 HV 'लाश्वश्वाश्तरो 19 H.V ते 20 HV add पाठान्तरे कज्जनीर इति 21--21 HV °नस्सुषेणश्च विश्वोऽथक्रतसेनक

**गन्धर्वा गायतां वराः। कृतस्थल्यप्सरो वर्या तथाऽन्या पुञ्जिकस्थली। मेनका** सहजन्याच **प्रम्लोचा च द्विजो**त्तमाः। **अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा। अन्या च पूर्वचित्तिः स्या** दन्याचैव तिलोत्तमा। रम्भा चेति द्विजश्रेष्ठा स्तथैवाऽप्सरसः स्मृताः', **इति ॥४४,४५॥**

एतेषां पृथक्कर्माणि निरूपयति **द्वादशस्वपीति** त्रिभि । असौ देव सूर्य षड्भिर्गन्धर्वादिभि अस्य जनस्य समन्ताच्चरन् शुभां मतिं तनुते। गायत्र्यर्थोऽनेन सूचितः ॥४६॥

**सामेति**। तल्लिङ्गैः सूर्यप्रकाशकैः ॥४७॥

**उन्नह्यन्तीति**। उन्नह्यन्ति दृढं बध्नन्ति। ग्रामण्यो यक्षा । नैर्ऋता राक्षसा ॥४८॥

**वीर०** अंशुमान् सूर्यः, कश्यपः ऋषिः, तार्क्ष्यो यक्षः, ऋतुसेनो गन्धर्वः, ऊर्वशी अप्सराः, विद्युच्छत्रुः राक्षसः, **महाशङ्खो नागः, सहोमासं मार्गशीर्षं नयन्ति ॥४१॥**

भगस्सूर्यः, स्फूर्जो राक्षसः, अरिष्टनेमिर्गन्धर्वः, ऊर्णो यक्षः, आयुः ऋषिः, कर्कोटको नागः, पूर्वचित्तिः अप्सराः, **पुष्यमासं पौषमासं** नयन्ति ॥४२॥

त्वष्टा सूर्यः, ऋचीकतनयः जमदग्निः ऋषिः, कम्बलाश्वो नागः, तिलोत्तमा अप्सराः, ब्रह्मापेतो राक्षसः, ऋतजिद्यक्षः, धृतराष्ट्रो गन्धर्वः, इषम्भराः - एते आश्विनमासनिर्वाहकाः ॥४३॥

विष्णुरादित्यः, अश्वतरो नागः, रम्भा अप्सराः, सूर्यवर्चा गन्धर्वः, सत्यजिद्यक्षः, विश्वामित्रः ऋषिः, मखापेतो राक्षसः ऊर्जमासं कार्तिकमासं नयन्ति ॥४४॥

अथ व्यूहसमूह (निरूपण) मुपसंहरन् तत्स्मरण फलमाह - **एता** इति। हे विप्र आदित्यस्वरूपिणः भगवत एता स्समाख्याताः विभूतयः ताः सन्ध्ययोः स्मरतां नृणामंहः पापं हरन्ति ॥४५॥

अथैषां पृथक्कर्माण्याह त्रिभिः - **द्वादशस्वपीति**। असावादित्यरूपो देवो द्वादशस्वपि मासेष्वेभिः उक्तैः षड्भिः प्रतिगणमादित्येन विना षड् भवन्तीति षड्भि रित्युक्तम्। तेन सह सप्त भवन्तीति तदभिप्रायेण "नाना वहन्ति सप्तकः" इत्युक्तं पुरस्तात्। यद्वा वालखिल्यगणेन सह सप्तत्वमिति तेन विनाऽत्र षड्भि रित्युक्तम्। प्रतिगणमादित्यकीर्तनन्तु नामभेदविवक्षया प्राधान्यविवक्षया वा विग्रहान्तरेण स्वान्तरात्मभूतभगवदुपासकत्वविवक्षया वेति विभावनीयम्। समन्तात्परितः चरन् अस्य जनस्य इह लोके परत्र च लोके सद्गतिं शुभां गतिं तनुते। सन्मतिमिति पाठे इहाऽमुत्र श्रेयोविषया मतिं तनुत इत्यर्थः ॥४६॥

1-1 W omits; 2-2 W omits; 3 W omits नयन्ति, 4 W omits अथ, 5-5 W आदित्यस्य, 6 W omits ता

साममिः ऋग्भिः यजुर्भिश्च तल्लिङ्गैः सूर्यप्रकाशकैरमुं सूर्यमृषयः स्तुवन्ति ॥४७॥

नागाः रथमुन्नह्यन्ति दृढं बध्नन्ति। ग्रामण्यो यक्षाः, नैर्ऋताः राक्षसाः, पृष्ठे पश्चाद्रथं चोदयन्ति गमयन्ति प्रेरयन्ति ॥४८॥

विज० अंशुरादित्यः कश्यपऋषिः, तार्क्ष्यस्तक्षा, धृतसेनो गन्धर्वः, उर्वशी अप्सराः, विद्युच्छत्रुः राक्षसः, महाशङ्खो नागः ॥४१॥

भग आदित्यः, स्फूर्जो राक्षसः, अरिष्टनेमिः ऋषिः, ऊर्णो गन्धर्वः, आयुस्तक्षा, कर्कोटको नागः पूर्वचित्तिरप्सरा ॥४२॥

त्वष्टा आदित्यः, ऋचीकतनयो राक्षसः, कम्बलाख्यो नागः, तिलोत्तमाऽप्सराः, ब्रह्मरात ऋषिः, शतजित्तक्षा, धृतराष्ट्रो गन्धर्वः, इषं बिभर्तीति इषम्भराः इषमास प्रणेतार इत्यर्थः ॥४३॥

विष्णुरादित्यः, अश्वतरो नागः, रम्भाऽप्सराः, सूर्यवर्चो गन्धर्वः, अश्वो राक्षसः, सत्यक स्तक्षा, विश्वामित्र ऋषिः ॥४४॥

उपसंहरन्नेव तत्कथनप्रयोजनमाह - एता इति। आदित्यान्तर्यामिणो हरेः "ध्येय स्सदा सवितृमण्डलमध्यवर्ती" इति वचनमत्र प्रमाणम् ॥४५॥

एतदभिप्रेत्य पुनरपि लोकद्वयोपभोज्यफलमाह - द्वादशस्विति। द्वादशसु मासेषु षड्भिर्गणैः धात्रादीनृते षट्संख्यामुपगतैस्सह समन्ताच्चरन् देवोऽस्य सेवकस्येह परत्र च सन्मतिं निर्दुःखास्वानन्दानुभवलक्षणां तनुते यथायोग्यं विस्तृत्य ददातीत्यर्थः ॥४६॥

इदानीं तेषां कर्म. गाह - सामे[1], सामर्ग्यजुर्भिस्तल्लिङ्गैस्तल्लक्षणैः तत्तत्त्वगमकैः वाक्यैर्वा उन्नह्यन्ति सम्यक्[2]नियोजयन्ति। ग्रामण्यस्तक्षाणः, नैर्ऋता राक्षसाः ॥४७,४८॥

**वालखिल्यास्सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः।**
**पुरतोऽभिमुखं यान्ति[3] स्तुवन्तस्स्तुतिभिर्विभुम् ॥४९॥**

**एवं ह्यनादिनिधनो भगवान् हरिरीश्वरः।**
**कल्पे कल्पे स्वमात्मानं व्यूह्य[4] लोकानवत्यजः ॥५०॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे एकादशोऽध्यायः ॥११॥

---

1-1 W omits ; 2 M Ma वियो° ; 3 A B G J W स्तुवन्ति स्तु ; 4 H V लोकं नयत्यज . M Ma लोकांस्तपत्यज

**श्रीध० किञ्च, वालखिल्या इति**। एवं[1] प्रतिमासं त एव स्तुवन्ति[2]। विभुम् सूर्यं ॥४९॥

**एवमिति**। व्यूह्य विभज्य ॥५०॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्याया एकादशोऽध्याय ॥११॥

**वीर० वालखिल्या** इति। पुरतोऽभिमुखं सूर्यमावृत्य स्थित्वा तेन मह यान्ति गच्छन्ति विभुं[3] सूर्यं स्तुतिभिः[4] स्तुवन्ति स्तुतीः[5] कुर्वन्ति चेत्यर्थः ॥४९॥

उपसंहरति - **एवमिति** । अनादिनिधनः आद्यन्तरहित नित्यो यो भगवानित्थं प्रतिकल्पं स्वमात्मानं प्रकृतिपुरुष शरीरकं स्वमात्मानं व्यूह्य एकादशगणरूपेण विभज्य लोकान्नयति स्वे स्वे कर्मणि प्रवर्तयति ॥५०॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां एकादशोऽध्याय ॥ ११ ॥

**विज०** एवं गणन मन्तरेणाऽन्येऽपि सन्तीत्याह - **वालखिल्या** इति ॥४९॥

अध्यायार्थ मुपसंहरति - **एवमिति**। तपति आवर्तयति ॥५०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां टीकायां
द्वादशस्कन्धे एकादशोऽध्याय ॥११॥

**(श्रीविजयध्वजतीर्थरीत्या एकादशोऽध्यायः न समाप्तः)**

---

1 H.V एते, 2 H V omit स्तुवन्ति, 3 AB omit विभुं, 4 AB omit स्तुतिभिः 5 AB स्तुतिः

# द्वादशोऽध्यायः

## सूत उवाच

नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान् [1]वक्ष्यामि शाश्वतान्[1] ॥१॥

एत द्वः कथितं विप्रा विष्णोश्चरितमद्भुतम् ।
भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥२॥

अत्र स[2]ङ्कीर्त्यते साक्षात् [3]सर्वपापहरो हरिः ।
नारायणो हृषीकेशो भगवान्सात्त्वतां पतिः ॥३॥

[4]अत्र [4]ब्रह्म परं [5]गुह्यं जगतः प्रभवाप्ययम् ।
ज्ञानञ्च त[6]दुपाख्यानं प्रोक्तं विज्ञानसंयुतम् ॥४॥

[7]भक्तियोगस्समाख्यातो[7] वैराग्यञ्च तदाश्रयम् ।
पारीक्षितमुपाख्यानं नारदाख्यानमेव च ॥५॥

प्रायोपवेशो राजर्षे र्विप्रशापात्परीक्षितः ।
शुकस्य ब्रह्मर्षभस्य संवादश्च परीक्षि[8]तः ॥६॥

योगधारणयोत्क्रान्तिः संवादो नारदाजयोः ।
अवतारानुगीतञ्च स[9]र्गः प्राधानिकोऽग्रतः ॥७॥

विदुरोद्धवसंवादः क्षत्तृ[10]मैत्रेययोस्ततः ।
पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥८॥

## श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः । प्रथमस्कन्धमारभ्य प्राधान्येन समासतः ॥

तदेवमस्मिन् पुराणे विस्तरेणोक्तानर्थान् संक्षेपतो वर्णयिष्यन् धर्मादीन्प्रणमति - **नम** इति । महते हरि भक्तिलक्षणाय

---

1--1 A.B.G.J.M.Ma वक्ष्ये सनातनान् . 2 A.B.G.J °र्तिते . 3 H.V अनादिनिधनो . 4--4 H.V अत्र ते परमं . MMa यत्तद्ब्रह्मपरं . W यच्च ब्रह्मपरं . 5 H.V विश्वस्य. 6 MMa सदुपां . W साधूपा° . 7--7 H.V व्याख्यातो भक्तियोगश्च . MMa भक्तियोगश्च व्याख्यातो . 8 W °ता. 9 H.V सर्गप्रा° 10 H.V °स्तथा

**ब्राह्मणेभ्यो ब्राह्मणान्** शाश्वतान्[1] अनादीन्, धर्मानित्युपलक्षणम् पुराणोक्तार्थानाम् ॥१॥

**एतदिति**। नराणां जीवानां[2] पुरुषत्वे उचितं[2] श्रवणादियोग्यम् ॥२॥

एतत्प्रपञ्चयति - **अत्रेति**। भगवानैश्वर्यादिषड्गुणक[3] साक्षात्सङ्कीर्त्यते[4] इति देवताकाण्डार्थः ॥३॥

ब्रह्मकाण्डार्थमाह - **अत्र ब्रह्मेति**। गुह्यं निर्गुणम्। प्रभवाप्ययं प्रभवत्यस्मादिति प्रभवम्। अप्येत्यस्मिन्नित्यप्ययं तच्च तच्च। अनेनाश्रयशब्दार्थो दर्शितः। विज्ञानसंयुतमपरोक्षज्ञानपर्यन्तं ज्ञानम्। तदुपाख्यानं तज्ज्ञानमुपाख्यायते प्रकाश्यते येन तज्ज्ञानसाधनमित्यर्थः ॥४॥

कर्मकाण्डार्थमाह - **व्याख्यात** इति। भक्तियोगश्च साध्यसाधनरूप । तदाश्रयं भक्तियोगेन निष्पादितम्। एवं सामान्यतो निरूप्य इदानीं द्वादशस्कन्धप्रकरणार्थाननुक्रामति। पारीक्षितमुपाख्यानं परीक्षिज्जन्मादि तत्प्रस्तावाय नारदाख्यानश्च ॥५॥

**प्रायोपवेश** इति।ब्रह्मर्षभस्य[5] ब्राह्मणोनमस्य इति प्रथमस्कन्धार्थ ॥६॥

**योगेति**। उत्क्रान्तिरर्चिरादिगतिः। प्राधानिकः प्रधानकार्यविराड्रूप सर्ग[6]। अग्रत आदितो महदादिक्रमेणेत्यर्थः। इति द्वितीयस्कन्धार्थः ॥७॥

**विदुरेति**। महापुरुषस्य संस्थितिः प्रलये तूष्णीमवस्थानम् ॥८॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तदेवं कात्स्न्येन शान्तां बुभुत्सामालक्ष्य सुखग्रहणाय आदित प्रबन्धार्थान् सङ्ग्रहेणाऽनुक्रमिष्यन् तावदस्य प्रबन्धरूपस्य[7] महावाक्यस्यार्थो नारायण एव वेदान्तवेद्यो जगत्कारणभूत ब्रह्मशब्दाभिधेय इति प्रवक्[8] स्वगुरुदेवता नमस्कारपूर्वकं प्रतिजानीते **नम** इति। कृष्णशब्देनाऽत्र भगवान्नारायणो बादरायणो वा विवक्षित । तत्राऽऽद्ये धर्माय सिद्धरूपधर्माय कृष्णाय, द्वितीये धर्मप्रवर्तकाय कृष्णाय, भगवद्भक्तिलक्षणधर्माय चेति वा। वेधसे ब्रह्मणे चतुर्मुखाय ब्राह्मणेभ्यो नारद बादरायणश्रीशुकादिभ्यः शाश्वतानविच्छिन्नोपदेश परम्पराप्राप्तान् धर्मानेतत्प्रबन्धप्रतिपाद्यान् भागवतान्[9] धर्मान् वक्ष्यामि, सङ्ग्रहेणेति शेषः ॥१॥

महावाक्यार्थमाह - **एतदिति**। एतत्कथितं परमाद्भुत पुराणं विष्णोश्चरित्रं चरित्रप्रतिपादकं तद्विशिनष्टि - यत्प्रत्यह भवद्भिः पृष्टः यच्च नराणां जीवानां पुरुषोचितं पुरुषत्वे मनुष्यत्वे सति उचितं श्रवणादियोग्यम् ॥२॥

विष्णोश्चरित्रत्वमेवोपपादयति - **अत्रेति**। अत्र पुराणे श्रवणमात्रेण सर्वाणि पापानि हरतीति तथा हरिराश्रितबन्धहरः

---

1 A.B.J सनातनान्, 2-2 A.B.J omit, 3 ABJ °गुण 4 A B J °र्तित 5 B J ब्रह्मर्षे 6 H V omit सर्ग 7 A B °धस्य, 8 W omits प्र, 9 W °तध°

इन्द्रियाधीशः भगवान् षाड्गुण्यपरिपूर्णः भक्तपालकः श्रीनारायणः कीर्त्यते ॥३॥

तमेव विशिनष्टि - **यदिति**। गुह्यं वेदान्तरहस्यं जगतः प्रभवाप्ययं प्रभवत्यस्मादिति प्रभवम्, अप्येत्यस्मिन्निति अप्ययं तच्च तच्च तत्सृष्टिसंहारकारणमित्यर्थः। अथवा, अवान्तर वाक्यार्थाननुक्रमिष्यं[1] स्तावत्प्रथमस्कन्धार्थाननुक्रमते - **द्वयेन ज्ञानमिति**। अत्रेत्यनुषज्यते। साधूपाख्यानं साधूनां भवतामुपाख्यानं प्रश्नात्मकमुपाख्यानं विज्ञानसंयुतं ज्ञानञ्च प्रोक्तम्। तत्र ज्ञानं प्रकृतिपुरुष विवेचनात्मकं, विज्ञानं परमात्मस्वरूपगुणविचारात्मकम् ॥४॥

तदाश्रयं भक्तियोगाख्यं वैराग्यञ्च समाख्यातम्। पारीक्षितं परीक्षिज्जन्मादिः तावत्तत्प्रस्तावाय नारदस्याऽऽख्यानञ्च ॥५॥

राजर्षेः परीक्षितो विप्रशापात्प्रायोपवेशश्च व्याख्यातशब्दस्याऽनुषक्तस्य यथायोग्यलिङ्गेन विपरिणतस्य प्रथमान्तै - स्सम्बन्धः। अथ द्वितीय स्कन्धार्थाननुक्रमति सार्धेन शुकस्येति। ब्रह्मर्षभस्य ब्राह्मणोत्तमस्य शुकस्य परीक्षिता सह संवाद इति कृत्स्नस्कन्धार्थः ॥६॥

तद[illegible] **योगधारणयेति**। उत्क्रान्ति र्गर्चिरादिना गतिः नारदाऽजयोर्नारदचतुर्मुखयोः संवादः तत्राऽप्यव ताराणामनुगीतमनु[illegible]नम्। अनुचरितमिति पाठे अवतारास्तदनुचरितञ्च अग्रतः व्यष्टिसृष्टेः पूर्वं प्राधानिकः प्राकृतः सर्गः महदादितत्त्वसर्गः ॥७॥

अथ तार्तीयार्थाननुक्रामति - षड्भिः। **विदुरोद्धवसंवाद** इत्यादि तृतीयतुरीयस्कन्धद्वयस्वरूप प्रदर्शनं, पुराणात्मिका या संहिता तस्याः प्रश्नः तदर्थप्रश्नः महापुरुषस्य भगवतः संस्थितिः सम्यक् प्रलयेऽवस्थानम् ॥८॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

उपसंहारमुखेनाऽनुसन्धातुं द्वादशस्कन्धात्मकं भागवतार्थं संक्षिप्य कथयत्यस्मिन्नध्याये **एतद्व** इत्यादिना। एतद्विष्णोश्चरितं तद्वक्तव्यत्वे हेतुमाह - भवद्भिरिति। प्रश्नेन विस्मितं सूचयति - नराणामिति। नराणां मध्ये सतां पुरुषाणां मध्ये श्रोतुमुचितम्। अनेन अधिकारसामर्थ्यं सूचितम् ॥१,२॥

श्रोतव्यार्थे मुख्यहेतुमाह - **अत्रेति**। अत्र श्रीभागवते कस्मान्मुख्यत्वं अत्राऽऽह - **सर्वेति**। वृत्रादिसर्वपापहन्तृत्व मिन्द्रस्याऽप्यस्तीति अत उक्तं नारायण इति। नाऽयं साङ्केतिकनारायण इत्याह - हृषीकेश इति। हृषीकाणामीशो जीवोऽपि स्या दत आह भगवानीति। ऐश्वर्यादिगुणसमुद्रो हि भगवान्, एवं विधो नाऽन्य इत्याह सात्त्वतां पतिरिति ॥३॥

सगुणमेवोक्तं निर्गुणमतं नेत्याह - **यत्तदिति**। जगतः प्रभवाप्ययकृत् यत्परं गुह्यं ब्रह्मतत्प्रोक्तं तद्विषये[2] ज्ञानं सता मुपाख्यानं येन तत् ॥४॥

---

1 W द्वाभ्याम् . 2 AB °षय

सा भक्तिराश्रयो यस्य तत्तदाश्रयम्। अत्रेत्येतत्प्रतिवाक्य मनुसन्धातव्यम् ॥५,६॥

योगधारणया अखण्डस्मरणलक्षणया नारदाजयोर्नारदब्रह्मणोः अवताराणामनुगीतं कथनं प्राधानिकः प्रकृतिसर्गः सिसृक्षुत्वविशेषः ॥७,८॥

ततः प्राकृतिकस्सर्गस्सप्त[1] वैकृतिकाश्च ये।
ततो ब्रह्माण्डसम्भूतिर्वैराजः पुरुषो यतः ॥९॥

कालस्य स्थूलसूक्ष्मस्य गतिः पद्म[2]समुद्भवः।
भुव उद्धरणाम्भोधे[3]र्हिरण्याक्षवधो यतः[4] ॥१०॥

ऊर्ध्वतिर्यग[5]धस्सर्गो रुद्रसर्गस्तथैव च।
अर्धनारीनरस्याऽथ यतः[6] स्वायम्भुवो मनुः ॥११॥

शतरूपा च या स्त्रीणा माद्या प्रकृतिरुत्तमा।
सन्तानो धर्मपत्नीनां कर्दमस्य प्रजापतेः ॥१२॥

अवतारो भगवतः कपिलस्य महात्मनः।
देवहूत्याश्च संवादः कपिलेन च धीमता ॥१३॥

नवब्रह्मसमुत्पत्ति र्दक्षयज्ञविनाशनम्।
ध्रुवस्य[7] चरितं पश्चात् पृथोः प्राचीनबर्हिषः ॥१४॥

नारदस्य च संवादस्ततः प्रैयव्रतं[8] द्विजाः।
नाभेस्ततोऽनु[9]चरितमृषभस्य भरतस्य[9]च ॥१५॥

[10]द्वीपवर्षसमुद्राणां गिरि[10]नद्युपवर्णनम्।
ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः ॥१६॥

**श्रीध० तत** इति। प्राकृतिक प्रकृतिभवो गुणक्षोभरूप । वैकृतिका महदादय , चकाराद्विकाराश्च ये तेषां च सर्गः ॥९॥

---

1 M.Ma 'कास्तथा। 2 W सत्व' 3 B G H J V 'णेऽम्भोधे' 4 A B G J यथा 5 A B G H J V गवाक्सर्गो, 6 H V यत्र, MMa यथा', 7 H V चैव, 8 W व्रतो, 9–9 H V 'तभरतस्य र्षभस्य च W 'नभरतस्यार्षभस्य च, 10–10 W ततो द्वीपसमुद्रादिवर्णन'

**कालस्येति**। गतिः स्वरूपम्। उद्धरणे उद्धारणे ॥१०॥

**ऊर्ध्वेति**। अर्धाभ्यां नारी च नरश्च तस्य सर्गः[1] ॥११॥

**शतरूपेति**। सन्तानो धर्मपत्नीनामिति नवब्रह्मसमुत्पत्तिरित्यस्याऽनन्तरं [2]द्रष्टव्यम् इति[2] तृतीयस्कन्धार्थः ॥१२,१३॥

चतुर्थस्कन्धार्थ माह **नवेति**। नवब्रह्मणां मरीच्यादीनां समुत्पत्तिः सन्तानः ॥१४॥

पञ्चमस्कन्धार्थ माह **नारदस्येति**। तत इति। [3]ततः प्रैयव्रतं प्रियव्रतस्य चरितम् ॥१५॥

**द्वीपेति**। द्वीपाद्युपवर्णनं प्रथमं संक्षेपतस्ततो द्वीपादीनां ये गिरयो नद्यश्च तेषा मुपवर्णनम्। पाता[4]ल नरकादीना[5]ञ्च स्थितिः। अनेनैव नरकनिवर्तक मजामिलोपाख्यानं गृहीतं ततः पराचीनम् ॥१६॥

**वीर०** प्राकृतिक प्रकृतिगुणक्षोभात्मकः ततो वैकृतिकाः सप्त महदहङ्कार भूतपञ्चकात्मका व्याख्याता इत्यर्थः। तत स्तेभ्यो वैकृतिकेभ्यो ब्रह्माण्डस्योत्पत्ति तद्विशिनष्टि यतो यत्र ब्रह्माण्डे [6]ब्रह्मा वैराजः पुरुषः चतुर्मु[7]खाज्जात इत्यर्थः। स्थूलसूक्ष्मस्य परमाण्वादिवत्सरान्त सूक्ष्मस्थूल रूपेणाऽवस्थितस्य कालस्य गतिः सर्वेषां सत्वानां व्यष्टिभूतानामुत्पत्तिः अम्भोधेः भुव उद्धरणा उद्धरणम् ॥९,१०॥

ऊर्ध्वतिर्यगधस्सर्गः देवतिर्यगधोलोकसर्ग अर्धाभ्यां नारी नरश्च तयो स्समाहारः तत्तस्य सर्गः तद्विशिनष्टि - यतः यत्र नारीनरे स्वायम्भुवो मनु ॥११॥

तस्य या पत्नी शतरूपा स्त्रीणामाद्या प्रकृतिराकृतिरत एवोत्तमा तस्य नारीनरस्य सर्ग इति सम्बन्धः। ततः कर्दमस्य। धर्मपत्नीनामिति बहुवचनं पूज्याभिप्रायकम्। धर्मपत्न्या देवहूत्याः सन्तानः कलाऽनसूयादिनवकन्यकारूपः सन्तानः तथा कपिलाख्यस्य भगवतोऽवतारः, कपिलेन साकं देवहूत्यास्सं[8]वादश्चोक्त इत्यर्थ ॥१२,१३॥

अथ चतुर्थार्थानुक्रामति - नवब्रह्म समुत्पत्तिरित्यादिना, नारदस्य च संवाद इत्यन्तेन। पञ्चमार्था ननुक्रमते प्रैयव्रत इत्यादिना, पातालनरकस्थितिरित्यन्तेन। द्विजा इति सम्बोधनम्। प्रैयव्रतः प्रियव्रतवृत्तान्तः आर्षभस्य भरतस्य चाऽनुचरितमिति सम्बन्धः ॥१४,१५॥

द्वीपादीनामुपवर्णनम् ॥१६॥

**विज०** प्राकृतिकः प्रकृतिविकृतः ते सप्त महदहङ्कार पञ्चभूतानीति। वैकृतिकाः इन्द्रियविषयाः यतो यत्र ब्रह्माण्डे ॥९॥

1 H V omit सर्गः. 2--2 H V omit. 3 H V omit ततः. 4 A B J 'लानां न' 5 A B J add स. 6 W omits ब्रह्मा. 7 W 'खो जात 8 W 'वाद

पद्मसमुद्भवो नाभेरिति शेषः, अम्भोधेः भुव उद्धरणा उद्धारः ॥१०॥

ऊर्ध्वतिर्यगधस्सर्गः देवतिर्यगसुरसृष्टिः अर्धनारीनरस्य ब्रह्मणः सकाशात्स्वायम्भुवो मनुर्यथोत्पन्नस्तथा ॥११॥

या स्त्रीणां मध्ये आद्या प्रकृतिः स्त्री सा शतरूपा च यथोत्पन्ना तथा ॥१२,१३॥

नवब्रह्मसमुत्पत्तिः नवप्रजापतीनां मरीच्यादीनां सकाशात्सृष्टिः तेषामुत्पत्तिर्वा ॥१४-१६॥

दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणाञ्च[1] सन्ततिः[2] ।
यतो देवासुरनरा स्तिर्यङ्[3]नागखगादयः ॥१७॥

त्वाष्ट्रस्य जन्मनिधनं पुत्रयोश्च दितेर्द्विजाः ।
दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः ॥१८॥

मन्वन्तरानु[4]चरितं गजेन्द्रस्य[5] विमोक्षणम् ।
मन्वन्तरावताराश्च[6] विष्णोर्हयशिरादयः ॥१९॥

[8]कौर्मं [9]मात्स्यं नारसिं[7]हं वामनञ्च जगत्पतीः ।
क्षीरोद[10]मथनं तद्व[11]दमृतार्थे दिवौकसाम् ॥२०॥

देवासुरमहायुद्धं राजवंशानुकीर्तनम् ।
इक्ष्वाकुजन्म तद्वं[12]शे सुद्युम्नस्य महात्मनः ॥२१॥

इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च ।
सूर्यवंशानु[13]कथनं शशादाद्या[14]नृपा यतः ॥२२॥

सौकन्यञ्चा[15]ऽथ शर्यातेः ककुत्स्थस्य च धीमतः ।
खट्वाङ्गस्य च मान्धातुस्सौभरे स्सगरस्य च ॥२३॥

[16]रामस्य कोसलेन्द्रस्य चरितं किल्बिषापह[16]म् ।
निमेरङ्गपरित्यागो जनकानाञ्च सम्भवः ॥२४॥

---

1 MMa °त्पुत्राणाञ्च 2 W सम्स्थिति 3 A B G J M Ma °ङ्नग° 4 B G J कथन 5 H V च 6 H V °श्च 7 H V °गादय° . 8 MMa कौर्म्यं,
9- -9 B G J धान्वन्तरं मात्स्य . 10 W मन्थन 11 MMa °तार्थं 12 A B G J M Ma तद्वंशे 13 H V चरित 14 B G J नृगादय . MMa नृपादय .
15 M Ma °मथ शार्यातं 16- -16 M Ma कोसलेन्द्रस्य चरितमद्भुत किल्बि षापहम्

**श्रीध०** षष्ठ स्कन्धार्थमाह **दक्षजन्मेति** ॥१७॥

**त्वाष्ट्रस्येति**। सप्तम स्कन्धार्थमाह - पुत्रयोश्चेति ॥१८॥

अष्टमस्कन्धार्थमाह - **मन्वन्तरानुकथनमिति**। क्वचित्कस्यचिदनुक्तिर्व्युत्क्रमोक्तिश्च भक्तिरसानु कूलत्वेनेति द्रष्टव्यम् ॥१९,२०॥

**देवासुरेति**। नवमस्कन्धार्थमाह - राजवंशेति ॥२१-२४॥

**वीर०** षष्ठार्थान[1]नु[2]क्रामति सार्धेन **दक्षजन्मेति**। तत्पुत्रीणां दक्षपुत्रीणम्। ताः विशिनष्टि - यतो याभ्यो दक्षपुत्रीभ्यो देवादयो बभूवुरित्यर्थः ॥१७॥

त्वाष्ट्रस्य वृत्रासुरस्य जन्म, निधनं मरणञ्च अथ सप्तमार्थाननुक्रमति पुत्रयोश्चेति [3]दैत्येश्वरस्येत्यर्धेन। हिरण्यकशिपोः [3]प्रह्लादस्य चरितम् ॥१८॥

अष्टमार्थानाह [4]**मन्वन्तरेत्यादिना** देवासुर महायुद्धमित्यन्ते[4]न। विष्णोः हयग्रीवादयः मन्वन्तरेष्ववताराः ॥१९॥

तथा जगत्पते कौर्मादीनि रूपाणि दिवौकसां देवादीनाममृतार्थे क्षीरोदमन्थनम् ॥२०॥

नवमार्थाननुक्रमते - राजवंशानुकीर्तनमित्यादिना, [5]वृद्धिश्च गोकुले इत्यन्ते[5]न। अत्र क्वचित्कस्य चिदनुक्तिः व्युत्क्रमोक्तिश्च प्रसिद्धिकृ[6]तादनादरात् इति [6]ज्ञेयम्। तद्वंशे इक्ष्वाकुवंशे ॥२१,२२॥

[7]सौकन्यं सुकन्याचरितम्[7] ॥२३,२४॥

**विज०** यतस्सन्ततेः देवासुरनरादयः आसन् ॥१७,१८॥

मन्वन्तरानुचरितं मन्वन्तरराजानुचरितम् ॥१९-२१॥

तारोपाख्यानं ताराया देव्या उपाख्यानम् ॥२२॥

सौकन्यं सुकन्यायाश्चरितम्, ककुत्स्थस्य चरितम् ॥२३,२४॥

**रामस्य भार्गवेन्द्रस्य नि[8]क्षत्रीकरणं भुवः।**
**ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च ॥२५॥**

**दौष्यन्तेर्भरतस्याऽपि शन्तनोस्तत्सुतस्य च।**
**ययातेर्ज्येष्ठपुत्रस्य यदोर्वं[9]शोऽनुकीर्तितः ॥२६॥**

---

1 W षष्ठानर्था॰. 2 W क्रमते. 3-3 W omits. 4-4 W मन्वन्तरेति। 5-5 W omits. 6-6 W omits. 7-7 W omits. 8 A B G J 'क्षत्र'. 9 H V 'शानुकीर्तनम्

यत्राऽवतीर्णो भगवान्कृष्णाख्यो जगदीश्वरः ।
वसुदेवगृहे [1] जन्म तस्य वृद्धिश्च गोकुले ॥२७॥

तस्य [2] कर्माण्युदाराणि कीर्तितान्यसुरद्विषः ।
पूतनासुपयःपानं [3] शकटोच्चाटनं शिशोः ॥२८॥

तृणावर्तस्य निष्पेष [4] स्तथैव बकवत्सयोः ।
* [5] अघासुरासुसंहारः कस्य माया प्रदर्शनम् ।
धेनुकस्य सहभ्रातुः प्रलम्बस्य च संक्षयः ॥२९॥

गोपानाञ्च परित्राणं दावाग्नेः परिसर्पतः ।
दमनं कालियस्या[6]ऽहेः महाहेर्नन्दमोक्षणम् ॥३०॥

व्रतचर्या [7] च कन्यानां यत्र [8] तुष्टोऽच्युतो व्रतैः [8] ।
प्रसादो [9] यज्ञपत्नीभ्यो विप्राणाञ्चाऽनुतापनम् ॥३१॥

[10] गोवर्धनोद्धारणञ्च शक्रस्य सुरभेरथ ।
यज्ञाभिषेकं कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥३२॥

**श्रीध० रामस्येति** । सोमवंशा[11]दुद्भूत[12]स्यैलस्य च[12] ययातेर्नहुषस्य चरितम् ॥२५॥

**दौष्यन्तेरिति** । तत्सुतस्य भीष्मस्य ॥२६, २७॥

दशमस्कन्धार्थ माह - **तस्य कर्माणीति** । पूतनाया [13] असुरस्त्रितस्य स्तन्यपयस [13] पानम् ॥२८॥

**तृणावर्तस्येति** । सहभ्रातुः ससखस्य ॥२९-३१॥

**गोवर्धनेति** । यज्ञाभिषेकं यज्ञः [14] पूजा अभिषेकाश्च, तयोर्द्वन्द्वैक्यम् ॥३२॥

**वीर० अथ दशमार्थाननुक्रामति तस्य कर्माणी**त्यादिना विप्रशापोपदेशोनेत्यतः प्राक्तनेन ग्रन्थेन ॥२५-२८॥

निष्पेषो वधः । अघासुरस्याऽसुसंहारः प्राणापहारः कस्य चतुर्मुखस्य [15] स्वमाया प्रदर्शनं, सहभ्रातुः सबलस्य धेनुकस्य प्रलम्बस्य च संक्षयः वधः । परिसर्पतो दवाग्नेः सकाशाद्गोपानां परित्राणं दमनमनुशिक्षणम् । अहो इत्याश्चर्ये । नन्दस्य वरुणस्य

1 A.B G J W ततो, 2 A B G J M Ma ॰ण्यपाराणि, 3 W ॰त्पाटन, 4 H V स्तदैव * This half verse is not found in AGJ MMa Editions 5 H V ॰रस्य, 6 W Sहो॰, 7 A B G J तु, 8- -8 M Ma व्रतै प्रभु, 9 H V विप्र॰ 10 W नम्याद्धारणम् श॰ 11 A B J ॰दिभू॰ 12- -12 ABJ omit 13- -13 H V ॰तस्तन्यपानम्, 14 A omits पूजा 15 W omits स्व

मोक्षणं, सकाशादिति शेषः। कन्यानां गोपकन्यानां व्रतचर्या, तां विशिनष्टि, यतो यस्यां व्रजैरच्युतस्तुष्टः यज्ञपत्नीभ्य इति चतुर्थ्यन्तं, प्रसादोऽनुग्रहः, शक्रस्येत्यस्य परिभवायेति शेषः, यज्ञाभिषेकः यज्ञः पूजा अभिषेकश्च, तयोर्द्वन्द्वैक्यम् ॥२९-३२॥

**विज०** सोमवंशोद्भवस्य ऐलस्यैलाह्वयपुत्रस्य चरितम् ॥२५-३०॥

यत्र व्रतचर्यायम् ॥३१॥

यज्ञः पूजा अभिषेकः तयोर्द्वन्द्वैक्यम् ॥३२॥

**शङ्खचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः।**
**अक्रूरागमनं पश्चात् प्रस्थानं रामकृष्णयोः ॥३३॥**

**व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः।**
**गजमुष्टिकचाणूरकंसादीनां तथा वधः ॥३४॥**

**मृतस्याऽऽनयनं सूनोः पुनस्सान्दीपनेर्गुरोः।**
**मधुरायां निवसता यदुचक्रस्य यत्प्रियम् ॥**
**कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥३५॥**

**जरासन्धसमानीतसैन्यस्य बहुशो वधः।**
**घातनं यवनेन्द्रस्य कुशस्थल्या निवेशनम् ॥३६॥**

**आदानं पारिजातस्य सुधर्मायाः सुरालयात्।**
**रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः ॥३७॥**

**हरस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम्।**
**प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणञ्च यत् ॥३८॥**

**चैद्यपौण्ड्रकसाल्वानां दन्तवक्त्रस्य दुर्मतेः।**
**शम्बरो द्विविदः पीठो मुरः पञ्चजनादयः ॥३९॥**

**माहात्म्यञ्च वधस्तेषां वाराणस्याश्च दाहनम्।**
**भारावतरणं भूमेः निमित्तीकृत्य पाण्डवान् ॥४०॥**

---

1 ABGHJV बधो 2 ABGJMMa मधु 3 MMa पातन 4 HV ण तथा। 5 ABGJMMa शा

**श्रीध० आदाममिति।** द्विषतः शत्रून् प्रमथ्य ॥३३-३७॥

**चैद्य इति।** ये च शम्बरादयस्तेषां महात्म्यं प्रभावो वधश्च ॥३९,४०॥

**वीर०** गजः कुवलयापीडाख्यः। सान्दीपनेर्गुरोः पुत्रस्य मृतस्य पुनरानयनं, [1]यमस्य सकाशादिति शेषः[1]। [2]मधुरायामिति। हे द्विजाः! उद्धवरामाभ्यां युतेन हरिणा [3]मधुरायां निवसता यदूनां समूहस्य यत्प्रियं कृतं तच्च यवनेन्द्रस्य कालयवनस्य, [4]कुशस्थल्यां[4] द्वारकायाम् ॥३३-३६॥

सुधर्मायाश्चाऽऽदानमिति सम्बन्धः। द्विषतश्शत्रून् प्रमथ्य हरे र्हरिणा रुक्मिण्या हरणम् ॥३७॥

प्राग्ज्योतिषपतिं भौमम् ॥३८॥

ये शम्बरादयः तेषां माहात्म्यं, वधश्चेति सम्बन्धः ॥३९॥

निमित्तीकृत्य द्वारीकृत्य ॥४०॥

**विज०** दाहनं दहनम् ॥३३-४०॥

**वि[5]प्रशापापदेशेन संहारः स्वकुलस्य च।**
**[6]वासुदेवस्य संवादो नारदेन[6] सुरर्षिणा॥**
**उद्धवस्य च संवादो वासुदेवस्य चाऽद्भुतः ॥४१॥**

**यत्राऽऽत्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः।**
**ततो मर्त्यपरित्याग आत्मयोगानुभावतः ॥४२॥**

**युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः।**
**चतुर्विधश्च प्रलय उत्पत्ति[7]स्त्रिविधा तथा ॥४३॥**

**देहत्यागश्च [8]राजर्षेर्विष्णुरातस्य धीमतः।**
**शाखाप्रणयनमृषेर्मार्कण्डेयस्य सत्कथा।**
**महापुरुषविन्यासस्सूर्यस्य जगदात्मनः ॥४४॥**

**इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽह मिहास्मि वः।**
**लीलावतारकर्माणि कीर्तिता[10]नीह सर्वशः ॥४५॥**

---

1--1 W omits, 2 AB °धु, 3 AB °धु 4-4 W omits 5 HV ? 6-6 ABGJ W omit 7 MMe °या, 8 HV स्मृता, 9 MMe [illegible], 10. AW °ते

**पतितः स्खलितो वाऽऽर्तः क्षुत्वा वा विवशो ब्रुवन् ।**
**हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥४६॥**

**सङ्कीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम् ।**
**प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवाऽतिवातः ॥४७॥**

**मृषागिरस्ता ह्यसतीरसत्कथा न कथ्यते यद्भगवानधोक्षजः ।**
**तदेव सत्यं तदुहैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम् ॥४८॥**

**श्रीध०** एकादशस्कन्धार्थमाह- **विप्रशापेति** ॥४१॥

**यत्रेति** । धर्मविनिर्णयो वर्णाश्रमधर्मविनिश्चयः मर्त्यपरित्यागो मनुष्यत्वस्यान्तर्धानम् ॥४२॥

द्वादशस्कन्धार्थमाह - **युगेति** । युगलक्षणं तदनुरूपा वृत्तिश्चेत्यर्थः । त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥४३॥

**देहत्यागेति** । कर्षव्योमस्य सूर्यस्य च विन्यास इत्यर्थः ॥४४॥

**इतीति** । इति चोक्तमिति चकारादन्यदपि वो युष्माभिरिह यत्पृष्टोऽस्मि तदुक्तमिति । ननु किमेवं नानार्थकथनेन तत्राऽऽह - लीलेति । सर्वशः तत्तदर्थकीर्तनद्वारेणेत्यर्थः ॥४५॥

एतत्कीर्तनेनाऽपि किमित्यपेक्षायां तत्फलमाह द्वाभ्याम् **पतित** इति । पतितः कूपादिषु स्खलितः सोपानादिषु । आर्तो दुःखितः । क्षुत्वा क्षुतं कृत्वा विवशोऽपि ॥४६॥

**सङ्कीर्त्यमान** इति । सङ्कीर्त्यमानो यद्वा श्रुतोऽनुभावो यस्य स पुंसां चित्तं प्रविश्य निश्शेषं दुःखं विधुनोति । हीति सतामनुभवं प्रमाणयति । अर्को गिरि गुहादिध्वान्तं न धुनोति निवर्तयति इत्यपरितोषा दृष्टान्तान्तरमाह- अतिवातोऽभ्रमिवेति ॥४७॥

हरिसङ्कीर्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति **मृषा गिर** इति चतुर्भिः । मृषागिरो मिथ्यावाचः । असतीरसत्यः । असतां कथा यासु ताः यद्यासु उत्तमश्लोकस्य यशोऽनु गीयत इति यत्तदेव सत्यं तदेव हि मङ्गलम् । उ ह इति हर्षे, भगवद्गुणानामुदयो यस्मा तत् ॥४८॥

**वीर०** एकादशार्थाननुक्रमते - **विप्रशापेति** द्वाभ्याम् । अपदेशो व्याजस्तेन ॥४१॥

---

1 BGJ तत्राऽऽर्त, 2 HV ०ऽपि, 3 HV कै 4 W स्तद्ध, 5 ABJ omit ननु 6 ABJ तत् 7 HV omit धुनोति, 8 ABJ omit निवर्तयति, 9 HV लपम

**संवादं विशिनष्टि - यत्रेति**। धर्मविनिर्णयः वर्णाश्रमधर्म निर्णयः मर्त्यपरित्यागः, मर्त्यलोकपरित्यागः। भूमिपरित्याग इति पाठान्तरम् ॥४२॥

**द्वादशार्था ननुक्रमते - युगेति** (सार्धद्वयेन)। युगलक्षणानि तेषु वृत्तयश्च उपप्लव. कलिदौषै रुपद्रव चतुर्विध· प्राकृतिको नैमित्तिकः आत्यन्तिको नित्यश्चेति चतुर्विध.। प्रलय. त्रिविधा प्राकृतिकी नित्या नैमित्तिकी चेति त्रिविधा, उत्पत्ति· ॥४३॥

विष्णुदत्तस्य परीक्षितः महापुरुषविन्यासः अङ्गोपाङ्गादिविन्यास जगदात्मन लोकयात्राप्रवर्तनेन नियामकस्य सूर्यस्य गणविभाग इत्यर्थः। इति चोक्तमिति चकारादन्यदपि। हे द्विजश्रेष्ठा ! वो युष्माभि यत्प्रति अह पृष्टोऽस्मि, तदुक्तम्। इतीत्थं, इह पुराणे सर्वशः कात्स्न्र्येन हरेर्लीलारूपाणि अवतारकर्माणि एव कीर्तितानि ॥४४,४५॥

एतत्पुराण कथनश्रवणफलं वक्तुं भगवत्कीर्तन श्रवणानुभावमाह - **पतित** इति। क्षुत्त्वा क्षुत्कृत्य। श्रुत्वेति वा पाठ। तदा हरये नम इति श्रुत्वेत्यर्थ·। हरये नम इत्युच्चैर्बुवन्निति सम्बन्ध ॥४६॥

किञ्च। **सङ्कीर्त्यमान** इति। श्रुतोऽनुभावो यस्य तथा भूतो वा हरि· पुंसा सङ्कीर्तयता शृण्वता वाऽन्त· चित्त प्रविश्य अशेषं व्यसनं दुःखं, तद्धेतुदुरितं वा धुनोति। यथाऽर्कः सूर्य तमो धुनोति। यथा वाऽतिवात· चण्डवायुरभ्र धुनोति, तद्वत् ॥४७॥

किञ्च। भगवत्सङ्कीर्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति चतुर्भि **मृषागिर** इति। यद्य। भगवानधोक्षजो न कथ्यते न प्रतिपाद्यते ता मृषागिर· मिथ्यावाच प्रत्युत असती रसत्य दोषावहा यद्भगवद्गुणानामुदय प्रकाशो यस्मिन् तत् यत् वच तदेव सत्यं मङ्गलावहं पुण्यावहञ्च अत्यादरात्प्रतिपदं तच्छब्दप्रयोग ॥४८॥

**विज०** यत्रोद्धववासुदेवसंवादे आत्मविद्या· परमात्मविद्या अखिला अनुयोगतत्प्रोक्ता वर्णाश्रमविनिर्णयश्चोक्त ॥४१,४२

युगलक्षणं, तदनुरूपा वृत्तिश्च उपप्लवो नाश रागमादिभेदेनोत्पत्ति त्रिविधा प्राकृतिकी, नैमित्तिकी, नित्या वा ॥४३॥

विष्णुदत्तस्य परीक्षित. महापुरुष विन्यास महापुरुषस्य अङ्गोपाङ्गादि स्थितिविशेष सूर्यस्य स्थितिश्च इति सा [illegible] पर्यन्तं सर्वमुक्तम् ॥४४,४५॥

क्षुत्त्वा क्षुतं कृत्वा ॥४६॥

अतिशयितो वात· अभ्रं सनीरं नीरदमिव ॥४७॥

---

1- -1 W omits 2- -2 W omits 3 W omits इत्यर्थं। 4 W omits वो 5 W omits इतीत्थम् 6 W omits एतत्. [illegible] W [illegible]
8 A B omit तत् यत्

अधोऽक्षजो भगवान् याभिर्गीर्भिः न कीर्त्यते, ता गिरोऽसत्कथाः मृषा निष्फलाः, असतीरसत्योऽमङ्गलाः। यद्वचो भगवद्गुणोदयं तदेव सत्यं यथोक्तफलम् ॥४८॥

[1]तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम्।
तदेव शोकार्णव शोषणं नृणां [2]यदुत्तमश्लोकयशोऽनुगीयते ॥४९॥

न [3]यद्वचश्चित्रपदं हरेर्यशो जगत्पवित्रं [4]प्रगृणीत कर्हिचित्[4]।
तद्ध्वाङ्क्षतीर्थं न तु हंससेवितं यत्राऽच्युतस्तत्र हि [5]साधवोऽमलाः ॥५०॥

[6]स वाग्विसर्गो जनताघ[7]विप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि।
नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥५१॥

नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्।
कुतः पुनश्शश्वदभद्रमीश्वरे न [8]चार्पितं [9]कर्म यदप्यनुत्तमम् ॥५२॥

यशः श्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु।
अविस्मृतिः श्रीधरपादपद्मयोर्गुणानु[10]वाद[11]श्रवणादिभिर्हरेः ॥५३॥

अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च।
सत्त्वस्य शुद्धिं [12]परमात्म भक्तिं ज्ञानञ्च [13]विज्ञानविरागयुक्तम् ॥५४॥

यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम्।
नारायणं देव[14]मदेवमीश[14]मजस्र[15]भावा भजताऽधिवेश्य ॥५५॥

अहञ्च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात्।
प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महताञ्च शृण्वताम् ॥५६॥

**श्रीध० तदिति।** नवं नवं यथा भवति तथा रुचिरं रुचिप्रदम्। महानुत्सवो यस्मात् ॥४९॥

उपक्रमोपसंहारयोः एकरूपता प्रदर्शनाय पूर्वोक्ता एव श्लोकाः पठ्यन्ते **नेति**। चित्राणि पदानि यस्मिन्। तदपि जग-

---

1 M Ma पुण्यं, 2 M Ma यत्रो°, 3 B G J त°, 4--4 M Ma यदि कर्हिचिद्वदेत्।, 5 H V जना, 6 A W तद्वाग्वि°, 7 B G J स 8 A B G J च°
9 M Ma °प्यकारणम्, 10 M Ma °द 11 H V °णादरादिभि, 12 B G J W °मात्म, 13 H V विरक्ति° 14--14 H V °मनन्यभावा, M Ma °मबाह्य भावा, W °मबाह्य भाजो 15 A B G J °तावि W ताऽधि°

त्पवित्रयतीति तथा तद्धरेर्यशो न प्रगृणीत न वर्णयेत्, तद्वचो ध्वाङ्क्षतीर्थं काकतुल्यनराणां रतिस्थानं, न तु **हंसैर्ज्ञानिभि स्सेवितम्**। **तत्र हेतुः यत्रेति** ॥५०॥

**स इति**। स वाग्विसर्गः स एव वाचः प्रयोगो जनताघविप्लवो[1] जनसमूहाघनाशकः। यद्यस्मात् तान्येवाऽन्यैः[2] कीर्त्यमानानि शृण्वन्ति, श्रोतरि सति गायन्ति, नो चेत्स्वयमेव गृणन्ति ॥५१॥

इदानीं ज्ञानकर्मादरादपि भगवत्कीर्तनादिष्वेव आदरः कर्तव्य इत्याह त्रिभिः **नैष्कर्म्यमिति**। नैष्कर्म्यं ब्रह्म तत्प्रकाशकं यज्ज्ञानं यतो निरञ्जनमुपाधिनिवर्तकं तदप्यच्युतभक्ति वर्जितं चेत्, न शोभते नाऽपरोक्षपर्यन्तं भवतीत्यर्थः। ईश्वरे न चेदर्पितं तर्हि यदनुत्तमं सर्वोत्तममपि कर्म तदपि पुनः कुतश्शोभते। यतः शश्वत्साधनकाले[3] फलकाले[3] चाऽभद्रं दुःखात्मकम् ॥५२॥

किञ्च **यशश्श्रियामिति**। वर्णाश्रमाचारादिषु यः परो महान् परिश्रमः स यशो युक्तायां श्रियामेव।[4] कीर्तिः सम्पत्तिश्च केवलं[4] न[5] परम पुरुषार्थ[5] इत्यर्थः[6]। गुणानुवादादिभिस्तु श्रीधरपादपद्मयोगविस्मृतिर्भवति ॥५३॥

ततः किमत आह - **अविस्मृति रिति**। क्षिणोति नाशयति ॥५४॥

अथेदानीं श्रोतृ[6]नात्मानं चाभिनन्दन्नाह **यूयमिति** द्वाभ्याम् हे द्विजाग्र्याः! यद्यस्मात् आत्मन्यन्त करणे श्रीनारायण[7]मधिवेश्य शश्वद्भजत। सम्भावनायां लोट्। अतो भूरिभागाः बहुपुण्याः। कथम्भूतम्? अखिलात्मभूतं सर्वान्तर्यामिणम्। अत एव देवं सर्वोपास्यम्। अदेवम्, न देवोऽन्यो यस्य तम्। कुतः? ईशम्। यद्वा, यस्माद्यूयं भूरिभागाः तपआदिसम्पन्नाः ततो नारायणं भजतेति विधिः ॥५५॥

**अहमिति**। मे मया श्रुतम् ॥५६॥

**वीर०** [8]रमणीयं नवं नवं रुचिरं रुचिजनकं तदेव शश्वत्सदा मनसो महोत्सवं महानन्दकरं शोकार्णवस्य शोषणं किं तत् यद्यत्र उत्तमश्लोकस्य [9]भगवतो यशोऽनुवर्ण्यते, भगवद्गुणोदयमित्युक्तत्वे प्यादरात्पुनरुक्तम् ॥४९॥

एत देव भङ्ग्यन्तरेणाऽऽह द्वाभ्याम् - **नेति**। यद्वचः चित्राणि पदानि यस्मिंस्तथाभूत मपि जगत्पावित्रं हरेर्यशः कीर्तिं न वक्ति न प्रतिपादयति, तद्वचः ध्वाङ्क्षतीर्थं काकतुल्यानां कामिनां रतिस्थानं, न तु हंससदृशैः ज्ञानिभिः सेवितम्, तत्र हेतुः - यत्र प्रबन्धे, अच्युतः प्रतिपाद्य इति शेषः, तत्रैव ह्यमलाः निर्मलान्तःकरणाः साधवः रमन्त इति शेषः ॥५०॥

तद्वाग्विसर्गः स एव वाचः प्रयोगः जनतायाः जनसमूहस्य अघविप्लवः पापविनाशकः।[10] कोऽसौ? यस्मिन्वाग्विसर्गे प्रतिश्लोक मबद्धवत्यपि अबद्धप्रयुक्ते[11]ऽपि अनन्तस्य भगवतो यशसा अङ्कितानि यशःप्रकाशकानि नामानि वर्तन्ते, यत एव

---

1 A.B.J. सम्प्लवो, 2 H V 'व अ', 3- -3 H V omits फलकाले 4 -4 H V कीर्तं सम्पत् द च 5 5 A B J पर पुरुषार्थ 6 H V 'नन्दय' 7 A B J "माधि", 8. W omits रमणीय, 9 W omits भगवत 10 W अघ 11 W omits ऽ

मतस्साधवः तद्वाग्विसर्गं शृण्वन्ति, वक्तृसान्निध्ये श्रोतृसान्निध्ये सति कथयन्ति, तदुभयविरहे केवलं गायन्तीत्यर्थः[1] ॥५१॥

विशुद्धज्ञानयोगनिष्ठाऽपि भगवद्गुणादिश्रवणादिविधुरा न शोभते, किम्पुनः कर्मयोगनिष्ठेत्याह - **नैष्कर्म्यमिति**। निर्गतं कर्म यस्मात्तत् निष्कर्म, तदेव नैष्कर्म्यम्, सकलकर्मबन्धविध्वंसकमित्यर्थः। तन्निरञ्जनं प्रकृतिसम्बन्धध्वंसकम् अत एव निर्मलं ज्ञान मपि अच्युतभाववर्जित मच्युतगुणानुश्रवणाद्यभि सन्धिविधुरञ्चेत्, अलं नितरां न शोभते, ततः प्रच्युतिसम्भावनयेति भावः। यतो ज्ञानमेवाऽलं न शोभते, कुतः पुनः कर्म शोभेत? कथम्भूतम्? ईश्वरे न चाऽर्पितं नाऽर्पितं अत एव शश्वत्सदा अभद्र मनुष्ठान दशायाञ्च पतनशङ्कया दुःखावहम्। किं बहुना, यदप्यनुत्तमं सर्वोत्तम मपि कर्म कुतः पुनः शोभेत? अहैतुक मिति पाठे अनभिसंहितफलमपीत्यर्थः ॥५२॥

किञ्च, **यशःश्रियामिति**। यशोयुक्ता या श्रीः सम्पत् तस्यां निमित्तभूतायां, तदर्थमित्यर्थः। यो वर्णाश्रमधर्म तपोऽध्ययनादिषु, निष्ठाविशेष इति शेषः। स परो महान् परिश्रमः परिश्रमफलक एव यशःश्रियोः क्षयिष्णुत्वेन पुरुषार्था भासत्वा दिति भावः। तर्हि तस्य किं फल मित्यत्राऽऽह - गुणानुवादश्रवणादरादिभिः श्रीधरपादपद्मयो रविस्मृतिः, यदि वर्णाश्रमाचारादिषु निष्ठा तर्हि तया भगवद्गुणानुवादादिभिः भवितव्यं, ततस्तत्पादपद्मयोरविस्मृत्या एवञ्चेत्तन्निष्ठा सफलेत्यर्थः ॥५३॥

किमविस्मृत्येत्यत आह - **अविस्मृतिरिति**। अभद्राणि दुःखनिमित्तानि दुरितानि धुनोति शमं शान्तिं रागाद्यकलुषिताञ्च तनोति। सत्त्वस्य शुद्धिं रजस्तमोभ्यामनभिभूतिं, सत्त्वगुणाभिवृद्धिमिति यावत्। ततः परमां भक्तिं प्रेमलक्षणां, ज्ञानं यथावस्थितभगवत्स्वरूपज्ञानं [illegible] ज्ञानेन प्रकारज्ञानेन विरागेण तदितरविषयान्तरवैमुख्येन च युक्तं, तनोतीत्यनुषङ्गः ॥५४॥

यतो भगवद्गुणानुवादादिर्महाफलस्ततो यूयमहञ्च कृतार्था बभूविमेत्याह द्वाभ्याम्- **यूय मिति**। हे द्विजाग्र्याः! यूयं भूरिभागाः महाभाग्यवन्तः। कुतः? यत् यतः अबाह्यभाजः न बाह्यानि विषयान्तराणि भजन्तीति अबाह्यभाजः, बाह्यविषयचिन्तारहिता इत्यर्थः। नारायणमात्मनि हृदये अभिनिवेश्य तद्गुणश्रवणादिद्वारा मनसि स्थिरं कृत्वा अभजत, लोट् मध्यम पुरुषबहुवचनम्। कथम्भूतम्? अखिलानां अन्तरात्मभूतं देवं स्वतेजसा दीप्यमानम्, अदेवं यस्याऽऽराधनीयो देवो नाऽस्ति इति[2]। तं अत एव ईशं सर्वनियन्तारम् ॥५५॥

यूयं महोपकर्तार इत्यभिप्रेत्याऽऽह - **अह मिति**। युष्माभिः संस्मारितम् आत्मतत्त्वमात्मतत्त्वप्रकाशकं पुराणं यस्य सोऽहं च कृतार्थ इति भावः। स्मृतेरनुभूतविषयज्ञानात्मकत्वात् क्वेदं श्रुतं त्वयेत्यत्राऽऽह - श्रुत मिति। मे मया महर्षिवक्त्रात् श्रीशुकमुखात् महतामृषीणाञ्च शृण्वतां सतां [3]परीक्षितः प्रायोपवेशे सभायां[3] मया श्रुतमिति सम्बन्धः ॥५६॥

---

1. omits इत्यर्थः 1, 2 W omits इति 3--3 W omits

**विज०** पुनरपि स्तौति - **तदेवेति**। तदेव पुण्यं पुण्यकरं रुचिरं सुन्दरं महानुत्सवो येन त त्तथा ॥४९॥

न यद्वच इत्यादिश्लोकत्रयं व्याख्यातार्थम् ॥५०-५२॥

ननु वर्णाश्रमाचारादिना निःश्रेयसं स्यात् वर्णाश्रमाचारयुतो गृहस्थोऽपि विमुच्यत इत्यतोऽच्युतभावेन किं? तत्राऽऽह - **यश इति**। यद्यच्युतभाववर्जितस्तर्हि वर्णाश्रमाचारतपःश्रुतादिषु पर परिश्रम यश श्रियामेवाऽर्थे न त्वात्यन्तिकसिद्धये भवति। ननु अच्युतभावःकेन स्या दत्राऽऽह - अविस्मृतिरिति। गुणानुवादश्रवणादिभिरुद्भूताच्युतभक्तेः पुंसः श्रीधरपादपद्मयोः अविस्मृतिः निरन्तराभ्यासलक्षणं स्मरणं भवति ॥५३॥

सा कर्तुः किं करोति फलमित्याह - **अविस्मृतिरिति**। मत्तस्याऽन्त करणस्य ॥५४॥

**यूयमबाह्यभावा** अनन्यभक्ताः। अदेवं देवेभ्योऽन्यं नारायणं देव मात्मनि मनसि अधिवेश्य भजतेति यद्यस्मात्तस्मात् भूरिभागा अतिभाग्यवन्तः ॥५५॥

अहश्च भूरिभाग इति ध्वनयति - **अहश्चेति**। भवद्भिरहःशात्मतत्त्वं संस्मारित ममाऽपीदमात्मतत्त्वमाम्नायतः प्राप्त मित्याह - श्रुतमिति। प्रसङ्गोऽप्यनुकूल इत्याह - प्रायेति ॥५६॥

एत द्वः[1]कथितं विप्राः कथनीयोरुकर्मणः।
माहात्म्यं वासुदेवस्य सर्वाऽशुभविनाशनम ॥५७॥

य[2] एवं श्रावयेन्नित्यं यामक्षणमनन्यधीः।
* श्रद्धावान्[3] योऽनुशृणुयात् पुनात्यात्मानमेव सः ॥५८॥

द्वादश्यामेकादश्यां वा[4] शृण्व न्नायुष्यवा न्भवेत्।
पठत्यनश्नन्[5] प्रयतः[6] पूतो भवति पातकी ॥५९॥

पुष्करे मधुरायाश्च[8] द्वारवत्यां यतात्मवान्।
उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥६०॥

देवतामुनयस्सिद्धाः पितरो[9] मनवो[9] नृपाः।
यच्छन्ति कामान्[10] गृणतः शृण्वतो यत्र[11]ऽत कीर्तिताः[11] ॥६१॥

1 W विष्णोः , 2 A य एतच्छ्रा' H V य इदं श्रा' M Ma यश्च मश्रा' * An additional half verse is found only in H V Editions श्लोकमेकं तदर्धं वा पादं पादार्धमेव वा , 3 M Ma यश्च शृ' 4 W च 5 H V पठदनश्नन् M Ma पठन्नश्नन् W पाठत्यनन्य 6 A B G J नतो 7 A B G J M Ma 'त्यपातकी H V 'ति किल्बिषी 8 A B G J M Ma 'थु' 9--9 W ऋषय पितरो 10 M Ma बहून्नान् 11 11 A B G J यस्य कीर्तनात् H V यत्र कीर्तिताः

**ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविन्दते।**
***[1] मधुकुल्या घृतकुल्याः पयःकुल्याश्च तत्फलम् ॥६२॥**

**पुराणसंहितामेतामधीत्य [illegible]यतो द्विजः।**
**[1]प्रोक्तं भगवता [2]यत्तु [3]तत्पदं परमं[3] व्रजेत् ॥६३॥**

**विप्रोऽधीत्याऽऽप्नुयात् [4]प्रज्ञां [5]राजन्योऽम्बुधिमेखलाम्।**
**[6]वैश्यो निधिपतित्वञ्च शूद्रः शुध्येत पातकात् ॥६४॥**

**श्रीध०** एतत्पुराणकीर्तनादिफलं प्रपञ्चयितुमाह - **एतदिति** अष्टभिः ॥५७॥

**य इति**। यामक्षणं यामं क्षणञ्चेत्यर्थः। आत्मान मेव साक्षात्पुनाति, न तु [7]स्नानादिव देहमात्रम् ॥५८-६१॥

**ऋच इति**। ऋगाद्यधीत्य द्विजो मधुकुल्यादि यदनुविन्दते तत्फल मेतां [8]पठित्वा अनुविन्दत इति ॥६२॥

**पुराणमिति**। किञ्च - प्रोक्तमिति॥६३॥

**विप्र इति**। राजन्य उदधिमेखलाम् पृथ्वीम् इति सन्धिरार्षः ॥६८॥

**वीर०** एत[illegible]गणकीर्तनादिफलं प्रपञ्चयति - अष्टभिः **एतदिति**। कथनीयानि उरूणि अपरिमितानि कर्माणि चेष्टितानि यस्य तस्य विष्णोर्वासुद[illegible] [illegible]त्म्यप्रकाशकं वो युष्मभ्यं कथितमेतत्पुराणं सर्वाशुभविनाश[9]कं कीर्तयतां सर्वामङ्गल विघातकम् ॥५७॥

श्रवणफलमाह - **य एव मिति**। यामं [10]क्षणञ्चेत्यर्थः। स आत्मानं पुनात्येव ॥५८॥

कालविशेषयोगात्फलविशेषानाह - **द्वादश्या मिति**। यः पातक्यपि प्रयतः समहितचित्तः अनन्यः प्रयोजनान्तररहितस्सन् [11]पठति स पूतो भवति। अनश्नन्निति पाठान्तरम् ॥५९॥

**पुष्कर इति**। यतात्मवान् समाहितमनाः ॥६०॥

सर्वफलसाधनत्वं वदन् फलदानाह-देवतादय इति। येऽत्र पुराणेऽनुकीर्तिताः ते देवादयः गृणतः कथयतः शृण्वतो वा पुरुषस्य कामानिष्टार्थन् यच्छन्ति देवताद्यन्तर्यामी भगवान् यच्छतीति भावः ॥६१॥

---

*1 The following half verse is found only in H V Editions Thus तत्फलं यदवाप्नोति शृण्वश्चेतां तु संहिताम्।. 1 M Ma प्रोक्तां. 2 H V तेन M Ma विष्णोः. 3--3 H V यत्परं तत्पदं. 4 H V राज्ञां. 5 A B G H J V °न्योदधि. 6 H V धनसमृद्धिञ्च. 7 H V °हादि°. 8 H V अधीत्य. 9 W °नं. 10 W °णं वेत्य°. 11 W. पठेत्

फलातिशयमाह - **ऋच** इति। वेदत्रयमधीत्य यत्फलं प्राप्नुयात् मधुकुल्यादिभ्यो यत्फलं मध्वादिप्रवाह बुक्तान्नदानात् यत्फलमित्यर्थः। तत्फलं प्राप्नुयात् ॥६२॥

किञ्च, एतां पुराणसंहितामधीत्य यद्भगवतो विष्णोः परमं पदं प्रोक्तं प्रतिपादितं तद्व्रजेत्प्राप्नुयात् ॥६३॥

अधिकारानुरूपान् फलविशेषानाह - **विप्र** इति। राजन्यः अम्बुधिमेखलां पृथ्वीं, शूद्रः श्रुत्वा पातकात् मुच्यत इत्यर्थः ॥६४॥

**विज०** यामं क्षणं च नान्यानन्तरितार्था द्वितीया आत्मानं मनः ॥५७,५८॥

कालविशेषमाह - **द्वादश्यामिति** ॥५९॥

देश विशेषमाह - **पुष्कर** इति। पुष्करे वराहक्षेत्रे, भयात् संसारभयात् ॥६०॥

अत्र ये देवादयः कीर्तिताः तेऽपि संहितापाठादि कुर्वतोऽभीष्टानि ददतीत्याह - **देवता** इति ॥६१॥

किञ्च, ऋगादीनि अधीत्य यत्फलं स्यात् तदेतत्संहितां अधीत्य स्यादित्याह - **ऋच** इति। मधुकुल्या मधुनद्यः, मधुनद्यादिकथनं सुखविशेषार्थम् ॥६२॥

न केवलं ऐहिकं फलं[1] किन्तु मुक्तिरपीति कथयति - **पुराणेति** । यद्विष्णोः परमं पदम् तद्व्रजेत् ॥६३॥

अम्बुधिमेखलां भूमिम् ॥६४॥

**कलिमलसंहति[2]कालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम् ।**
**इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसङ्गैः ॥६५॥**

*** तमहमजमनन्तमात्मतत्त्वं[3] जगदुदयस्थितिसंयमात्मशक्तिम्।**
**द्युपतिभिरजशक्रशङ्कराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि ॥६६॥**

**△ उपचितनवशक्तिभिः स्व आत्मन्युपरचितस्थिरजङ्गमालयाय[4]।**
**भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमस्सनातनाय ॥६७॥**

**○ स्वसुखनिभृतचेता स्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसार स्तदीयम्।**
**व्यतनुत कृपया यस्तत्त्वदीपं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥६८॥**

---

1. M.Ma omit फलं, 2 M Ma संसृति * अयं श्लोकः M Ma प्रकाशयोः सप्तषष्टितमत्वेन मुद्रितः। 3 M Ma तत्त्व, △ अयं श्लोकः M Ma प्रकाशयोः अष्टषष्टितमत्वेन मुद्रितः। 4 M.Ma मपालनाय, ○ अयं श्लोकः M Ma प्रकाशयोः षट्षष्टि। W प्रकाशे अशीति सङ्ख्यया अङ्कित तद्व्याख्या च तत्रैव अस्ति। W.. प्रकाशे द्वादशोऽध्यायः अत्र समाप्तिं न नीतः, अपि तु A B G J M Ma प्रकाशस्थित त्रयोदशोऽध्याय द्वादशाध्यायोत्तरभागत्वेन स्वीकृतः। तथा च W प्रकाशे द्वादशस्कन्धे द्वादशैवाध्यायाः इति परिगणिताः।

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्या अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
द्वादशस्कन्धे द्वादशोऽध्यायः ॥१२॥

**श्रीध०** अस्य पुराणस्यैवं प्रभावातिरेके कारणमाह - **कलिमलेति**। कलिमलानां संहतिं समूहं कालयति विनाशयतीति तथा। इतरत्र शास्त्रान्तरे ॥६५॥

शास्त्रप्रतिपादितं भगवन्तं नमस्करोति **तमिति** द्वाभ्याम्। जगदुदयस्थितिसंयमात्मनो रज आदय शक्तयो यस्य तम्। द्युपतिभिर्देवैरपि दुरवसितः[1] अविज्ञातः स्तवः स्तोत्रं यस्य तम् ॥६६॥

**उपचितेति**। उपचिताभिः उद्रिक्ताभिर्नवशक्तिभिः प्रकृतिपुरुष महदहङ्कार पञ्च[2]तन्मात्ररूपाभिः स्वे आत्मन्येव उपरचितं स्थिरं जङ्गमञ्च आलयो यस्य तस्मै भगवते ॥६७॥

श्रीगुरुं नमस्करोति **स्वसुखेति**। स्वसुखेनैव निभृतं पूर्णं चेतो यस्य सः। तेनैव व्युदस्तोऽन्यस्मिन् भावो यस्य तथाभूतोऽपि अजितस्य [3]श्रीकृष्णरुचिराभिः लीलाभिः आकृष्टः सारः स्वमुखगतं स्थैर्यं यस्य सः। तत्त्वदीपं परमार्थप्रकाशकं श्रीभागवतं [4]पुराणं यो व्यतनुत नतोऽस्मीति ॥६८॥

इति श्रीमद्भागवते द्वादशस्कन्धे
श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां द्वादशोऽध्यायः ॥१२॥

**वीर०** एतत्प्रबन्धस्योक्तविध प्रभावातिशयकारणं प्रबन्धान्तर वैलक्षण्यमाह - **कलीति**। कलिमलानां संहतिं कालयति विनाशयतीति तथा। सोऽखिलाना मीश्वरो हरिरितरत्र राजसादिप्रबन्धान्तरेषु अभीक्ष्णं पुनः पुनः न गीयते। अत्र तु तत्तत्कथाप्रसङ्गै रनुपदं पठितः प्रतिपादितः ॥६५॥

एतत्प्रबन्धप्रतिपादितं भगवन्तं नमस्करोति द्वाभ्याम् - **तमिति**। जगदुदयस्थितिलया जगदुदयादि हेतवः आत्मनः रजआदयश्शक्तयो यस्य तं, देवैरप्यनवसितः स्तवः स्तोत्रं यस्य तं [5]नतोऽस्मि ॥६६॥

किञ्च उपचिताभिः ऋद्धियुक्ताभिः कालप्रकृतिमहदहङ्कार पञ्चभूतात्[6]मिकाभिः नवभिः शक्ति[6]भिः आत्मन्येव उपरचिताः [7]स्थिराः स्थावरा जङ्गमाश्च आलयो यस्य तस्मै, उपलब्धिमात्र धाम्ने जाड्याप्रसङ्गरहित ज्ञानात्मकतेजःस्वरूपाय, सुरऋषभाय

---

1. A.B.J अज्ञातः, 2 A.B.J omit पञ्च, 3 A.B.J omit श्रीकृष्णस्य, 4 A.B.J omit पुराणं, 5 W omits नतोऽस्मि।; 6-6 A.B °का नवशक्तयः ताभिः, 7 W omits स्थावरा·

